प्राच्यविद्या-ग्रन्थमालाया द्वितीयं रत्नम्

नन्दपण्डितविरचिता

# दत्तकमीमांसा

मधुसूदनी-विवृतिसहिता



सम्पादकः

आचार्य-राजेन्द्रप्रसादपाण्डेयः

वेदकर्मकाण्डधर्मशास्त्राचार्यः
काशीहिन्दूविश्वविद्यालयस्य प्राच्यविद्याधर्मविज्ञानसंकाये
धर्मशास्त्रमीमांसाविभागस्याचार्याध्यक्षः

प्रकाशकः

काशी हिन्दू विश्वविद्यालयः
वाराणसी–५

Rs 42/-

प्राच्यविद्या-ग्रन्थमालाया द्वितीयं रत्नम्

नन्दपण्डितविरचिता

# द त्त क मी मां सा

मधुसूदनी-विवृतिसहिता




सम्पादकः

आचार्य-राजेन्द्रप्रसादपाण्डेयः

वेदकर्मकाण्डधर्मशास्त्राचार्यः

काशीहिन्दूविश्वविद्यालयस्य प्राच्यविद्याधर्मविज्ञानसंकाये

धर्मशास्त्रमीमांसाविभागस्याचार्याध्यक्षः



प्रकाशकः

का शी हि न्दू वि श्व वि द्या ल यः

वाराणसी–५

Prācyavidyā Series: Second Issue

# DATTAKA-MĪMĀMSĀ

## of

## Nanda Paṇḍita

With Commentary of Madhusūdana
and notes of V. V. Deshapandeya




*Critically Edited*

*by*

Prof. Rājendra Prāsāda Pāṇḍeya
Ācārya in Veda-Karmakāṇḍa and Dharmaśāstra
Professor & Head, Deptt. of Dharmaśāstra & Mīmāmsā
**Faculty of Oriental Learning & Theology**
**Banaras Hindu University**

*Publisher*

**BANARAS HINDU UNIVERSITY**

**VARANASI—221005**

**INDIA**

# प्रास्ताविकम्

अथेदमुपस्थाप्यते 'दत्तकमीमांसा' नाम धर्मशास्त्रम्। प्राच्यविद्या-धर्मविज्ञानसंकायस्य दुर्लभग्रन्थप्रकाशनयोजनायामसौ द्वितीयो ग्रन्थः। संकायस्यास्य मीमांसाधर्मशास्त्रविभागाध्यक्षेण पं० श्रीराजेन्द्रप्रसादपाण्डेयेन संपादित एष ग्रन्थो नूनमेव कल्पेतैवोपकारायेति प्रत्येमि। धर्मतत्त्वविषयेऽस्माकं विचारा अस्माभिः काव्यालङ्कारकारिकायामुपन्यस्ताः। ते तत एवावगन्तव्याः। दत्तकमीमांसा हि धर्मव्यवस्थाङ्गस्य 'दत्तक'-विषयकस्य वादस्य निर्णायको निबन्धः। अत्र सर्वेषां धर्मशास्त्राणां वचनान्युपन्यस्तानि न वा, तत्रापि अधरोत्तरविमर्शो विद्यते न वे-ति गवेषणीयं विद्वद्भिः। तत्रापि दत्तकपदस्य स्थाने गृहीतक-पदमप्रयुञ्जानानां को वाभिप्रायः संख्यावतामाचार्याणामिति निश्चेतव्यमेव। जन्मशुद्धिसिद्धान्तमनुपालयतां सानातनानां दत्तकशुद्धि-निश्चय आवश्यकः। तत्र को वा मार्ग इत्यपि विचारणीयमेव। विद्वांसोऽत्रावधास्यन्ते विधास्यन्ते च भगवन्तं श्रौतं धर्मं प्रशस्ततरमिति दृढं प्रत्येमि—

रेवाप्रसादो द्विवेदी
प्रमुखः
प्राच्यविद्याधर्मविज्ञानसंकायस्य

चैत्रकृष्णा—३, बुधः, वि० सं० २०३६
दिनाङ्कः ४-३-१९८०

❋ श्रीविश्वनाथो विजयते ❋

# भूमिका

साम्बं शिवं शिवकुमारमपारसारं
ध्यायन्नभीष्टफलदं च गुरुं सुधीन्द्रम् ।
लोकोपकारनिरतं वरर्णायवृत्तं
ग्रन्थं सनातनमताय पुरस्करोमि ॥ १ ॥

श्रीनन्दपण्डितविनिर्मितदत्तकस्य
मीमांसया विलसितं ललितं सदर्थैः ।
सम्पादयत्यखिलदोषनिरासपूर्वं
राजेन्द्र एष सुधियां परितोषहेतोः ॥ २ ॥

अथेयमुपस्थाप्यते नन्दपण्डितविरचितो दत्तकमीमांसा नाम धर्मशास्त्रग्रन्थः । देशोऽयं धर्मप्रधानो धर्माविरोधेनैव राजनीतिं व्यवहारञ्च स्वीकरोति । तत्र धर्मशास्त्रमेव स्मृतिशब्देन व्यवह्रियते 'धर्मशास्त्रं तु वै स्मृति'-रिति । आचारो व्यवहारः प्रायश्चित्तं चेति त्रयो हि धर्मशास्त्रस्य विषयाः । तत्रापि व्यवहारो मध्यमणिन्यायेनावतिष्ठते । अत एव याज्ञवल्क्येन तत्स्मृतौ आचार-व्यवहार-प्रायश्चित्तरूपविषयभेदेन अध्यायत्रयं निबद्धम् । उपनिबद्धश्च व्यवहाराध्यायः आचारप्रायश्चित्तयोर्मध्ये । मानवे धर्मशास्त्रे द्वादशभिरध्यायैः । एते एव विषयाः सुविशदं प्रतिपादिताः । व्यवहारेऽपि अष्टादशपदानि प्रसिद्धानि । तेषु दायभागोऽन्यतमः । तत्रौरसपुत्राभावे दत्तकविधिर्विचार्य्यते । ( १ ) तत्र च दत्तकपुत्रः कः ?, ( २ ) कीदृशः, ( ३ ) कथञ्च ग्राह्यः इति त्रितयं निरूपणीयम् । नन्दपण्डितः इमं विषयं प्रारभते । तत्र ( १ ) दत्तकग्रहणे कोऽवाधिकारी ? ( २ ) केन दत्तको देयः ? ( ३ ) को वा दत्तको भवितुमर्हति ? (४) दत्तकग्रहणसमये के के संस्काराः अपेक्षिताः आवश्यकाश्च, (५) दत्तकविधेः कावश्यकता, ( ६ ) द्व्यामुष्यायणः कः, (७) कृत्रिमपुत्रः कः, (८) दत्तकः कीदृशो ग्राह्यः ? ( ९ ) पुत्रदानाधिकारिणः के ? ( १० ) दत्तकत्वेन ग्राह्यस्य पुत्रस्य वयः किम् ? तस्य

कीदृशाः संस्काराः प्रतिग्रहीतृपित्रैव अनुष्ठीयन्ते ? ( ११ ) विरुद्धसम्बन्धः कः ? ( १२ ) संस्कारैः पुत्रत्वं कथम् ? ( १३ ) दत्तकस्य धनग्रहणाधिकारः कीदृशः ? (१४) दत्तकसापिण्ड्यनिर्णयः द्व्यामुष्यायणसापिण्ड्यनिर्णयः, (१५) दत्तकदुहिता, क्षेत्रजादिदुहितरश्च, ( १६ ) दत्तकाशौचनिर्णयः, (१७) औरसे सति दत्तकस्य दायाधिकारः—इत्येते विषया अनाकुलं तत्तन्महर्षीणां वचनान्युदाहृत्य यथायथमत्र प्रतिपादिताः। अत्र स्थालीपुलाकन्यायेन द्वित्राणि स्थलान्युपस्थाप्यन्ते। यथा—

( १ ) हेतुरित्येकत्वनिर्देशो मिलितानामेषां निमित्तत्वं न प्रत्येकमिति गमयति। अत एकैकार्थं न पृथक् पृथक् पुत्रीकरणं किन्तु सर्वार्थमेकमेव पुत्रीकरणमित्यर्थः (पृष्ठ ३६)।

( २ ) 'असंसृष्ट्यपि पादघातसंसृष्टो नान्यमातृजः' इत्यत्र संसृष्टपदस्य सोदरपरत्वेन संसृष्टिपरत्वेन च विज्ञानेश्वराचार्यैर्व्याख्यातत्वादिहापि तथैवेति न दोषः। (पृ० ५९)

( ३ ) ततश्च कृतत्वेन प्रथमं धनपिण्डभागित्वमकृतत्वेन च स्वस्वस्थानमिति। विष्णुवचनन्तु पूर्वपूर्वपरिगणितपुत्रसद्भावविषयमिति न कापि विरोधः। (पृ० ७३)

( ४ ) तस्मादनुमानविधयैव वाक्यद्वयव्याख्या साधीयसीति। (पृ० ८४)

( ५ ) तस्माद् दत्तकादिषु संस्कारनिमित्तमेव पुत्रत्वमिति सिद्धम्। दानप्रतिग्रहहोमाद्यन्यतमाभावे तु पुत्रत्वाभाव एवेति। (पृ० १३२)

एषा सर्वत्र ग्रन्थकर्तुः विषयप्रतिपादनशैली। नन्दपण्डितः विरुद्धतया प्रतीयमानानां वाक्यनामपि सामञ्जस्यं सम्पादयति। यथा कर्मणां नित्यनैमित्तिककाम्यानां स्वरूपवर्णनेन दत्तकविधेरुभयरूपत्वं प्रतिपादयति। 'स्वयं पुत्रप्रतिनिधीनाहुः' इति वाक्यमुदाहृत्य योऽयं पुत्रप्रतिनिधिर्विधीयते, स किं पुत्रोत्पादनविधौ पिण्डोदकादिविधौ वेति साधकबाधकप्रमाणाभ्यां पक्षद्वयमुद्भाव्य 'पुत्रेण लोकाञ्जयति' इत्यादिविधौ 'नापुत्रस्य लोकोऽस्ति' इत्याद्यर्थवादानुगृहीते, 'पुत्रापचारे क्षेत्रजाद्येकादशविधः प्रतिनिधिर्विधीयते' इत्यादिना सामञ्जस्यमुपपादयति। अतः लोकपुत्रयोः साध्यसाधनभावस्य निर्वाहः। अवान्तरव्यापारभूतक्रियापेक्षायां पिण्डोदकक्रियाहेतोरित्युच्यते। तस्मात् पुत्रकृत-क्रियानन्यलोकविशेषसिद्ध्यै पुत्रप्रतिनिधिः आवश्यक इति भाष्यकृता मेधातिथिना उक्तम्। तत्र च औरसस्य प्रथमकल्पिकत्ववचनं तन्न व्यवहारोपयोगी, किन्तु उपकारातिशयाय, यथा औरसः भूयांसं शक्नोति उपकर्तुं न तथा इतर इति। ततश्च येन केनापि प्रयत्नेन पुत्रप्रतिनिधिः कार्यः।

नन्दपण्डितमतेन दत्तकग्रहणे केषामधिकारो नास्ति।

स्त्रीणां दत्तकस्वीकारे अधिकारोऽस्ति न वेति विचारप्रसङ्गोऽपि द्रष्टव्यः। वाचस्पतिना व्याहृतिभिर्हुत्वा अदूरबान्धवं बन्धुसन्निकृष्टं प्रतिगृह्णीयादिति, विधिसमानकर्तृकताबोधकक्त्वाप्रतिश्रवणात् होमप्रतिग्रहसिद्धिः। स्त्रीणां तु होमानधिकारित्वात् प्रतिग्रह इति। परन्तु इदमविचारितरमणीयम्। शौनकस्तु आचार्यवरणाम्नानादित्युक्तवान्।

'आचार्यं धर्मसंयुक्तं ब्राह्मणं वेदपारगम्', 'मधुपर्केण संपूज्य' इति वचनात् ब्राह्मणाचार्यमुखेन होमसिद्धावपि प्रतिग्रहमंत्रानधिकारात् स्त्रीवत् तुरीयवर्णस्यापि पुत्रपरिग्रहानधिकारः इति पक्षोऽपि निरस्तः। यतोहि—विधवानां स्त्रीणां यथा विनियोगानधिकारः इति समर्थनात् न पुत्रपरिग्रहे अधिकार इति।

स्त्रीशूद्रानमन्त्रकम् इति प्रतिषेधः। किञ्च पुत्रपरिग्रहविधौ अपुत्रेणैव कर्त्तव्यः इति, अपुत्रेणेति पुंस्त्वश्रवणात् न स्त्रिया अधिकार इति गम्यते, उपादेयविशेषणस्य विवक्षितत्वात् एवं च विधवायाः भर्त्तृभावेन अनुज्ञानासम्भवात् निर्निमित्तकप्रति· प्रसवाप्रवृत्त्या प्रापकान्तराभावाच्च स्त्रियोऽनधिकार इति सर्ववादिसम्प्रतिपन्नमेव।

सापिण्ड्यविषये दत्तकमीमांसाकर्तुः मतम्।

अत्र साविण्ड्यशब्देन पिण्डान्वयरूपः अशौचा—विवाहित्वप्रयोजकं त्रिपुरुषमेव साविण्ड्य विवक्षितम्। मत्स्यपुराणे तु साविण्ड्यं साप्तपौरुषमित्युक्तम्—

लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः।
पिण्डदः सप्तमस्तेषां साविण्डं साप्तपौरुषम्॥

इति मत्स्यविहिता साविण्डता साप्तपौरुषी। इयञ्च तस्य अपवादरूपा। अतः सामान्यरूपाया तस्याः विशेषेणापवादो भवति उत्सर्गापवादन्यायात्। एतदेवाभिप्रेत्य संग्रहकारेण "दत्तकानां तु पुत्राणां सापिण्ड्यं स्यात् त्रिपौरुषम्। जनकस्य कुले तद्वद् ग्रहीतुरिति धारणा"। इत्यत्र जनककुले प्रतिग्रहीतृकुले च कुलद्वयेऽपि त्रिपुरुषसापिण्ड्यविधानं द्व्यामुष्यायणाभिप्रायमिति सापिण्ड्यमेकपिण्डान्वयरूपमुपपाद्य स्वयमुपसंहरति नन्दपण्डितः—शुद्धदत्तकस्य प्रतिग्रहीतृकुले त्रिपुरुषं पिण्डान्वयरूपं सापिण्ड्यं जनककुले साप्तपौरुषमवयवान्वयरूपमित्यलं प्रपञ्चेन। अयमेवार्थः सत्याषाढेन उक्तः—नित्यानां द्व्यामुष्यायणानां द्वयोः' (पृ० १५१) इति सूत्रेण तत्र भाष्यकारः

शबरस्वामी एवं व्याख्यातवान् 'दत्तकादीनान्तु व्यामुष्यायणवत्' इति। एवं तत्र तत्र विचारप्रसङ्गे आपाततः विरुद्धत्वेन प्रतिभासमानानाम्—

दौहित्रो भागिनेयश्च शूद्राणां विहितः सुतः।
ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित्॥ (पृ० ११८)

इति वाक्यमुदाहृत्य अयं विचारः कृतः भागिनेयस्य त्रैवर्णिके विषयत्वाभावे तयोः शूद्रविषयत्वमुच्यतामिति। न वक्तव्यं तुरीयविषयत्वात्, इत्यनेन एवंसिद्धौ दौहित्रभागिनेयपदोपादानवैयर्थ्यात् अविवक्षायामुभयाविवक्षातः भागिनेयाविवक्षायाः लघुत्वात्। तस्मात् यथोक्तमेव साधु। एतेन भागिनेयपदं दौहित्रमात्रत्वस्योपलक्षणमिति स्पष्टमेव सिद्धम्।

दौहित्रपरिग्रहस्य पौराणिकलिङ्गोपबृंहितत्वम्।

दत्तकपरिग्रहवत् दौहित्रप्रतिनिधिः लिङ्गपुराणे उपलभ्यते। तत्र दत्तकविषये रामायणे बालकाण्डे दशरथं प्रति सुमन्त्रस्य सनत्कुमारोक्तभविष्यानुवादः। तत्र उपक्रमोपसंहारैक्यपदालोचनया औरसपुत्रो दत्तकपुत्रो भवतीति गम्यते।

स्कन्दपुराणे क्रीतायां लिङ्गं दृश्यते, एवं लिङ्गपुराणेऽपि हरिवंशे शूद्रापत्यगणनायां लिङ्गानि दृश्यन्ते। अपविद्धायामपि महाभारते आदिपर्वणि दुष्यन्त-शकुन्तलासम्वादे अनुवादः। इमानि वाक्यानि ग्रन्थशरीरे तत्रत्यवचनोपष्टम्भेन उपपादितानीति न पिष्टपेषणं क्रियते।

कालिकापुराणेपि वेतालभैरवयोः शंकरात्मजयोः एकेन पुत्रेण उभयोः पुत्रवत्त्वलिङ्गं दृश्यते। तच्च ग्रन्थशरीरे एव सुविशदं भविष्यतीति नात्र लिख्यते। एवम् अन्येपि विषयाः तत्र तत्र विचारिताः। इदमेव नन्दपण्डितस्य दत्तकमीमांसाकर्त्तुः पाण्डित्यं निकषोपलरूपमित्यत्र नास्ति सन्देहलेशोऽपि।

अत्रत्यानां मीमांसाविषयाणां स्थालीपुलाकन्यायेन निर्देशः।

एकपुत्रस्य दानं प्रतिग्रहो वा वसिष्ठस्मृत्या अन्यैश्च स्मार्तवचनैः सुस्पष्टमेव अवगम्यते। मनुवचने दाने पित्रोः साहित्यं प्रतीयते। याज्ञवल्क्यवचने तु उभयोः स्वातन्त्र्यं स्मर्यते। तत्र उपनयनात् पूर्व ग्रहणं मुख्यम्। दत्तकग्रहणानन्तरं संस्कारान् विधाय उपनेतव्यः इति मर्यादा। एवंरूपेण स्थालीपुलाकन्यायेन नन्दपण्डितव्याख्यायाः द्वित्राणि स्थलानि समुदाहृतानि। ग्रन्थकलेवरगौरवभिया वाक्यार्थनिर्णयोपयोगितया केचन मीमांसाविषया अपि प्रकृतार्थशुद्धये उपपादिताः। ते च केचन अधस्तात्

निर्दिश्यन्ते। षड्विंशतितमे पृष्ठे 'प्रतिनिधिशब्दश्चोभयत्रापि भूम्ना सृष्टीरूपं दधातीतिवत्' इत्युक्तं नन्दपण्डितेन। तत्र प्रतिनिधित्वं केषांचिद् वाचनिकमन्येषां तु भूम्ना निर्देशः' भूम्ना = बाहुल्येन। अस्य उदाहरणं सृष्टिरूपं दधतीति। सृष्टिपदघटितमन्त्रकरणकोपधानकर्मीभूतेष्टकाः सृष्टिशब्देन अभिधीयन्ते अर्थात् सृष्टिशब्दोपेताः मन्त्रा इष्टका उपधाने विद्यन्ते, ता इष्टकाः सृष्टिः इत्युच्यन्ते। सृष्टिमान् आसां उपधानो मन्त्र इति विमृश्य तद्वान्सा उपधानः :( पाणिनिसूत्र—४। ४। १२५ )। इति व्याकरणसूत्रसिद्धिप्रक्रियया शब्दोऽयं निष्पद्यते। तत्र सप्तदशमन्त्राः पठिताः। तेषु तेषु मन्त्रेषु प्रयुक्तः। अत्र 'सृज' धातुघटितमन्त्राणां बाहुल्यात् सृष्टिशब्दः सृष्ट्यसृष्टिसमुदाये गौणः। तत्र बाहुल्यं गुणः। गौणीवृत्तेः षण्णिमित्तानि प्रसिद्धानि। तेषु पञ्चमं निमित्तं "भूमा बाहुल्यम्" इत्यर्थः। तद्वत् प्रकृतेऽपि एष्ववयवसम्बन्धाभावः। तेषां वाचनिकं प्रतिनिधित्वम् यथा—क्षेत्रज-पौत्रिकेय-पुत्रिका-कानीन-पौनर्भव सहोदरजगूढजानाम्। क्वचिन्मातृसम्बन्धात् क्वचिद् विकलोभयसम्बन्धात् विकलायतवानेन मुख्यं प्रतिनिधित्वम्। दत्तक-क्रीत-कृत्रिम-दत्तकापविद्धानां वाचनिकं प्रतिनिधित्वमिति। अतः उभयत्रापि प्रतिनिधिशब्दो गौणः। बाहुल्यगुणयोजनेन इति दृष्टान्तार्थः। परन्तु मधुसूदनस्मृतिरत्नेन स्वोपज्ञवृत्तौ भूम्ना उपदधाति उपदिशति इत्यर्थः कृतः। तथाहि, यथा-'न्यायमते नित्यत्वेनाकाशादीनाम् असृष्टत्वेऽपि तस्मादेतस्मादाकाशः सम्भूत इत्यादिश्रुतिवचनात् आकाशादीनां सृष्टत्वोपचारः एवं वाय्वादीनां सृष्टत्वेन न्यायतः सृष्टिरुपदिष्टा इत्युभयार्थता तद्वदित्यर्थः। ( पृ० सं० २६ )" इति व्याख्यायामुक्तं तत्मीमांसापरिशीलनाभावकृतम् इति उपेक्षणीयम् विद्वद्भिरिति।

विरुद्धत्रिकद्वयनिरूपणम्।

विरुद्धत्रिकद्वयापत्तेः, 'ऋतौ भार्यामुपेयात्,' ऋतुगमनेन पुत्रं भावयेत् इति वाक्यार्थः, 'एष वा अनृणो यः पुत्री' इति वा श्रुतिवाक्यात्, 'पुत्रेण लोकाञ्जयति' इति स्मृत्या च पुत्रस्य करणत्वेनान्वयः। एकस्यां भावनायां ऋतुगमनपुत्रकरणयोः पुत्रानृण्ययोः साध्ययोः एकविधमभ्युपगम्यमाने अनन्वयात् विरुद्धत्रिकद्वयापत्तिः।

उद्देश्यत्वोपादेयत्वयोः परस्परं निरूप्यनिरूपकभावसम्बन्धः।

सर्वत्र उद्देश्यविधेयभावस्थले उद्देश्ये उद्देश्यत्वं, प्राधान्यम्, अनुवाद्यत्वं चेति

त्रयमस्ति, एवं विधेयेऽपि विधेयत्वं, गुणत्वम्, उपादेयत्वञ्चेति। उद्देश्यत्वोपादेयत्वयोः परस्परं सम्बन्धः। अर्थात् उद्देश्यनिरूपितत्वं उपादेयत्वम् एव अनुवाद्यत्वविधेयत्वयोः परस्परनिरूप्यनिरूपकभावः बोध्यः। एवं प्राधान्यगुणत्वयोरपि। इदमेव उद्देश्यनिष्ठं त्रिकं विरुद्धविधेयनिष्ठं च त्रिकम, विरुद्धत्रिकद्वयमित्युच्यते। तत्र ऋतुगमनेन पुत्रं भावयेदित्यत्र पुत्रस्य उद्देश्यत्वेन अन्वयः। पुत्रेण लोकाञ्जयति इत्यत्र करणत्वेन अन्वयः। पुत्रेणेति तृतीयाविभक्तिनिर्देशात् उद्देश्यनिष्ठं त्रिकम्, विधेयनिष्ठं त्रिकम्, एकस्मिन्नेव पुत्रे प्रसज्येत। अतः विधिभेदे तु नायं दोषः तथा विधिभेदमङ्गीकृत्य नन्दपण्डितेन विरुद्धत्रिकद्वयापत्तेरिति दूषणं निराकृतम्।

अतएवोक्तं ग्रन्थकर्त्रा आनृण्यमोचिकायां भावनायाम्, अर्थात् पुत्रेण आनृण्यं भावयेत् इत्यत्र भावनायां पुत्रस्य करणतया तस्यापचारे दत्तकादीनां प्रतिनिधित्वं विरुद्ध्यते। सोमस्य अपचारे पूतिकादिवत् यदि सोमं न विन्देत पूतिकानभिषुणुयादिति। अत्र सोमस्य अपचारे यस्य कस्यचिद् सदृशस्य द्रव्यस्य प्राप्तौ वचनात् नियम्यते पूतीकान् अभिषुणुयाद् इति। तथा प्रकृतेपि पुत्रानृण्ययोः साध्यत्वेन अन्वयः न सम्भवति एवं सति विरुद्धत्रिकद्वयापत्तिः स्यात्। तद् दोषपरिहाराय विधिभेदः अभ्युपगन्तव्यः इति ग्रन्थकर्त्तुः आशय इति प्रकृताभिप्रायः।

**एकेन दत्तकपुत्रेण अनेकेषां पुत्रवत्त्वस्य निरूपणम्।**

पुत्रोत्पादनविधेः दत्तकादिविधिः प्रतिनिधिः इति विचार-प्रसङ्गे 'न देवताग्निशब्दक्रियम्' अन्यार्थसंयोगात् इति अधिकारलक्षणस्थं 'जैमिनीयं' सूत्रम् उदधारि नन्दपण्डितेन। अस्य सूत्रस्य अयमर्थः केषां प्रतिनिधिर्भवति ? अदृष्टार्थानां प्रतिनिधिर्न भवतीति मीमांसकमर्यादा। तत्र श्रुतद्रव्यापचारे देवतायाः होमाधिकरणस्याग्ने मन्त्रस्य आरादुपकारककर्मणश्च प्रतिनिधिर्न भवति इति सूत्रार्थः। अस्मिन् सूत्रे क्रियायाः प्रतिनिधिर्निराक्रियते। पिण्डोदकादिक्रियाया अदृष्टार्थत्वात् लुप्तपिण्डोदकक्रिया इत्यत्र पुत्रोत्पादनविधिर्न विवक्ष्यते क्रियाशब्देन किन्तु पिण्डादेकक्रियैव इति। तस्मात् अस्य प्रतिनिधिर्न भवतीति।

**एकेन दत्तकपुत्रेण अनेकेषां पुत्रवत्त्वस्य निरूपणम्।**

एकेन पुत्रेण अनेकेषां पुत्रवत्त्वं बहूनां पुत्रवत्त्वमिति कालिकादिपुराणेषूक्तं वेतालभैरवयोः शंकरात्मजयोः एकेन पुत्रेण उभयोः पुत्रवत्त्वरूपं लिङ्गं दृश्यत इत्युक्तम्।

तत्र मा शङ्का जायेत। इदम् एकस्य अनेकपुत्रत्वं युगपत् उत्पत्स्यते, क्रमेण वा इति द्विधा विकल्पः। तत्र नाऽद्यः युगपत् प्रतिगृह्णीयुः इति विध्यभावात्। नापरः। पूर्वसंस्कारविरुद्धे तत्सजातीयसंस्कारानन्तरानुत्पत्तेः इति पक्षद्वयं निरस्यते (पृ० सं०६४)।

**सत्रन्यायेन प्रत्येकं पुत्रवत्त्वं प्रतिपादितम्।**

सत्रन्यायश्च, यथा—सप्तदशावराश्चतुर्विंशतिपरमाः सत्रमासीरन्निति वत् तत्सर्वशब्दयोर्द्वन्द्वैकशेषेण प्रतिगृहीतृमातृसाहित्यस्यात्र विवक्षितत्वात्। तेन दानमपि सहितेभ्य एव सिध्यति। यथा तुलापुरुषे सहितानामेव ऋत्विजां सम्प्रदानत्वं श्रुतिग्रहीतृत्वं चेति। तदाहुः—

'इत्यावाह्यसुरान्दद्यादृत्विग्भ्यो हेमभूषणम्'

इत्यत्र ऋत्विग्भ्य इति बहुवचनान्मिलितानामेव सम्प्रदानत्वम्। किञ्च युगपत् प्रतिग्रहेण द्रौपदीभार्यावत् अस्य विलक्षणस्यैवानेकपुत्रत्वस्य प्रसिद्धव्यामुष्यायणत्ववत्स्वीकारात्।

महाभारतीयादिपर्वणि विवाहप्रसङ्गे क्रमेणैव युधिष्ठरादीनां द्रौपदीपाणिग्रहणश्रवणात्। मूलवृत्त्योः अयं विषयः सुविशदं प्रतिपादित इति। अनेकसंदिग्धवाक्यानां विचारप्रसङ्गे मीमांसाविचारपद्धत्या शङ्कासमाधानाभ्यां वाक्यार्थः निर्णीतः।

अतोऽयं ग्रन्थः दत्तकचन्द्रिकावत् सर्वैः भारतीयैः धर्मैकजीवातुभिः अवश्यमङ्गीकर्त्तव्यः, तदनुसारेणानुष्ठेयश्च। अत्र बहवो विषया विचार्य निर्णीताः। यद्यपि भारतीयव्यवहारालयेषु केचन नियमाः धर्मशास्त्रानुकूलाः दृश्यन्ते, परन्तु प्रायशः तत्तत्प्रदेशीयव्यवहारालयस्य निर्णयानुसारेणैव अन्येषु प्रदेशेषु निर्णयत्वेन स्वीक्रियन्ते। तत्र भूयान् विवादविषयो दृश्यते। प्राचीनविषयैः सह सोऽपि टीकाकारैः सम्पादकैश्च तत्र तत्र संनिवेशित इति नात्र विविच्यते।

ग्रन्थकर्त्तुर्नन्दपण्डितस्य वंश-वर्णनम् ।




देशकालादिनिर्देशः ।

दत्तकमीमांसायाः कर्त्तुर्नन्दपण्डितस्य पूर्वजाः बदेरग्रामस्य निवासिनः । तद्वंशीयो मूलपुरुषो लक्ष्मीधरः । तस्मात् षष्ठ्यां वंशपीठिकायां नन्दपण्डितः अजनिष्ट । लक्ष्मीधरपण्डितः नैरन्तर्येण काश्यां वस्तुं गतोऽभूत् । अस्य वंशजानां धर्माधिकारी इति विरुदः आसीत् । काश्यां नन्दपण्डितात् नवमवंशपीठिकापुरुषः जीवदवस्थ आसीत् । तेन वाराणस्यां दत्तकमीमांसाग्रन्थः संशोध्य मुद्रापितः । अद्यापि तद्वंशजाः धर्माधिकारी इत्युपपदं स्वनाम्नः पूर्वं लापयन्ति ।

अस्य कालः ।

वैजयन्त्याः उपसंहारपद्ये—

वर्षे विक्रमभास्करस्य गणिते नन्दद्विषद्भूमिभिः
पूर्णे कार्त्तिकमासि वृश्चिकगते भानौ वृषस्थे विधौ ।
काश्यां केशवनायकस्य नृपते राज्ञामवाप्य स्मृते-
र्विष्णोर्व्याकृतिमाचकार विमलां श्रीनन्दशर्मा सुधीः ॥

विष्णुधर्मसूत्रवैजयन्तीटीकाग्रन्थस्य उपसंहारे उपर्युक्तं पद्यं दृश्यते । वैक्रमे

१६७९ तमे वर्षे कार्तिकपौर्णमास्यां काशीक्षेत्रे वैजयन्तीनाम्नी टीका पूर्णाऽभूत्। सोऽसौ नन्दपण्डितः विक्रमसंवत् १६३७ त आरभ्य १६८७ ( ई० १५८०-१६३० ) पर्यन्तमध्रियत। अयमेव नन्दपण्डितस्य रचनाकाल इति पण्डित वी० कृष्णमाचारी-महोदयेन भारतरत्न पी० वी० काणेमहोदयेन च अङ्गीकृतम्। वयमपि तमेव काल-मनुमन्यामहे यावद्बाधकोपनिपातम्।

अस्य पितुर्नाम रामपण्डितः। तस्यैव विनायकपण्डित इत्यपि नामान्तरमासीत्। द्वेधापि पण्डितसमाजे व्यवहारो दृश्यते। नन्दपण्डितस्य धर्मशास्त्रे बहवो ग्रन्थाः श्रूयन्ते। ते च यथा—( १ ) विष्णुधर्मसूत्रे वैजयन्ती टीका, ( २ ) हरिवंशविलासः, ( ३ ) ज्योतिषशास्त्रसमुच्चयः, ( ४ ) काशीप्रकाशः, ( ५ ) माधवानन्दकाव्यम्, (६) मासमीमांसा, ( ७ ) नवरात्रप्रदीपः, (८) विज्ञानेश्वरकृतमिताक्षरायां प्रमिताक्षरा, ( ९ ) सापिण्ड्यनिर्णयः, ( १० ) स्मार्तसमुच्चयः, ( ११ ) श्राद्धकल्पलता, (१२) श्राद्ध-मीमांसा, ( १३ ) शुद्धिचन्द्रिका, ( १४ ) शूद्राधिकारमीमांसा, ( १५ ) तीर्थकल्पलता, (१६) पराशरस्मृतौ विद्वन्मनोहरा व्याख्या, (१७) विनायकशान्तिपद्धतिः, (१८) स्मृति-सिन्धुः, ( १९ ) तत्त्वमुक्तावली। स्मृतिसिन्धुः इति नामधेयः अतीव विशालग्रन्थः इति हेतोः तदन्तःपातिनः मुख्य-मुख्यविषयान् सारांशरूपेण सुसंगतान् संगृह्य तत्त्व-मुक्तावलीनाम्ना तेनैव संगृहीतः।

अद्यत्वे तु व्यवहारालये विद्वत्समाजे च दत्तकमीमांसाग्रन्थकर्तृत्वेनैव नन्द-पण्डितः प्रसिद्धः। दत्तकमीमांसायां वैजयन्त्याः उल्लेखो दृश्यते, यथा—"विशेषान्तर-मस्मत्कृतायां विष्णुस्मृतिटीकायां केशववैजयन्त्यामवधेयम्" ( पृ० १६९ )। विष्णु-स्मृतेः टीका केशवतम्मणनायकस्य प्रोत्साहनेन प्रणीता। अतएव "केशववैजयन्ती" इति नाम्ना व्यवहारः कृतः।

एवमेव विष्णुस्मृतिटीकायां 'विवृतञ्चैतत् पराशरस्मृतिविवृतौ विद्वन्मनोहरायां दत्तकमीमांसायां चास्माभिरिति नेह प्रतन्यते"। ( द्र०—विष्णुस्मृतिः—पण्डित वी० कृष्णमाचारी-पृ० सं०-२७० ) एवम् उभयोर्नामनिर्देशः कृतोऽस्ति' तेन न भ्रमितव्यम्।

आभारप्रदर्शनम्।

यद्यपि इयं दत्तकमीमांसा मञ्जरीव्याख्यासहिता आनन्दाश्रममुद्रणालये मारुलकरशंकरशास्त्रिणा सम्पादिता किन्तु अस्मिन् संस्करणे विद्वद्वरेण्येन मधुसूदन-स्मृतिरत्नेन विरचितया विवृत्याऽऽपि संयोजिता। इदमेवास्य वैशिष्ट्यं विद्यते। अद्यत्वे अयं ग्रन्थः धर्मशास्त्राचार्यपरीक्षासु यत्र तत्र निवेशितोऽस्ति। अस्य अलाभेन

अध्यापकानामध्येतॄणाञ्च महान् क्लेशो भवति स्म। तद्दूरीकरणाय काशीहिन्दू-विश्वविद्यालयान्तर्गतप्राच्यविद्याधर्मविज्ञानसंकायस्यमया यथामति संशोध्य प्रकाश्यतेऽयं ग्रन्थः। प्रकाशनयोजनायां एदर्थं विश्वविद्यालयस्यास्य कुलपतयः डा० श्री हरिनारायणमहोदया विशेषतो धन्यवादार्हा इति तान् प्रति कृतज्ञतां प्रकटयामि। अस्य संकायस्य भूतपूर्वप्रमुखयोः डा० श्रीराजमोहन उपाध्यायमहोदय डा०श्रीसीतारामशास्त्रि-महोदययो र्नितान्तं कृतज्ञोऽस्मि याभ्यामिदं प्रकाशनकार्यं समर्थ्याहं भृशमनुगृहीतः। वर्तमानसंकायप्रमुखाणां डा०श्रीरेवाप्रसादद्विवेदिनां कार्यकाले प्रस्तुतस्य ग्रन्थस्य प्रकाशनकार्यं सम्पन्नं जातं तैरेवास्यग्रन्थस्य कृतेप्रास्ताविकंविलिख्य ग्रन्थस्यगौरवं वर्द्धितमिति तदीयस्य सत्प्रयासस्यैवेदं फलमिति मन्यमानस्तान्प्रति कृतज्ञतामावहामि।

एतस्य ग्रन्थस्य शीघ्रप्रकाशने दत्तावधानो विश्वविद्यालयस्य मुद्रणाधिकारि-श्रीभरतनारायणगुप्तमहाशयः धन्यवादमर्हति। तत्सहयोगिनश्च भृशं मम धन्यवादार्हाः। अस्य पाण्डुलिपिसज्जीकरणे गवेषणापूर्णभूमिकालेखनादिकार्येषु उपकारः कृतः, अतो हरिशंकरपाण्डेयः, एम० ए० विशेषेण धन्यवादमर्हति। श्री विश्वनाथः अभिवृद्धिमस्मै वितरतु अनुगृह्णातु च। पण्डितवर्यैः एस० सुब्रह्मण्यशास्त्रिमहोदयैश्च मार्गदर्शनं कृतमित्युपकृतस्तेभ्यो धन्यवादान् समुपहरामि। तत्र ग्रन्थस्य लघुकायत्वेन विशेषसूच्यादिकं शुद्धिपत्रं वा पृथक् न व्यरचि। पुरुषमतिमान्द्यात् अक्षर-संयोजकस्य प्रमादाच्च सम्भाविता अशुद्धीः परिमार्ज्य पाठकमहोदयाः पठेयुः ग्रन्थ-रसास्वादनञ्चानुभवेयुः।

प्राच्यविद्याप्रकाशनस्याधीक्षकः चक्रवर्ती श्रीजगदीशचतुर्वेदी शोधसहायकः श्रीकपिलदेवगिरिश्च धन्यवादार्हौ। एतयोः कर्मनिष्ठयोः कार्यकुशलताया एव वैशिष्ट्य-मिदं यदल्पसमये अस्य ग्रन्थस्य प्रूफसंशोधनमुद्रणादिकार्यं सम्पन्नम् ग्रन्थान्ते ग्रन्थ-गतश्लोकानामनुक्रमणिका विषयसूचिका च अत्र संवलिता। अनेन ग्रन्थेन शोध-जिज्ञासूनां शोधनिर्देशकानां च उत्कण्ठाशमनं भविष्यतीत्याशास्यते।

अन्ते अस्मद्विद्यागुरूणामाशिषा ग्रन्थरत्नमिदं सम्पूर्णतामगादिति तान् प्रति कृतज्ञतां व्यवहरामीति कृत्वा विरमामि—

—राजेन्द्रप्रसादपाण्डेयः

चैत्रकृष्णा—२, बुधः २०३६

# विषयानुक्रमणिका

# दत्तकमीमांसा

अभिवन्द्य जगद्वन्द्यपदद्वन्द्वं विनायकम् ।
पुत्रीकरणमीमांसां कुरुते नन्दपण्डितः[1] ॥

हृदम्भोजे काली वसतु तुदती मोहतिमिरं,
तमःपुञ्जाभेयं लसदरुणपाथोजचरणा ।
कृपापारावारः परमगतिरेका त्रिजगताम्,
निमेषोन्मेषाभ्यां स्थितिभवविनाशं विदधती ॥ १ ॥
अनायासप्रबोधाय मधुसूदनशर्मणा
पुत्रीकरणमीमांसाविवृतिस्तन्यतेऽधुना ॥ २ ॥

---

१ टिप्पणी—( वि० वि० देशपाण्डे )—पुत्रीकरणमीमांसां कुरुते नन्दपण्डितः—दत्तकमीमांसेति । नन्दपण्डितस्य सर्वेषु ( ग्रन्थेषु ) प्रसिद्धो ग्रन्थो दत्तकमीमांसा नाम । अस्य ग्रन्थस्य राजकीयन्यायवित्पण्डितमध्ये प्रसिद्धेर्मुख्यं कारणं 'सदरलंड' आंग्लपण्डितेन दत्तकविषयोपरि प्रमाणभूतोऽयमेक एव ग्रन्थ इत्याङ्ग्लभाषायां व्याख्यानमकारीति । परमार्थदृष्ट्यावलोक्यते चेत्पुण्यपत्तनपण्ढरीक्षेत्रेत्यादिप्रदेशीयपण्डिता दत्तकसंबन्धेन शास्त्रार्थनिर्णयप्रदानसमये स्वेतरविषयवदेव निर्णयसिन्धुसंस्कारकौस्तुभव्यवहारमयूखधर्मसिन्धुमिताक्षरादिग्रन्थाधारेणैव निर्णयं ददते स्म । तैरयं दत्तकमीमांसाग्रन्थो नाऽऽलोकित इति न । परमेतद्ग्रन्थकर्ताऽसावस्मिन्प्रदेशे समन्तत इयतीं मान्यतां प्राप्तो नाऽऽसीत् । किंत्वस्य ग्रन्थस्य भाषान्तरादारभ्याऽऽङ्ग्लन्यायालयेषु दत्तकसंबन्धिविवादनिर्णयप्रदानकृतेऽस्य महती समादृतिप्रथाप्रवर्तते स्म । मदुरादेशाधिकारिकलेक्टरविरुद्धं मुद्दुरामलिङ्ग ( १२ मू० इं० अ० पृ० ३९७ ) एतत्प्रिव्हीकौन्सिलकृतनिर्णयेन त्वस्य ग्रन्थस्य श्रेष्ठतमाधिकारविषय एकप्रकारकं राजमुद्राङ्कितमनुशासनपत्रमिव संजातम् । तस्मिन् विवादनिर्णयमध्ये न्यायमूर्तय एवमवादिषुः—यद्दत्तकमीमांसादत्तकचन्द्रिकाभिख्यं ग्रन्थद्वयंदत्तकसम्बन्धेन शास्त्राधारावलोकनकृते ऽखिल हिन्दुस्थानमभिव्याप्यप्रमाणभूतमिति विज्ञायते । परन्तु यदि तयोर्मध्ये कियानपि भेदः स्यात्तर्हि दत्तकमीमांसानुसारी निर्णयः काशी, मिथिला, तयोरासमन्ताद्गतप्रदेशाश्चेत्येतत्प्रदेशस्थलोकैः शिरसा

ग्रन्थारम्भे ग्रन्थसमाप्तिप्रतिबन्धकीभूतविघ्नविघाताय औचित्यात् विघ्ननाशक-विनायकवन्दनरूपमङ्गलमाचरन् ग्रन्थस्याभिधेयं प्रयोजनसम्बन्धञ्च प्रदर्शयन् नाम-कथनरूपोद्देशपूर्व्वकं ग्रन्थकृत् प्रतिजानीते अभिवन्द्यइत्यादि। अत्राभिधेयो दत्तक-करणम्। प्रयोजनं दत्तकनिर्णयः स च स्वानुष्ठानसम्पत्त्या पित्रर्णमोचनहेतुतया गौणः। प्रयोजनं द्विविधम्, अन्येच्छानधीनेच्छाविषयत्वं साक्षात्प्रयोजनत्वम् अन्येच्छानधीनेच्छाविषयत्वं गौणप्रयोजनत्वं, सम्बन्धश्च ग्रन्थेन सह ज्ञाप्यज्ञापकभावः तन्निर्णयेन सह जन्यजनकभावः।

तथा चोक्तं—[1]ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्तते।
ग्रन्थादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः॥ इति।

ज्ञातौ अर्थौ अभिधेयप्रयोजने यस्य इति विग्रहेण अभिधेयप्रयोजनलाभः। सप्रयोजनः प्रयोजनेन सह वर्त्तमानः अभिधेयः सम्बन्धः अत्र चकारोऽध्याहर्त्तव्यः।

---

वन्द्यते। अथ च बङ्गाल-मद्रासप्रदेशस्थजनैर्दत्तकचन्द्रिका शिरोधार्या मन्यते। तस्मान्निर्णया-दनन्तरं दत्तकप्रकरणविषये मोहमयीमहाप्रान्तेऽपिदत्तकमीमांसाधिकारः पुष्कलवेलासु मान्यः कृतोऽस्ति। सत्यतया वक्तव्ये सति नीलकण्ठभट्टकृतव्यवहारमयूखः, विज्ञानेश्वरीयमिताक्षरा चेतीत्येतद्ग्रन्थशास्त्राधारानुसारं मुम्बामहाप्रान्तीयो धर्मशास्त्रविषयकः सर्वो व्यवहारः प्रचालयितुं योग्य इति न्यायमन्दिरैरेव निश्चितम्।

परं केषु केषु विषयेषु व्यवहारमयूखादेशान्दूरमपसार्य दत्तकमीमांसाप्रतिपादित-शास्त्रार्थो न्यायालयैरङ्गीकृतः।

उदाहरणम्—व्यवहारमयूखानुसारेण द्विजानामपि दौहित्रभागिनेयमातृष्वसृसुतानां दत्त-कत्वेन स्वीकारे न कोऽपि प्रतिबन्धः। परन्तु मुम्बापुरीयमहान्यायालयेन दत्तकमीमांसाधार-मवलम्ब्य निरुक्तपुत्रत्रयस्य ग्रहणमशास्त्रीयमिति प्रस्तावोऽकारि। एवं स्वेऽपि दत्तकमीमांसायां वर्णिताः सर्व एव निर्णया मानिता इत्येवं नैव मन्तव्यम्। कारणंदत्तकमीमांसाकारः स्त्रीणां पुत्रग्रहणाधिकारो नास्तीति प्रतिपादयति। किन्तु मिथिलाप्रदेशं वर्जयित्वाऽन्यत्र सर्वत्र न्याया-लयैरसावधिकारो मान्यः कृतोऽस्ति। वयसः पञ्चमवर्षानन्तरमपत्यस्य दत्तकविधानं न भवितुं शक्नोतीति नन्दपण्डिता मन्यन्ते। परमद्य साक्षात्काशीप्रान्तेऽप्युपनयनसंस्कारपर्यन्तमनुष्ठितं दत्तकविधानं मान्यं भवति। मद्रासदेशे विवाहपर्यन्तं, मोहमय्यां तु विवाहोत्तरमपि दत्तक-विधानं शास्त्रीयमित्युररीकृतम्। तथैव विरुद्धसंबन्धविषये पुत्रच्छायावहसुतविषये च नन्द-पण्डितकृतानि विधानानि न्यायालयैः सर्वत्रैव मानितानीति न मन्तव्यम्।

केन कीदृक् कदा कस्मै कस्मात् कः क्रियते सुतः ।
विविच्य नोक्तं यत्पूर्वैस्तदशेषमिहोच्यते ॥ २ ॥

तत्राऽऽहात्रिः ।

अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदा ।
पिण्डोदकक्रियाहेतोर्यस्मात्तस्मात्प्रयत्नतः ॥

इति । अपुत्रः अजातपुत्रो मृतपुत्रो वा ।

अपुत्रो मृतपुत्रो वा पुत्रार्थं समुपोष्यचेतिशौनकीयात् । वन्ध्यो मृत-

---

तेन सम्बन्धश्च। श्लोकार्थस्तु। जगद्वन्द्यपदद्वन्द्वमिति जगतां वन्द्यं पदद्वन्द्वं यस्य। एतेन ब्रह्मत्वमस्य सूचितम्। जगत्पदेन समर्थनरमात्रं लक्ष्यते। तेनाचेतनाप्रकृष्टचेतन-योर्व्युदासः। एतद्विशेषणं विनायकमिति विशेषविघ्ननाशस्य नायकः प्रसिद्धकर्त्ता तं अभिवन्द्य प्रणम्य नन्दपण्डितः तन्नामकजनः पुत्रीकरणमीमांसां दत्तकविधिविचारं प्रकुरुते। सम्यङ् निर्णयार्थमारभते। अत्र नन्दपण्डित इत्यनेन कुवेरादिकृत नाना दत्तकग्रन्थेन सम्यङ् निर्णयो न जात इति सूचितम्। अतएव केन कीदृगित्यादिना स्वयमेवाभिधास्यति ॥ १ ॥

ननु कुवेरादिकृताः दत्तकचन्द्रिकादयः वहवो ग्रन्थाः सन्ति। तैरेवप्रकृतार्थ-सिद्धिर्जायते किमर्थं ग्रन्थान्तरकरणमित्यत आह केनेत्यादि। केनेति ग्रहीतृनिर्देशः अपुत्रेणेत्यादि। कीदृगिति ग्राह्यस्य प्रकारनिर्देशः नैकपुत्रेणकर्त्तव्यं नत्वेकं पुत्रं दद्या-दित्यादिः। कदेति कालनिर्देशः। कस्मै इति प्रयोजननिर्देशः। क इति ग्राह्यस्य स्वरूपनिर्देशः। पूर्वैःपूर्वनिबन्धकारैः। विविच्य नोक्तमित्यनेन सम्यगेभिः समग्र-विषयो न निरूपितः कुत्रचित् कुत्रचित् भ्रान्तिरस्ति अतस्तद्ग्रन्थादरेण सम्यक् प्रकृ-तार्थनिर्वाहो न भवति सुतरां ग्रन्थान्तरकरणं समुचितं भवतीतिभावः। कश्चित्तु यदि तु पूर्वनिबन्धाः सन्ति सन्तु केनाधिकारिणा कश्च इत्यादिविशिष्य नाभिहितं ममास्मिन् विशेषतोऽभिधानमस्ति अतोऽयमारम्भः समादरणीय एवेतिभावः इत्याह तन्न सुन्दरं पूर्वपण्डितकृते दत्तकचन्द्रिकादिग्रन्थे अपुत्रेण सपिण्यादिपुत्रः कर्त्तव्य इति विशिष्या-भिधानात् ॥ २ ॥

अपुत्रेणेति अत्र पुत्रपदं औरसपुत्रपौत्रप्रपौत्रोपलक्षकम्। पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते अथ पुत्रस्य पौत्रेणब्रध्नस्याप्नोति पिष्टपमिति मन्वादिभिः स्मरणात्

प्रजो वाऽपीति पाठान्तरम्। अपुत्रेणेति अपुत्रताया निमित्तता श्रवणात् पुत्राकरणे प्रत्यवायोऽवगम्यते।

पुत्रोत्पादनविधेर्नित्यतया तल्लोपस्य प्रत्यवायनिमित्ततापर्य्यवसानात्। नापुत्रस्य लोकोऽस्तीति पुत्रसामान्याभाव एवालोकताश्रवणात्।

'जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवान्[1] जायते, ब्रह्मचर्य्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा—

---

पिण्डोदकक्रियाहेतोर्दत्तकविधानाच्च। अपुत्रताया औरसपुत्रपौत्रप्रपौत्राभावावधारणताया इत्यर्थः, अवधारणन्तु भ्रमप्रमासाधारणं तेन भ्रमात् पुत्राद्यभावनिश्चयदशायां दत्तके गृहीते पश्चादौरसपुत्रोत्पत्तावपि न क्षतिः।

तथा च दत्तकाद्यभिधायकात्यायनः उत्पन्नेत्वौरसे पुत्रे तृतीयांशहराः स्मृता इत्यादिः। वशिष्ठोऽपि। तस्मिन् गृहीते दत्तके औरस उत्पद्येत चतुर्थभागभागी स्याद्दत्तक इत्यादि। चतुर्थभागार्हता तु किञ्चिद्निर्गुणत्वे बोध्यम्। निमित्तता कारणता। पुत्राकरणे इति पुत्रलाभादिसत्वे बोध्यम्। प्रत्यवायं प्रतिहेतुं दर्शयति पुत्रोत्पादनविधेरित्यादि। पुत्रोत्पादनमित्युपलक्षणं तेन दत्तकादिकरणमपि बोध्यम्। यथा श्रुतन्तु न संगच्छते। तल्लोपस्य पुत्राकरणस्य प्रत्यवायनिमित्ततापर्य्यवसानादिति। यदकरणे प्रत्यवायोऽस्ति तन्नित्यमिति तल्लक्षणादिति भावः।

ननु औरसपुत्रकरणस्यैव नित्यत्वं न तु दत्तकादेरित्याशङ्क्याह पुत्रसामान्याभाव एवालोकता श्रवणादिति। पुत्रसामान्याभाव एव औरसादिद्वादशान्यतमाभाव एव कलौ तु ग्रन्थकर्त्तुर्मते औरसदत्तकक्त्रिमान्यतमाभाव एव अतएव वक्ष्यति दत्तकपदं कृत्रिमास्याप्युपलक्षणम्। "औरसः क्षेत्रजश्चैव दत्तः कृत्रिमिकः सुतः" इति कलिधर्मप्रस्तावे पराशरस्मरणात्। स्मार्त्तादिमते तु कलौ औरसदत्तकोभयमात्रस्य ग्राह्यता॥ ननु कलिधर्मप्रस्तावे कृत्रिमपुत्रस्योपादानात् कथं स्मार्त्तादिमते उभयमात्रस्य ग्राह्यता इति चेन् तेषामयमाशयः। 'औरसः क्षेत्रजश्चैव इत्यादिवचनं चतुर्थाध्याये उक्तं, चतुर्थाध्याये पराशरेण यद्यदुक्तं तत् तत्प्रासङ्गिकं न तु कलिधर्मः कलिधर्मस्तु ब्राह्मणादेः कृष्यादिकं प्रायश्चित्तञ्च इति द्वितयमात्रं एतच्च पराशरभाष्ये

---

[1] आनन्दाश्रमपाठे—जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवाञ्जायते।

अनृणो यः पुत्री यज्वा ब्रह्मचारी च ।

इत्यत्रापि पुत्रसामान्यस्याऽऽनृण्यहेतुता श्रवणाच्च' ॥३॥

अपु[1]त्रेणैवेत्येवकारेण पुत्रवतोऽनधिकारो बोधितः । अनेन,

---

माधवाचार्य्येण स्पष्टीकृतं अत्र कृत्रिमस्याप्युपलक्षणं इति तु न सम्यगुक्तं मूलकारेण अस्मिन्वचने क्षेत्रजस्योपादानसत्वात् तस्याप्युपलक्षणता स्यात् इदमपि अपिकारसूचितमित्युक्तेः ।

"अनेकधाः कृताः पुत्राः ऋषिभिर्यैः पुरातनैः ।
न शक्यन्तेऽधुना कर्तुं शक्तिहीनैरिदन्तनैः ॥" इति ।

बृहस्पत्युक्त विरोधः स्यात् वहुवचनान्तानेकधाशब्दात् द्विप्रकारपुत्रः कलौ सूचितः ।

---

[1]टिप्पणी—( वि० वि० देशपाण्डे ) अपुत्रेणैवेत्येवकारेण पुत्रवतोऽनधिकारो बोधित इति ।—मानवव्यक्तेर्धार्मिकक्रियानुष्ठानाधिकारविषयिण्यः कल्पना अस्मद्धर्मशास्त्रे पाश्चात्यानामेतद्विषयककल्पनापेक्षयाऽतीव सूक्ष्मा वर्तन्ते । पाश्चात्यशास्त्रज्ञा विवक्षितराष्ट्रान्तर्गतसर्वमानवानां सामान्यतः समानाधिकाराः सन्तीति गृहीतं धरन्ति । तेषां मते निरुक्तसमानाधिकारस्यापवादः—अज्ञानावस्थानतीतवयसः स्त्रीपुरुषाः, अथ च यासां बुद्धिभ्रमः संजातस्तादृश्यो व्यक्तयः । एतादृशानामेवकेवलमधिकारा मर्यादिता भवन्ति । वैदिकधर्मशास्त्रानुसारेण वहुवंशेन कर्मस्वरूपानुरूपा अधिकारणां कक्षा निश्चीयन्ते । विवक्षितगुणयुक्ता एव व्यक्तयो विशिष्टकर्माचरणयोग्या भवन्तीत्येवंप्रकारेण निर्णीता भवन्ति । दत्तकपुत्रग्रहणाधिकारो येऽसंजातपुत्रा मृतपुत्र वा तेषामेव । अर्थात्तैर्गृहस्थाश्रमिभिर्भाव्यमित्येवं पृथक्प्रतिपादनापेक्षा नास्ति । पुत्रोत्पादनविधिप्रवृत्तिर्हि गृहस्थाश्रमिण्येव युक्तिसहा भवति । ब्रह्मचर्यवानप्रस्थसंन्यासाश्रमिणां पुनर्नैवायां विधिर्विहित इति सुव्यक्तं वर्तते । एवंत्वेऽपि यस्य समग्रायुषि कदाऽपि हि विवाहानैव संपन्नः, एतादृगपि पुरुषो दत्तकग्रहणे योग्याधिकारीत्याधुनिकन्यायालयैर्निरचायि । औरसपुत्राभावे दत्तकः पुत्रप्रतिनिधिर्ग्राह्य इति धर्मशास्त्रानुशासनं वरीवर्ति, अस्य सरलोऽर्थोऽसौ— यत्पुत्रोत्पादनस्य शास्त्रदृष्टाः सर्वे मार्गा यस्य कुण्ठितास्तस्यैवायमधिकार उत्पत्तुं शक्यो न पुत्रोत्पादनमार्गाक्रमणात् प्राक् । तत्राविवाहितपुरुषेण द्वितीयाश्रममास्थाय तत्रत्यपुत्रोत्पादनावश्यकतायाः पारं गन्तुं यावन्न प्रयतितं तावत्तत्र पुत्रग्रहणाधिकारो नाङ्कुरतां प्राप्स्यति । परन्तु गृहस्थाश्रमस्वीकृतौ संजातायां सत्यां यदि किंचिद्विशिष्टकारणं स्याच्चेत्तदाऽयमधिकारोऽव्यवहितक्षण एवाङ्कुरितो जायते । उदाहरणम्—कश्चित्पुरुषो विवाहोत्तरक्षण एव रुग्णोभूत्वा मृत्युशय्यां यद्यधिशयीततदै-

स च दत्तौरसेतरेषान्तु इत्यादि विशेषवचनान्निर्णीयते इति दिक् अलोकता अलोकताप्रयोजकीभूतर्णत्रयग्रस्तता। ब्रह्मचर्य्येण ब्रह्मचर्य्याङ्गकवेदाध्ययनेन।

तथा च मनुः—स्वाध्यायेनार्च्चयेतर्षीन् होमैर्देवान् यथाविधिरित्यादि। कश्चित्तु अपुत्रेणेति अत्रापुत्र इत्यस्य अपुत्रो मृतपुत्रोवेत्यर्थकत्वेन नञः प्रागभावध्वंसात्यन्ताभावरूपसंसर्गाभावबोधकत्वं फलितं तेन पुत्रप्रागभाव सत्वेऽपि पुत्रीकरणं शास्त्रीयमित्यादि तन्नयुक्तं औरसपुत्रस्य सम्भवानासत्वे दत्तकग्रहणापत्यामहाजनविरोधः स्यात् ॥ ३ ॥

---

तस्यां परिस्थितौ पिण्डोदकक्रियावंशनामादिना न लोप्तव्यमित्येतदर्थं तादृशव्यक्तेः पुत्रप्रतिनिधिस्वीकाराधिकारो भवत्येव। आधुनिकराजकीयन्यायालयैस्तु यस्य स्त्री गर्भवती स्यादेतादृशोऽपि पुरुषस्य दत्तकग्रहणाधिकारोऽस्तीति गृहीतं धृतम्। (हनुमंत वि० भीमाचार्य १२ मुं० १०५)। एतद्विषये न क्वापि स्पष्टं वचनमुपलभ्यते। परन्तु शास्त्राशयलौकिकपरिस्थित्योः पर्यवेक्षणेन स्त्रिया गर्भाधारणावस्थायां तद्भर्तुरनेनाधिकारेण न भवितव्यमन्यत्र विशिष्टकारणादिति प्रतीयते। तद्वत्कस्यचिदेकाक्येव पुत्रो निरतिशयदारिद्र्यादिनाव्याध्यादिना वा सुतरां संत्रस्यापुनरावृत्तये गृहात्क्वापि नष्टोऽथवा वैराग्यादिना विवाहात्प्रागेव संन्यस्तवानपि वा परित्यक्तप्रपञ्चः सन् व्यावहारिकविरागी ( बैरागी गोसावी बगैरे ) भूत्वा गृहीतभिक्षादीक्ष आमरणान्तं गोदानर्मदाप्रदक्षिणादितीर्थयात्राः पर्यटितुं गतः स्यात्तर्हि तस्य पितुर्दत्तकग्रहणाधिकारोऽस्ति। १८७२ संबन्धिविशिष्टविवाहनियमानुसारेण यद्येकाकिना पुत्रेण विवाहो न कृतः स्यात्तर्ह्यपि तस्य पितुः पुत्रग्रहणाधिकारो भवति। यवनादिधर्मस्वीकारेण स्वर्णस्तेयादिपातकाचरणेन वा यः पातित्यं प्राप्तस्तस्य दत्तको ग्राह्यः स्यात्। परन्तु १८५० निर्मितैकविंशतितम ( २१ ) नियमानुसारेणैतादृशदत्तकपुत्राणां दायभागसंबन्धिनः केचिदधिकारा न लभ्यन्ते। मूकान्धबधिराद्यनंशपुत्राणां सत्वे दत्तको ग्रहीतुं शक्यः, परन्तु १९२८ संबन्धिद्वादश ( १२ ) नियमानुसारेण तेषां ( मूकादीनां ) इतरधनग्रहणाधिकारिवद्दायाधिकारित्वं कल्पितम्। सत्येवं यदि पित्रा दत्तको गृहीतस्तथाऽपि तादृशदत्तकपुत्रस्य पितृधनीयवंटको न लब्धो भविष्यति। अनशानां मध्ये ये जन्मत एव जडमूढास्तेषामनधिकारित्वमद्यापि रक्षितम्। तस्माज्जन्मतो जडमूढपुत्राणां सत्वे गृहीतस्यदत्तकपुत्रस्य सर्वेऽधिकारा लब्धा भविष्यन्ति। य पुरुषः स्वत एवान्धमूकत्वादिदोषेणानधिकार्यस्ति तस्य, मिताक्षराकारदायविभागकारयोरभिप्रायानुसारेण दत्तकग्रहणाधिकारो नास्ति। ( या० स्मृ० २।१४१ श्लो० मिताक्षरा—औरसक्षेत्रजयोर्ग्रहणमितरपुत्रव्युदासार्थम् )। परमधुनैवोपर्युल्लेखित १९२८ संबन्धिद्वादश ( १२ ) नियमानुसारेणैकं जन्मतो जडपुत्रं वर्जयित्वेतरेषां दायाधिकारित्वस्य कल्पितत्वाज्जडवर्जमन्धादिपुरुषेणौरसाभावे दत्तके गृहीते सति स दत्तको दाय-

पुत्रवत् इति इदमुपलक्षणं तेन औरसपुत्रावश्यम्भाववतोऽपि बोध्यम् । अन्यथा तादृशस्य दत्तकाकरणेऽपि प्रत्यवायः स्यात् उभयत्र पुत्रपदं प्रपौत्रपर्य्यन्तपरम् । नाधिकारो न नित्याधिकारः । तेन पुत्रवतो विश्वामित्रस्य पुत्रान्तरकरणेऽपि न क्षतिः ।

---

ग्रहणे पात्रं स्यात् । संप्रति ब्रह्मचर्यावस्थायामपि दत्तकग्रहणाधिकारस्य कल्पितत्वाद्दत्तकप्रतिग्रहीतुर्ब्रह्मचारिणो वयसः षोडशवर्षपर्यन्तत्वेऽपि तदुपयुक्तं स्यात् ( यमुना वि० वामा सुन्दरी ३ इं० अ० ७२ ) । एकस्मिन् प्रसङ्गे द्वादशवर्षपरिमितवयसा स्त्रिया गृहीतो दत्तकपुत्रो मान्यः कृतोऽस्ति ( मन्दाकिनी, वि० आदिनाथ १८, कलकत्ता ६६ ) ।

दत्तकग्रहणाधिकारवती व्यक्तिरितरदृष्ट्याऽपि धार्मिकविध्याचरणेऽधिकारिण्यपेक्षिता । कश्चिदेकः पुरुषो महाकुष्ठपीडितः । स्याच्चेत्सोऽपि सामान्यतो धर्मकृत्याचरणेऽनधिकार्येव । तद्वद्दत्तकग्रहणेऽप्यनधिकारी । सोऽयमर्थः प्रिव्हीकौन्सिलनामकसर्वोच्चन्यायालयाध्यक्षैरपि मान्यः कृतः ( रमाबाई वि० हरणाबाई ५१ इं० अ० १७७ ) । तथापि सर्वोच्चन्यायालयेन तत्रापि सूक्ष्मो विशेषो निष्काशितः—द्विजवच्छूद्रस्य धार्मिकविध्याचरणेऽधिकारित्वाभावात्कुष्ठिशूद्रेण यदि दत्तको गृह्येत तर्हि सोऽपि शास्त्रीयः परिगण्येत ( सुकुमारी वि० अनन्त २८ कलकत्ता १६८ ) ।

एवमितः पर्यन्तमौरसाभावे दत्तकग्रहणे विचारः समजनि । धर्मशास्त्र औरसेन सहेतरपुत्राणां वर्णनस्य कृतत्वात्कस्यचिदौरसोऽभूत्वा कश्चिद्गौणपुत्रः स्याच्चेत्तादृशगौणपुत्रवता पुरुषेण दत्तको ग्राह्यो न वेति जिज्ञासायामुच्यते । प्राचीने कालेऽनाथापत्यानां संरक्षणार्थत्वेन प्रायो मुख्यगौणपुत्राणां कल्पनोदयमगात् । दत्तकस्य गौणपुत्रत्वात् पुत्रसंख्यामर्यादानियमाभावाच्चौरसे विद्यमानेऽपि क्षेत्रजादिपुत्रैः सह यदि कोऽपि दत्तकग्रहीतुमुत्सहेत तर्हि तस्य प्रत्यवायं न मन्यन्ते स्म जनाः । मूलग्रन्थे निर्दिष्टं विश्वामित्रोदाहरणं सुतरामत्र मननीयं भवेत् । उत्तरस्मिन्काले यदा गौणपुत्राणां मध्ये दत्तक एवैक औरसप्रतिनिधित्वेन विज्ञातोऽभूत्तदौरसपुत्रासत्वे तदितरपुत्रसत्वेऽपि दत्तकग्रहणाधिकारसत्वं यत्तदति स्वाभाविकमेव । बहावेवाऽऽधुनिके काले न्यायालयैरौरसाभावे दत्तकाधिकार उपरिनिर्दिष्टवन्मान्यः कृतः । औरसो दत्तकश्च ( केवलं मिथिलादिप्रान्ते कृत्रिमपुत्रः ) एतान् वर्जयित्वा इतरः कोऽपि गौणपुत्रः पुत्रत्वेन नैव मान्यः कृतः ।

कलिवर्जप्रकरणीयमादित्यपुराणस्थं—

'दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः'

इत्येवं वचनमस्मिन्निर्णय आधारभूतमप्यस्ति ।

अथान्यदप्येकं मनसि धार्यं तदिदम्—दत्तकविषये विवरणे प्रचलिते सति धर्मशास्त्र-

'माता पिता वा दद्यातां यमद्भिः पुत्रमापदि'[1]

इत्यापत्पदमपि मानवीयं व्याख्यातम्। व्याख्यातं चापरार्केणापि तथा—

---

अत्र पिण्डोदकक्रियाहेतोर्दत्तकविधानात्, गृहीतदत्तकस्य तत् सिद्धौ न दत्तकान्तर-ग्रहणे नित्याधिकारः इत्यवधेयम्। अनेनेति इत्यस्य व्याख्यातमित्यनेनान्वयः। ननु

---

कारा एवमेतं विशिष्टगुणयुक्तव्यक्तीनामेवायमधिकारोऽस्तीति प्रतिपादयन्ति। सामान्यतः कस्याश्चिदपि व्यक्तेर्जन्मसिद्धोऽधिकार इति तैर्न-क्वापि प्रतिपादितम्। अर्थाद्विशिष्टपरिस्थिति-प्राप्तौ शास्त्रोद्दिष्टव्यक्तिभिः पुत्रपरिग्रहः कर्तव्य एव, तद्विना शास्त्रमनुसृतं न स्यात्। एत-दनुसृत्यैव च 'अपुत्रेणेत्य पुत्रताया निमित्तता श्रवणात्पुत्राकरणे प्रत्यवायोऽपि गम्यते। पुत्रोत्पा-दनविधेर्नित्यतया तल्लोपस्य प्रत्यवाय निमित्ततापर्यवसानात्' सोऽयं वाक्यसन्दर्भो नन्दपण्डितैः स्वग्रन्थ आरचितः। आधुनिकविचारसरण्यनुसारेणोच्यते चेत्पुत्रपरिग्रहोऽयं विशिष्ट-व्यक्त्यधिकारस्य विषय इति न मान्यः कुतः किन्तु तासां व्यक्तिनाम् जन्मतः सिद्धाधिकारस्य विषयो भूत्वाऽवस्थितः। तेन तत्तद्व्यक्तिभिः पुत्रपरिग्रहाकरणेऽपि कश्चिद्धर्मातिक्रमः संजात इत्येवं न मन्यन्ते लौकिकाः। जन्मतः सिद्धाधिकारविषयिण्यः कल्पना धर्मशास्त्रेण नैव मानिताः। कारणं तादृशाधिकारो यस्यां व्यक्तौ कल्प्यते तद्व्यक्तीच्छाधीनतया तादृशाधिकारस्य स्वाचरण आनयनं स्थापयितव्यं भवति। धर्मशास्त्रेऽनुष्ठेयत्वेन ये विधयोऽभिहितास्तेषां परिपालनं हि न कर्तुरिच्छामवलम्ब्य वर्तते। अपि तु शास्त्रनिर्दिष्टस्थलकालप्रसङ्गव्यक्तिनामेतेषां सर्वेषां संप्राप्तौ सत्यां शास्त्रप्रोक्तविधेः परिपालनं कर्तव्यमेवेति शास्त्रेणाभिप्रेयते। व्यक्तेः पुनः 'वैकल्पिके आत्मतुष्टिः प्रमाणम्' अनेन न्यायेन केवलमात्मसन्तोषः साधयितुं शक्यः। आधुनिक-लोकशालिराज्यपद्धत्यनुसारेण मानवोऽयं बहुंशैः स्वतन्त्रो भूत्वा बाह्यव्यवस्थासंरक्षणार्थमतिशयित-मेवाल्पेषु कायिकाचारेष्वेतस्यानिर्बन्धं स्वातन्त्र्यमबाधि। अथ च जन्मसिद्धाधिकारस्य प्रदेशो-ऽतीव विस्तृततां नीतः। धर्मशास्त्रस्य तु मानवानामिह परलोकीयकल्याणस्य विवक्षितत्वान्न केवलं बाह्याचाराणामेवापि तु तेषां मानसिकवाचिककर्मणामपि नियन्त्रणकरणमत्यन्तमावश्यकं भवति। तेन हेतुना कर्मणा चित्तशुद्धिभवनात्प्राङ्मानवैः कर्मप्रदेशे जन्मसिद्धाधिकारा उपभोक्तुं न शक्यन्ते। विशिष्टाधिकारप्राप्तौ सत्यां शास्त्रविहितं विशिष्टं कर्म कर्तव्यमेव। तत्र मनस्तुष्टिर्भवतु मा वेति।

---

[1] माता पिता वा दद्यातां यमद्भिः पुत्रमापदि। सदृशं प्रीतिसंयुक्तं सज्ञेयो दत्रिमः सुतः॥ (म०स्मृ० ९।१६८)। मातापितृकर्तृकप्रीतिजलगुणकापन्निमित्तकदानकर्मीभूतसजातीय-पुंस्त्वविशिष्टो यः सुतः स दत्त्रिमो दत्तकः पुत्रो ज्ञेय इत्यर्थः।

'आपदि प्रतिग्रहीतुरपुत्रत्वे' इति । यद्वाऽऽपदि दुर्भिक्षादौ । आपद्ग्रहणाद-
नापदि न देयः । दातुरयं प्रतिषेध इति मिताक्षरा । तथा च कात्यायनः—

आपत्काले तु कर्त्तव्यं दानं विक्रय एव वा ।
अन्यथा न प्रकर्त्तव्यमिति शास्त्रविनिश्चयः ॥ इति

मनुरपि—अपुत्रेण सुतः कार्यो यादृक् तादृक् प्रयत्नतः ।
पिण्डोदकक्रियाहेतोर्नामसंकीर्तनाय च ॥
अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम् । ४ । इति ।

यत्तु विश्वामित्रादीनां पुत्रवतामपि देवरातादिपुत्रपरिग्रहलिङ्गदर्शनं तद-

---

ग्रहीतुरपुत्रत्वं कथं दातुरापदिति मुख्यार्थो न घटते इत्यत आह यद्वेति । दुर्भिक्षादौ आदिना परिपालनाक्षमत्वादिपरिग्रहः मिताक्षरा इति, तदेव स्वमतमित्यभिप्रेत्यनिषेध-रूपतां प्रमाणयति तथा च इत्यादि । न कर्त्तव्यमिति । अत्र कर्त्तव्यता प्रतिषेधात् तत्करणे दातुः प्रत्यवायः सूचितः । ननु अनापदि दातुः पुत्रदाननिषेधात् तन्निविध्य-पुत्रपरिग्रहे प्रतिग्रहीतुरपि प्रत्यवायः स्यादित्यतः ।

आह मनुरपि—यादृक् तादृक् इति । एतत् सुतविशेषणं एतेन क्षेत्रजादीनामेका-दशविधपुत्राणां अन्यतमः कार्य्य इत्यर्थः सिद्धयति । अत्र प्रयत्न इति श्रुतेः अपुत्रतामा-त्रनिमित्तत्वेन पुत्रकरणविधेर्नित्यत्वावगमात् कलौ दत्तकातिरिक्तप्रतिनिधिपुत्रकरणनिषे-धाच्च परिशेषात् दत्तकविधेर्नित्यतया ग्रहणस्य वैधत्वात् दातुर्दाननिषेधेऽपि तादृशपुत्र-परिग्रहेऽपि न प्रतिग्रहीतुः प्रत्यवायः सम्भवतीत्यवधेयम् । अपुत्रोऽनेन विधिना सुतां कुर्व्वीत पुत्रिकामिति, यद्यपि दत्तकग्रहणप्रस्तावे एतद्वचनमनुपयोगि तथापि यथा दौहि-त्रद्वारा उपकारितया कन्यायाः पुत्रिकाकरणं तथा अत्रापि दौहित्रद्वारा उपकारितया दत्तकपुत्रवत्दत्तककन्या अपि भवितुमर्हति । एतज्ज्ञापनार्थं एतद्वचनोपन्यास इति तात्पर्य्यम् । एतदपि वक्ष्यति । कश्चित्तु पुत्रवत् इति औरसपुत्रेण पुत्रवत् इत्यर्थः । अत-पुत्रपदस्यौरसे मुख्यत्वेन तस्यैव प्रथमोपस्थितिकत्वात् लक्षणाया अयुक्तत्वात् । अत-एव दत्तकसत्वेऽपियद्यन्योदत्तकः परिगृह्यते तदसावपि सिद्धत्येव, 'एष्टव्या वहवः पुत्रा-यद्यप्येको गयां व्रजेत्' इत्यादि वचनादिति तन्न सामान्यत औरसपुत्रवतः प्रतिनिधि-पुत्रकरणस्य निषिद्धत्वे पुत्रानुज्ञया पुत्रवतोऽप्यस्तु पुत्रान्तरपरिग्रहाधिकार इति ग्रन्थ-काराभिमलिप्यनुपपत्तेः एष्टव्या वहवः पुत्रा, इत्यादि हेतोः सर्वत्राप्यविशिष्टत्वाच्च ॥४॥

पुत्रेणैवेत्यादिश्रुतिविरोधाच्छ्वजाघनीभक्षणादिवन्न श्रुत्यनुमापकमिति ध्येयम्। न च स्मार्ता श्रुतिः श्रौतस्य लिङ्गस्य न बाधिकेति वाच्यम्।

नापुत्रस्य लोकोऽस्तीत्यादिप्रत्यक्षश्रुत्युपष्टम्भेन तस्या एव बलवत्त्वात्। अथापि स्मार्तश्रुतितः श्रौतलिङ्गबलवत्त्व एव श्रीमतामाग्रहातिशयश्चेत्तर्हि पुत्रानुज्ञया पुत्रवतोऽप्यस्तु पुत्रान्तरपरिग्रहाधिकारः।

---

यत्विति पुत्रवतामिति औरसपुत्रेण पुत्रवतामित्यर्थः। देवरातादिपुत्रपरिग्रहलिङ्गदर्शनमिति तथा च बह्वृचब्राह्मणम्। अथ शुनः शेपः विश्वामित्रस्याङ्कमाससाद सहोवाच जागर्त्तः सोऽयं वशिष्ठऋषिः पुनर्मे पुत्रं देहीति नेति होवाच विश्वामित्रो देवा वा मह्यमकासतेति सहदेवरातोविश्वामित्र आसेति। श्रुतिविरोधात् इत्यर्थः।

श्वजाघनीभक्षणवदिति। तथा च मनुः।

क्षुधार्त्तश्चात्तुमभ्यागाद्विश्वामित्रः श्वजाघनी।
चाण्डालहस्तादाय धर्माधर्मविचक्षणः॥

यथा विश्वामित्रस्य चाण्डालपक्वकुक्कुरजघनमांसभक्षणदर्शनात् श्वजाघनी भक्ष्येति विधिर्न कल्प्यते तद्वदत्रापि पुत्रवतो विश्वामित्रस्य दत्तकपरिग्रहदर्शनात् पुत्रवतापि दत्तकः कार्य इति विधिर्न कल्प्यते इत्याशयः। न बाधिका इति श्रुति· स्मृतिविरोधे तु श्रुतिरेव गरीयसीति जाबालवचनात् श्रुतिस्मृतिपुराणानां विरोधो यत्र वर्तते। तत्र श्रौतं प्रमाणं स्यात् तयोर्द्वैधे स्मृतिर्वरा। इति व्यासवचनाच्च इति शेषः। प्रत्यक्षश्रुत्युपष्टम्भेन प्रत्यक्षश्रुतिमूलकतया। श्रुतिस्तु नापुत्रस्य लोकोऽस्तीति। तस्या अपुत्रेणैव कर्त्तव्यमित्यादि स्मृतेः। तथा चानुमेयश्रुतिमूलकस्मृतिः श्रुतितो दुर्बला। प्रत्यक्षश्रुतिमूलकस्मृतिस्तु अर्थवादिकश्रुतितो बलवतीति भावः। प्रौढ्या आह अथापीत्यादि। पुत्रानुज्ञया पुत्रानुमत्या। पुत्रान्तरपरिग्रहेन नित्याधिकार इत्यर्थः। वस्तुतः आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामिति जैमिनिसूत्रात् साक्षाद्विधित्वे अर्थवादिकवेदस्य न प्रबलत्वं अत एव पूर्वाह्णो वै देवानां मध्यन्दिनं मनुष्याणां

---

[१] दृष्टो धर्मव्यतिक्रमः साहसं च पूर्वेषाम्।
तेषां तेजोविशेषेण प्रत्यवायो न विद्यते॥ (आपस्तम्ब धर्मसूत्र)
कृतानि यानि कर्माणि दैवतैर्मुनिभिस्तथा।
नाऽऽचरेत्तानि धर्मात्मा श्रुत्वा चापि न कुत्सयेत्॥ (मञ्जरीव्याख्या पृ० १७)

यन्नः पिता संजानीते तस्मिंस्तिष्ठामहे वयम् ।
पुरस्तात्सर्वे कुर्महे त्वामन्वञ्चो वयं स्म हि ॥[1]

इति श्रौतलिङ्गात् । न चेदं ज्येष्ठीकरणे लिङ्गं न पुत्रीकरण इति वाच्यम् । तस्य तदभावेनैवासिद्धेरित्यलं पल्लवितेन ॥ ५ ॥

अपुत्रेणेति । पुत्रपदं[2] पौत्रप्रपौत्रयोरप्युपलक्षणम् ।

---

अपराह्णः पितॄणामित्यादि श्रुतिसत्त्वेऽपि पूर्वाह्णाद्यभावे मध्याह्नादौ श्रीपूजादिकं क्रियते इति । प्रमाणयति यन्न इति । श्लोकार्थस्तु नोऽस्माकं पिता यत् सञ्जानीते नियमं करोति तस्मिन् नियमे वयं तिष्ठामहे तन्नियमपालनं कुर्म सर्वे वयं त्वां पुरस्तात् कुर्महे ।

पितृकृतनियमानुसारेण रक्षणावेक्षणं कर्तारमङ्गीकुर्महे । अन्वञ्च अनुगता भवामः । ननु कथमनेन पुत्रपरिग्रहः सिद्धयति इत्याशङ्क्यते न चेदमित्यादि तस्य ज्येष्ठीकरणस्य तदभावेनैव पुत्रीकरणाभावेनैव असिद्धेरिति पुत्रीकरणव्याप्यं ज्येष्ठीकरणं विना न सिध्यति तथा च दत्तकविषये ज्येष्ठीकरणं न त्वौरसविषये तस्य च भ्राताशक्तः कनिष्ठो वा इत्यादि वचनसिद्धत्वात्ततश्च ज्येष्ठीकरणवत् पुत्रपरिग्रहेऽपि पितुरभिप्रायं ज्ञात्वा पुत्रा अनुमतिं कुर्वन्तीति वर्तुलार्थः ॥ ५ ॥

लोकादयः स्वर्गविशेषकाः । तयोरेवेति पुत्राभावे मृतपितृपितामहकपौत्रप्रपौत्रयोरेव तदधिकारात् पिण्डोदकदानाधिकारात् तथा च पिण्डोदकदानार्थं पुत्र-

---

[1] अपत्यं तु ममैवैकं कुले महति भारत । अपुत्रमेकपुत्रत्वमित्याहुर्धर्मवादिनः । चक्षुरेकं च पुत्रश्च अस्ति नास्ति च भारत । चक्षुर्नाशे तनोर्नाशः पुत्रनाशे कुलक्षयः । अनित्यतां च मर्त्यानां ज्ञात्वा शोचामि पुत्रक । संतानस्याविनाशं तु कामये भद्रमस्तु ते । ( बालम्भट्यां पृष्ठे ६५४ )

[2] टिप्पणी—( वि० वि० देशपाण्डे )—पुत्रपदं पौत्रप्रपौत्रयोरप्युपलक्षणमिति । भूमिकायां दत्तकप्रतिनिधीकरणहेतुनां या मीमांसा कृता तस्याः सकाशात् कस्याश्चिद्व्यक्तेः पुत्रस्थाने यदि पौत्रः स्यात्तर्ह्यपि तद्व्यक्तेः समाजव्यवस्थायां यत्कर्तव्यं तत्संपन्नमित्यवगन्तुं न कोऽपि प्रतिबन्धः । पुत्रस्थाने पौत्रप्रपौत्रयोः सर्वश्रेष्ठः प्रतिनिधिरिति निर्वृत्तिः ( निवड ) कृता धर्मशास्त्रे सर्वत्राऽऽलक्ष्यते । श्राद्धाधिकारिणां मध्ये पुत्राभावे सोऽधिकारः पौत्रप्रपौत्रयोरस्त्येव । दायविभागस्वीकृतावपि तौ स्त एव । नैतावदेव, किन्तु कस्यचिद्धनिनः पुत्रत्रयमध्ये द्वितीयस्तृतीय-

पुत्रेण लोकाञ्जयति पौत्रेणाऽऽनन्त्यमश्नुते ।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याऽऽप्नोति विष्टपम् ॥

इति पौत्रादिना । विशिष्टलोकप्राप्तिप्रतिपादनेन नापुत्रस्य लोकोऽस्तीत्याद्यलोकतापरिहारात् । न च पिण्डोदकदानार्थं तत्करणमिति वाच्यम् ।

'पुत्रः पौत्रः प्रपौत्रश्च तद्वद्वा भ्रातृसंततिः'
इत्यनेन तयोरेव तदधिकारावगमात् ।[1]

[2]अपुत्रेणेति पुंस्त्वश्रवणान्न स्त्रिया अधिकार इति गम्यते । अत एव

---

करणमत्र निष्प्रयोजनमिति भावः । कश्चित्तत्र एवकारस्य अप्यर्थमाह तत् प्रयोजनन्तु तेनैव ज्ञातं वयन्तु न विद्मः । पुंस्त्वश्रवणात् तथा च स्त्रिया प्रतिग्रहनिषेधेना

---

श्चेति द्वौपुत्रौ निधनं गतौ । तत्र द्वितीयो जीवत्पुत्रस्तृतीयस्तु जीवत्पौत्रः । एवं च धनिन एकः-पुत्र एकः पौत्र एकःप्रपौत्रश्च जीवन् वर्तते । तत्र जीवत्पुत्रेण सह पौत्रप्रपौत्रयोरपि समोधनग्रहणाधिकारः । नित्यपार्वणश्राद्धेश्राद्धकर्तायजमानोऽयं स्वपितृत्रयीमुद्दिश्य श्राद्धं करोति । अर्थादेकसमयावच्छेदेन पितृपितामहप्रपितामहेभ्यः पूर्णपिण्डदानाधिकारो व्यक्तेर्वर्तते । एतस्यमुख्यं कारणम् प्राचामार्याणां दीर्घतरजीवितकालेनाऽऽधारितं भवेदिति भाति । प्रपौत्रो यावता कालेन ज्ञानदशां प्राप्य कुलधर्मकुलाचाराञ्जानीयात्तावन्तं कालं तत्प्रपितामहेन जीवदवस्थेन भाव्यम् । शक्यं चेदं जीवदवस्थानम् । तस्मादेतावतीनां प्राक्तनीनां वंशपीठिकानां श्राद्धकर्तुर्यजमानस्य साक्षात् स्मृतिसत्त्वेन पार्वणश्राद्धे निरुक्तपितृत्रय्युद्देशेन पुत्रं प्रति पिण्डदानविधिः पुत्रेण सह पौत्रप्रपौत्रयोरपि पिण्डदानविधौ कर्तृत्वेन योजनं च कृतं स्यादिति भाति । अर्थाद्यस्य पौत्रः प्रपौत्रो वा जीवन् स्यात् पुत्रस्तु जीवन्नस्यात्तथाऽपि पितामहप्रपितामहयोर्दत्तकग्रहणधिकारेण न भवितव्यमित्योघेनैवाऽऽयाति ।

[1] बालम्भट्टीधृतविष्णुपुराणस्थपराशरवचनेनानेन पौत्रप्रपौत्रयोरपि पिण्डदानाद्यधिकारस्य लोकानन्त्यं दिवः प्राप्तिः । ( याज्ञ० स्मृ० १।७८ )

[2] टिप्पणी—अपुत्रेणेति पुंस्त्वश्रवणान्न स्त्रिया अधिकार इति गम्यते । अतएव वसिष्ठः 'न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्तुः' इति । अनेन विधवाया भर्त्रनुज्ञानासंभवादनधिकारो गम्यत इति । तदिदं दत्तकसम्बन्धि नन्दपण्डितमतमाधुनिकन्यायालयैस्तु नैव मानितम् । परन्तु प्राचीनैः कतिपयैष्टीकाकारैर्भाष्यकारैरपि न स्वीकृतम् । स्त्रियाः पुत्रग्रहणाधिकारप्राप्तौ तद्भर्त्रनुज्ञाऽऽवश्यकी । विधवानां स्त्रीणां भर्त्रभावेनेयमनुज्ञाप्राप्तिर्दुर्घटा । सधवा स्त्री भर्त्राऽनुज्ञा

वसिष्ठः—'न स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्तुरिति'। अनेन

---

विवक्षाकारणस्यासद्भावादिति भावः। अतएव पुंस्त्वस्य विवक्षितत्वेन न स्त्रियाः स्वतः परिग्रहाधिकारः अतएवेत्यर्थः। अनेन वशिष्ठवचने भर्त्तनुमतिं विना स्त्रियाः परि-

---

दत्ता स्याच्चेदमन्त्रकं परिग्रहहोमादिविधिं कृत्वा दत्तकं ग्रहीतुं शक्नुयादित्येवं नन्दपण्डित-मतम्। एतस्माद् विवरणात्पुत्रपरिग्रहानुज्ञा भर्त्रा पुत्रपरिग्रहसमय एव दत्ता सती स्त्रिय-स्तादृशाधिकारप्राप्तिर्भवतीत्येवं नन्दपण्डिताभिप्राय आलक्ष्यते। परमेतद्व्यतिरिक्ताः कतिपयेऽपि विद्वट्टीकाकारा इयमनुज्ञा भर्त्रा स्वमरणात्प्रागदीयेताथ च तदनुसारेण पतिमरणोत्तरं तया स्त्रिया दत्तको गृह्यते चेत्स शास्त्रशुद्ध एवेत्यलेखिषुः। एतदनुसारेणैव काशीवंगालप्रान्तस्थितन्यायमन्दि-रैर्विधर्गं प्रति स्वमरणात्प्राक् तद्भर्त्रा पुत्रग्रहणानुज्ञायां दत्तायां तदाज्ञामनुसृत्य तया दत्तको गृहीतश्चेत्स राजकीयनियमानुरीति निर्णयोदत्तः (तुलसीराम वि० बिहारी लाल १२ अ० ३२८)। अ० इत्यस्य एलाहाबाद इत्यर्थोज्ञेयः। भर्ता दत्ताया अनुज्ञाया उपयोगो विधवयैव कर्तव्यो भवति, तस्याः स्थाने तदनुज्ञयाऽप्यन्येन केनापि दत्तको नैव ग्राह्यो भवति (लक्ष्मीबाई वि० रामचन्द्र २२ मुंबई ५९०)। लब्धानुज्ञया स्त्रियाऽमुष्मिन्नमुष्मिन्नित्येवं मर्यादितकाल एव दत्तको ग्राह्य इत्येवं निर्बन्धं तदुपर्यारोपयितुं न कोऽपि शक्नुयात्। तया स्वेच्छया कदाऽपि दत्तको ग्राह्यः (मुत्सद्दीलाल वि० कुन्दनलाल ३३ इं० अ० ५५)। भर्तृदेयाऽनुज्ञा लेखतो मुखतो वा यथा कथा च भवतु तथाऽपि सा राजकीयनियमानुसारिण्येवेति निरुक्तनिर्णयप्रसङ्गे निरचायि। अनुज्ञा-दानसमये भर्त्रा योग्या ये केचनापि निर्बन्धाः स्वेच्छया ग्राहयितव्याः। तादृशनिर्बन्धपरि-पालनेनैव विधवया दत्तको ग्रहीतुं शक्यो न निर्बन्धबाधेन (वेलकी वि० वेङ्कटराम ४इं० अ०१)। कारणं स्वभर्तुः सर्वेच्छानां यावच्छक्यं परिपालनं हिन्दुविधवाया धर्म इत्येवममान्यतया गृहीतं धृतम् (सीताबाई वि० बापू ४७ इं० अ० २०२)। एकापेक्षयाऽधिकानां विधवानां जीवन-दशायां ययाऽनुज्ञा लब्धा तस्या एव दत्तग्रहणाधिकारः। यदि तु सर्वासामेवानुज्ञा दत्ता स्याच्चे-त्प्रथमतो ज्येष्ठस्त्रियाः सोऽधिकारः। ज्येष्ठा च दत्तकं नेच्छति चेत्कनिष्ठविधवायास्तादृशा-धिकारः प्राप्नुयात् (मन्दाकिनी वि० आदिनाथ १८ कलकत्ता ६९)। ज्येष्ठविधवायां मृतायां कनिष्ठविधवाया दत्तकग्रहणे प्रतिबन्धो न। तथाज्येष्ठविधवाऽनीतिमती स्याच्चेदर्थादेव कनिष्ठ-विधवाया अधिकारोऽस्त्येव (पदाजीराव वि० रामराव १३ मुंबई १६०)। कारणं भर्तृ-मरणानन्तरमपि सा स्त्री स्वभर्तरि एकनिष्ठा स्याच्चेदेव भर्त्रा क्रियमाणानि धर्मकृत्यान्याचरितुं दत्तकग्रहणे तस्या अधिकारोऽस्तीत्येवं मान्यं कृतमस्ति।

मद्रासप्रदेशे स्मृतिचन्द्रिकापराशरमाधवीयेत्यादयो ग्रन्थाः प्रमाणत्वेन गृह्यन्ते। तेषु

**विधवाया भर्त्रनुज्ञानासम्भवादनधिकारो गम्यते। न च सधवायाः स्वभर्त्रनुज्ञापेक्षापारतन्त्र्यान्न विधवाया इति वाच्यम्।**

---

ग्रहनिषेधेन भर्त्तनुज्ञानासम्भवादिति विधवावस्थायामिति शेषः। स्त्रीसामान्योपादानेनेति। न स्त्री पुत्रं प्रतिगृह्णीयादिति वशिष्ठवचने स्त्रीमात्रश्रुतेः सङ्कोचे प्रमाणाभावादिति भावः।

---

ग्रन्थेषु वशिष्ठवचनस्थभर्तृशब्दस्य 'रक्षणकर्ता पालनकर्ता' इत्येवमर्थो गृहीतः। तेन विधवाया भर्त्रभावे यः पालनकर्ताश्वसुरो देवरो वान्यः कोऽपि भर्तृकुटुम्बान्तर्गतः कर्तापुरुषो वा स्यात्तदनुज्ञया विधवया दत्तको ग्रहीतुं शक्य इत्येवं निर्णयस्तद्देशीयन्यायालयैर्दत्तोऽस्ति ( मदुरा कलेक्टर वि० मुद्दुरामलिंग १२ मू० इं० अ० ३७७ )। कश्चिदेकः पुरुषः स्वजीवनदशायां सगोत्रसपिण्डैः सहैकत्र कुटुम्बनिवासी सन् मृतश्चेत्तद्भार्यया तत्कुटुम्बवर्तिनः भर्तुः पुरुषस्याऽऽज्ञया दत्तकः स्वीकार्यः। यदि तु सगोत्रसपिण्डेभ्यो विभक्तत्वेन निवसन् मृतश्चेत्तर्ह्यपि तद्भार्यया स्वभर्तुः सगोत्रसपिण्डानां विद्यमानानामनुज्ञया दत्तकः स्वीकर्तव्य इत्येवं मद्रासप्रदेशस्थन्यायालयैर्निश्चितम् ( अ० कृष्णय्या वि० अ० लक्ष्मीपति ४७ इं० अ० ९९ )।

एवं प्रकारेण विधवाया दत्तकग्रहणाधिकारस्य सगोत्रीयस्वसंबन्धिश्वसुराद्यनुज्ञापेक्षत्वेन यदि केनचिद्देवरादिसम्बन्धिना मनसि कंचिद्धेतुमनुसंधाय ( यदीयं भ्रातृजाया पुत्रग्रहणं विनैव म्रियेत तर्हि तद्भर्तुर्धनमहं लभेयेत्येवमनुसंधाय ) अनुज्ञां न दद्यात्तर्हितत्सगोत्रीयसंम्बन्धिनाऽन्येन केनाप्यनुज्ञा धर्मबुद्धया दीयेत चेत्तावताऽपि विधवाया दत्तकग्रहणाधिकारः प्राप्नोतीत्येवं नियमनिश्चितिकरणम् सुतरामावश्यकं—संजातम् ( व्यंकटकृष्णम्मा वि० अन्नपूर्णम्मा २३ मद्रास ४८६ )। यदा तु सगोत्रीयः स्वसंबन्धी कोऽपि जीवन् न स्यात्तदाऽसगोत्रः सन्नपि सपिण्डो यः स्वसंबन्धी तदनुज्ञया विधवया दत्तको ग्रहीतुं शक्यः ( केसरसिंह वि० सेक्रेटरी ऑफ स्टेट, ४९ मद्रास ६५२ )। एतद्वद् येन स्वसम्बन्धिनाऽनुज्ञा दत्ता स दत्तक ग्रहणात्प्राङ्मृतश्चेदपि विधवया राजकीयनियमानुसारी दत्तको ग्रहीतुं शक्यते, किन्तु दत्तकग्रहणविषये तया विधवया विना करणं कालविलम्बो न कृत इति सिध्येच्चेत् (अन्नपूर्णम्माः वि० अप्पय्या ५२ मद्रास ६२०)। अनया रीत्या कस्याश्चिदेकस्या विधवाया औरसपुत्रः स्यात्तेन च स्वमरणानन्तरं दत्तको ग्राह्य एवमनुज्ञां स्वमात्रे दत्वा पश्चात्स मृतस्तर्हि तादृश विधवयाऽन्यस्य कस्याप्यनुज्ञामनपेक्ष्यैव दत्तको ग्राह्यः। स च राजकीय नियमानुसारी भवतीत्येवं निर्णय उपरिनिर्दिष्ट (अन्नपूर्णम्मा वि० अप्पय्या ५२ मद्रास ६२० ) इति विवादोत्तरदानसमयेऽदायि। एकदा दत्ताऽनुज्ञा तादृक् किंचिन्महत्कारणं विना प्रत्यादातुं नैव शक्या (शिव-सूर्यनारायण वि० आदिनारायण, १९३७, मद्रास

स्त्रीसामान्योपादानेन पारतन्त्र्यस्याप्रयोजकत्वात्। अभावे ज्ञातयस्ते-षामिति ज्ञातिपारतन्त्र्यस्य सद्भावाच्च ॥ ६ ॥

---

ज्ञाति पारतन्त्र्यसद्भावाच्चेति।

रक्षेत् कन्यां पिताविन्नां पतिः पुत्रास्तुवार्द्धके।
अभावे ज्ञातयस्तेषां न स्त्रीस्वातंत्र्यमर्हति ॥

इति याज्ञवल्क्यवचनादित्यादिः। इदन्तु न सम्यक् पूर्वोक्तमेव साधीयः नहि पारतन्त्र्यमेव पुत्रपरिग्रहाभावे प्रयोजकं तथात्वे न स्त्रीपुत्रं दद्यात् प्रतिगृह्णीयाद्वा इत्यादि वशिष्ठोक्तनिषेधवैयर्थ्यापत्तेः परन्तु

मृते भर्तरि साध्वीस्त्री ब्रह्मचर्ये व्यवस्थिता।
स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिण ॥

---

३४७)। परंतु याऽसावनुज्ञा स्वार्थबुद्धया प्रेरितो भूत्वा दत्ता स्यादथवा तस्याः सकाशाद्धनादि ग्रहणेन दीयेत तादृशानुज्ञानुसारेण गृहीतो दत्तकोऽशास्त्रीयो राजकीयनियमानुसारी एव (बेकायदेशीर) निश्चीयताम्।

मुम्बापुरीनागपूरप्रभृतिप्रदेशमध्ये तु मद्रासप्रान्तापेक्षयाऽपि विधवाया दत्तकग्रहणा-धिकार मर्यादाऽतिविस्तृता वर्तते। सत्येऽवलोकिते तु निर्णयसिन्धुधर्मसिन्धुव्यवहारमयूख प्रभृतयो ये ग्रन्था एतस्मिन् प्रान्ते मान्याः संजाताः सन्ति तेषु स्त्रीणां सर्वसाधारणाः पारतन्त्र्य-विषयका विचाराः, स्वेतरप्रान्तीयमान्यग्रन्थकारविचारवदेव सन्ति। अर्थाच्छैशवे पिता, यौवने भर्त्ता, वार्धके पुत्राः, एतेषामभावे तत्कुटुम्बवर्ती अथवा तज्ज्ञातीयो वयोवृद्धः पुरुषः, एते स्त्रियाः पालनकर्तारः सन्ति, सेयं व्यवस्थोपर्युद्धृतग्रन्थेष्वपि ग्रथिताऽस्ति। सत्येवं यस्याः पतिर्जीवन-दशायां स्वबान्धवेभ्यः पृथङ्न्यवात्सीत्तादृशविधवायाः स्वसंबन्धिदेवरादिबान्धवानामनुज्ञां विनैव दत्तको ग्राह्यो भवेदिति मोहमयीमहान्यायालयध्यक्षेण निर्णयो दत्तः (रखमाबाई वि० राधाबाई ५ मुं० हा० कौ० (अ०) १८१)। सोऽसौ निर्णयः, व्यवहारमयूखस्यस्खलितभाषान्तरा-द्धुनीतत्वेनार्थात्स्खलित आसीत्। परन्तु यस्या विधवायाः पतिः स्वजीवनदशायां स्वबन्धुभिः सहैकत्र कुटुम्बे निवसति स्म तादृशविधवायास्तन्मरणोत्तरं दत्तकजिघृक्षायां सत्यामविभक्त सपिण्डादिबान्धवानां संमतिमन्तरेण तद्ग्रहणमशक्यमिति निर्णयो मोहमयीमहान्यायलयेन तद-नन्तरं कृतः (रामजी वि० घमाऊ ६ मुं० ४९८)। अस्मान्निर्णयादेतन्निश्चीयते— यदेक कुटुम्ब-वर्तिनी विधवास्त्री तु दत्तक ग्रहणविषये पारतन्त्र्यवती। तस्याः श्वसुरस्य देवरस्य वाऽनुमतिमन्त-रेण तृतीयः कश्चिदसंबन्धी पुत्रः सपिण्डत्वेन स्वकुले प्रवेशयितुं न शक्य इति। परं 'प्रिह्वी कौन्सिल'

तर्हि ज्ञात्यनुज्ञयैव तस्याः पुत्रीकरणमस्त्विति चेन्न । भर्तृपदस्योपल-क्षणतापत्तेः प्रयोजनासिद्धेश्च । प्रयोजनन्तुभर्त्रनुज्ञानस्य स्वीकृतपरिग्रहे-

---

इति मनुना अपुत्रायाऽपि विधवाया ब्रह्मचर्याचरणेन अलोकता परिहारोक्तेः प्रयोजना-भावादेव पुत्रपरिग्रहाभावः सिध्यति इति तात्पर्यः ॥

ननु अलोकता परिहार एव अन्यत्रानुज्ञानाद्भर्तुरित्यत्र भर्तृपदस्य उपलक्षणत्वे बीजमुच्यते इत्यत्र आह प्रयोजना सिद्धेश्चेति तथा च अलोकता परिहारो नात्र प्रयो-

---

इत्याख्यसर्वश्रेष्ठन्यायालयस्य मोहमयीन्यायालयकृतोऽयं निर्णयो नारोचिष्टेति कृत्वेदानीं तेन सर्व-श्रेष्ठन्यायमन्दिराध्यक्षेणैवं नियमोऽकारि यन्मोहमयीप्रदेशेऽथवा नागपूरप्रदेशे कृतवसतिर्विधवा विभक्ता वाऽविभक्ता वा कथमप्यस्तु तस्याः कस्याप्यनुमतिमन्तरेणैव दत्तकग्रहणे पूर्णं स्वातन्त्र्यं वर्तते ( भीमा बाई वि० गुरुनाथगौडा ६० इं० अ० २५ ) । अथ कस्याश्चित्पत्यौ जीवति सति तेन यदि स्वस्त्रीं प्रति दत्तको नैव त्वया ग्राह्य इति निर्बन्धः स्वमरणसमये कृतः स्याच्चेत्त-र्ह्येव तस्याः स्त्रिया दत्तकग्रहणविषयकं स्वातन्त्र्यं संकुचितं भवितुं शक्यते नान्येन केनापि ।

नन्दपण्डितवचनानुसारेण केवलं मिथिलाप्रदेशे तराई विभागे च विधवाया दत्तकपुत्र ग्रहणविषये सर्वथाऽधिकारो नास्तीत्येवं न्यायमन्दिरेऽपि मान्यं जातमस्ति । उपरितनविचार चर्चायां ये प्रान्ता नोल्लिखितास्ताद्दशप्रान्तगतविधवायादत्तकग्रहणधिकाराः स्थलवैशिष्ट्येना-थवा प्रान्तवैशिष्ट्येन रूढ्यनुसारेण निश्चिता भवन्ति । इतः पर्यन्तं भिन्न भिन्न प्रान्तेषु संजात निर्णयानुसारेण विधवाया दत्तकग्रहणाधिकारश्चर्चितः । अधुना विधवाया दत्तकग्रहणाधिकारे सति कुतः पर्यन्तं सा स्त्री तमधिकारमुपयोक्तुं शक्नुयादिति निरीक्षणीयं भवति । एतत्प्रश्न-संबन्धेन न्यायमन्दिरदत्तविवादनिर्णयेष्वद्यपर्यन्तमेकवाक्यता नाऽऽसीत् । केचिदिदं प्रतिपाद-यन्ति—यत्पतिः स्वबन्धुभ्यो विभक्तः सन्मृतः, अथ च तदुपार्जितं धनं ( धनग्रहणाधिकारा-नुसारेण ) तद्भार्यायत्तं चेत्तर्ह्येव तस्या दत्तकग्रहणाधिकारः समस्तीति मन्तव्यम् । यदि च तद्धनं तदधिकारानुरोधाद् भार्याव्यतिरेकेणान्यस्य कस्याप्यायत्तं चेत्संजातं तर्हि तस्या स्त्रिया-स्तादृशाधिकारो नास्तीति मन्तव्यं भवति ।

पत्यनुज्ञानुसारेण विधवया दत्तको गृहीतः सोऽपि च स्वपत्नीं स्वपुत्रं वाऽवशेष्य मृतः । परिग्रहीत्री माताऽवशिष्टैव । एतस्यां परिस्थितौ तादृशमातुस्तद्भर्त्रा यद्यपि दत्तकग्रहणधि-कारो दत्त आसीत् तथाऽपि तादृशाधिकारानुसारेण तया मात्रा दत्तको ग्रहीतुं न शक्यते । कारणं निरुक्तपरिस्थितौ तस्या अधिकारः सर्वात्मना निवृत्तो भवतीति ( रामकृष्ण वि० शामराव २६ मुं० ५२६ ) ।

णापि भर्तृपुत्रत्वसिद्धिः । अत एव '[1]अथोढ़क्षेत्रजकृत्रिमपुत्रिकापुत्रस्त्रीद्वारजासुराद्यूढजदत्तिणाजानां पित्रोश्च' इति सत्याषाढसूत्रे स्त्रीद्वारजस्य गोत्रद्वयसंबन्धोऽभिहितः 'मातुरुत्तरं पितुः प्रथमम्' इति सूत्रेणापि । पितृगोत्रसंबन्धश्च पितुः पुत्रत्वेन । पुत्रत्वं च पित्रनुज्ञानेनैव न परिग्रहेण । तस्य तत्र स्त्रीकर्तृत्वात् । ऊढः सहोढः । स्त्रीद्वारजः स्त्रीयाचितः स्त्रीसत्ताकः ।

जनं ब्रह्मचर्यानुष्ठानेनैव तत्सिद्धेः । स्वयमेव प्रयोजनं दर्शयति । प्रयोजनन्त्वित्यादि भर्त्रनुज्ञानस्येति अनुमतेः प्रतिनिधित्वप्रयोजकत्वादिभावः । स्त्रीकृतपरिग्रहेणापि प्रतिनिधिभूत स्त्रीकृतपरिग्रहेणेत्यर्थः । अत एव प्रतिनिधिभूतस्त्रीकृतग्रहणेन भर्तृपुत्रत्वसिद्धिरतएवेत्यर्थः । पित्रोमातापित्रोर्गोत्रं भवति इत्यर्थ एतत्तु शाख्यन्तरीयम् । तथा च कात्यायनः—

संस्थितायान्तु भार्य्यायां सपिण्डीकरणान्तिकम् ।
पैतृकं भजते गोत्रमूर्द्धन्तु पति पैतृकम् ॥

अन्यशाखिनान्तु पाणिग्रहणात्परं पतिपत्न्योरेकगोत्रम् । मातुरूत्तरं पितुः प्रथमः गोत्रमिति शेषः । पितुः पुत्रत्वेन पितुः प्रथममिति पितृपदस्वरसादितिभावः । न परिग्रहेण न परिग्रहमात्रेण । तस्य परिग्रहस्य तत्र भर्तृरभावस्थले स्त्रीकर्तृकत्वात्

[1] मञ्जरीव्याख्या—ऊढः सहोढः ( म० स्मृ० ९।१७३ )। क्षेत्रजः ( मनु० स्मृ० ९।१६७ ) इत्यत्रोक्तः । कृत्रिमः ( म० स्मृ० ९।१६९ ) इत्युक्तः । पुत्रिकापुत्रः-पुत्रिकायाः पुत्रः । स च—

'अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् ।
अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति ॥'

इति वसिष्ठोक्तः । स्त्रीद्वारजः—स्त्रिया द्वारेण जातः । प्रवासादिना भर्तुरसंनिधानेन स्त्रीमात्रकर्तृकपरिग्रहेण भर्तुः पुत्रत्वमापन्नः । तदुक्तं स्त्रीयाचित इति । एवकारगर्भस्तृतीयातत्पुरुषः । आसुराद्यूढजः—आसुरगान्धर्वराक्षसपैशाचाख्यैर्विवाहविशेषैः स्वीकृतायां कन्यायां जातः । आसुरादिविवाहस्वरूपं मनुस्मृतौ ( अ० ३ श्लोक० ३१।३२ ३३।३४ ) इत्यत्र द्रश्यम् । पित्रोश्चेत्यन्तेन सूत्रेण तथा मातुरूत्तरीमत्यग्रिमसूत्रेणापि स्त्रीद्वारजस्य गोत्रद्वयसंबन्धः प्रतिपादित इत्यर्थः । तथा सति स्त्रीमात्रपरिगृहीतदत्तकस्य यः पालकपितृगोत्रसंबन्धो भवति स पालक निरू-

यज्ञे दक्षिणात्वेन प्राप्तायां कन्यायां जातो दक्षिणाजः। अन्ये प्रसिद्धा इति शबरस्वामिनः॥ ७॥

अत्र च स्त्रिया द्वारताभिधानेन द्वारी पुरुषो लभ्यते। अन्यथा स्त्री-

---

स्त्रीमात्रकृतिजन्यत्वात्। स्त्रीद्वारज इत्यस्यार्थमाह स्त्रीयाचितः स्त्रियापरिगृहीत इत्यर्थः। स्त्रीसत्ताकः भर्तुरभावेन स्त्रीमात्रवर्तमानसमये सम्पादितः इत्यर्थः। अन्यथा सहोढ़ादीनामपि स्त्रीद्वारजत्वसत्त्वात् अमीषां पृथगुपादानं व्यर्थं स्यात्।

यज्ञदक्षिणात्वेन प्राप्तायां यज्ञदक्षिणात्वेन प्राप्त्युत्तरविवाहितायां दैवविवाहेन विवाहितायामिति यावत्। तल्लक्षणन्तु मनुना उक्तं यथा—

यज्ञे तु वितते सम्यगृत्विजे कर्मकुर्वते।
अलङ्कृत्यसुतादानं दैवं धर्मं प्रचक्षते॥

अन्ये क्षेत्रजकृत्रिमादयः प्रसिद्धाः सहजलभ्याः। अत्रेदमवधेयं पुत्रिका पुत्र इत्यत्र पुत्रपदेन अवशिष्टपुत्रो गृह्यते आसुरादीत्यादिपदात् दण्डापूपन्यायाद्वा अवशिष्टसर्वविवाहानां ग्रहणं तत्तदूढ़ाजत्वेन औरसस्य प्रकारभेद एव दर्शितः। अतो न द्वादशविधपुत्रत्वानुपपत्तिः॥ ७॥

---

मञ्जरीव्याख्या

पितपुत्रत्वसत्त्वादेव भवति। तन्निरुपितपुत्रत्वं च तदनुज्ञानेनैव वक्तव्यं न परिग्रहणकर्तृत्वेन। तादृश दत्तकपरिग्रहस्यस्त्रीमात्रकर्तृकत्वादिति भावः। भर्त्तनुज्ञानाभावे स्त्रीमात्रकर्तृकपरिग्रहस्याप्रसक्तेः स्त्रीद्वारजस्य खपुष्पायमाणत्वेनासतो गोत्रद्वयसंबन्धः सुतरां दुर्घटः। अतस्तदन्यथाऽनुपपत्त्या स्त्रीद्वारजोऽवश्यमङ्गीकार्य एव। अङ्गीकृते च तस्मिन्भर्त्रनुज्ञानमपि स्त्रिया गले पतितमेव। "न स्त्री पुत्रं दद्यात्०" इति सूत्रेण भर्त्रनुज्ञानमन्तरेण नेत्येवं भङ्ग्यन्तरेण स्त्रियाः—पुत्रदानादेः प्रतिषेधं कुर्वता वसिष्ठेन नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वमिति न्यायेन भर्त्रनुज्ञानसहकारेणैव स्त्रियाः पुत्रदानाद्यधिकारस्य प्रतिपादनात्। तथा सत्यनुज्ञानद्वारेण स्त्रीकर्तृकपरिग्रहे भर्तुरपि संबन्धात्स्त्रीद्वारजे भर्तृ पुत्रत्वसिद्धिः। तत्सिद्ध्या च स्त्रीद्वारजे गोत्रद्वयसंबन्धाभिधानं सूपपादमिति भावः। तदेवोपपादयति—अत्र चेति। स्त्र्येव द्वारं स्त्रीद्वारम्। स्त्रीद्वाराज्जातः पुत्रः स्त्रीद्वारज इति व्युत्पत्त्या स्त्रीद्वारमित्येवं प्रतिपादनेन प्रत्यासत्त्या तद्भर्ता द्वारी पुरुषो लभ्यत इत्यर्थः।

---

परिगृहीतस्य तन्मात्रपुत्रत्वेन तद्भर्तृगोत्रसम्बन्धाभावात्। तद्भर्तृक्रियायामनधिकारापातात्तद्विवाहादौ च पित्रभावेन पितृगोत्रानुल्लेखप्रसङ्गाच्च।

यद्येवं तर्हि भर्तुरपि स्त्र्यनुज्ञापेक्षा स्यात् प्रयोजनतौल्यादिति चेन्न। भर्तृप्राधान्यात्तत्परिग्रहेणैव स्त्रिया अपि तस्मिन्पुत्रत्वसिद्धेः। भर्तृपरिगृहीतवस्त्वन्तरस्वत्ववत्। किञ्च व्याहृतिभिर्हुत्वाऽदूरबान्धवं बन्धुसन्निकृष्टमेव प्रतिगृह्णीयादिति समानकर्तृकताबोधकक्त्वाप्रत्ययश्रवणाद्धोमकर्तुरेव

---

द्वारीभूतपुरुषो लभ्यते इति करणस्य कर्त्तृव्यापाराधीनत्वादिति भावः। अन्यथा द्वारीभूतपुरुषग्रहणं विना। भर्तृगोत्रसन्बन्धाभावादिति न च 'पाणिग्रहणिका मन्त्रा पितृगोत्रापहारका' इति वृहस्पतिवचनात् विवाहेनैव पत्न्याः पितृगोत्रपरित्यागपूर्वकभर्तृगोत्रभागित्वात् तन्मात्रपुत्रत्वेऽपि तद्गोत्रभागित्वेनैव दम्पत्योर्गोत्रैक्यात् तद्भर्तृगोत्रसम्बन्धोऽस्ति कथं तद्भर्तृगोत्रसम्बन्धाभावादित्युक्तं सङ्गच्छते इति वाच्यं प्रागुक्तकात्यायनवचनात् तेषां शाखिनां सपिण्डीकरणस्य पितृगोत्रहारकत्वं तेषामेव शाखिनां दम्पत्योमर्गोत्रभेदेन निरुक्तस्थले तद्भर्तृगोत्रसम्बन्धाभावस्य सौलभ्यात्। ननु यदि नासौ तत्पुत्रस्तदा तस्य तद्भर्तृक्रियायामनधिकारापातेऽपि क्षतिविरहः इत्यत आह तद्विवाहादौ च पित्रभावेन इति आदिना तस्य पुत्रसंस्कारपरिग्रहः पितृगोत्राद्यनुल्लेखप्रसङ्गाच्चेति।

पिता च गोत्रञ्च तयोरादि पितृगोत्रादि तयोरनुल्लेखप्रसङ्गादित्यर्थः। तथा च स्त्रीमात्रजातस्य पित्रभावेन शास्त्रप्रापितपित्रादिश्राद्ध तन्नामाद्युल्लेखरूपाङ्गाभावात् विवाहवैकल्यापत्तेरिति समुदितार्थः।

तथा च ब्रह्मपुराणम्—

"नान्दीमुखेभ्यः श्राद्धन्तु पितृभ्यः कार्य्यमृद्धये।<br>
ततो विवाहः कर्त्तव्यः शुद्धः शुभसुतप्रदः॥"

ऋष्यश्रृङ्गोऽपि—

"वरगोत्रं समुच्चार्य प्रपितामहपूर्वकम्।<br>
नामसंकीर्त्तयेत् विद्वान् कन्यायाश्चैवमेव हि॥<br>
स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्मसु॥"

प्रयोजनतौल्यादिति यथाविवाहे पित्रादिश्राद्धरूपप्रयोजनवशात् स्त्रीमात्रगृहीत-

प्रतिग्रहसिद्धेः । स्त्रीणां होमानधिकारित्वात्प्रतिग्रहानधिकार इति वाचस्पतिः ॥ ८ ॥

न च शौनकीय आचार्यवरणाम्नानात् तद्द्वारा होमसिद्धिरिति वाच्यम् ।

होमसिद्धावपि प्रतिग्रहमन्त्रानधिकारेण प्रतिग्रहासिद्धेः ।

तदाहशौनकः—

देवस्य त्वेति मन्त्रेण हस्ताभ्यां परिगृह्य च ।
अङ्गादङ्गेत्यृचं जप्त्वा आघ्राय शिशुमूर्धनि ॥ इति ।

---

स्यापि तद्भर्तृपुत्रत्वसिद्धिरावश्यकी तथा विवाहाङ्गवृद्धिश्राद्धे छन्दोगेतरेषां मात्रादिश्राद्धरूपप्रयोजनसाम्यात् पुरुषगृहीतस्यापि तत्पत्नीपुत्रत्वसिद्धिरावश्यकी तथा च—

"मातृश्राद्धन्तु पूर्वं स्यात् पितॄणां तदनन्तरम् ।
ततो मातामहानाञ्च वृद्धौ श्राद्धत्रयं स्मृतम्" ॥ ८ ॥ इति

ननु एककर्तृत्वं इह न विवक्षितं तथात्वे होमाधिकारिणो दैवात् स्वयमकरणपक्षे प्रतिग्रहबाधापत्तेः अतएव जुहुयात् हावयेद्वापि इत्युक्तं अविवक्षणे च प्रतिनिधिना होमकरणपक्षेऽपि न प्रतिग्रहानुपपत्तिरित्यभिप्रेत्याशङ्क्यते न चेति । आचार्यवरणाम्नानादिति ।

"आचार्यं धर्मसंयुक्तं ब्राह्मणं वेदपारगम् ।"

मधुपर्केण सम्पूज्य इति वचनात् होमसिद्धावपीति एतेन स्त्रीशूद्राणामपि ब्राह्मणद्वारा होमाधिकारः सूचितः । सूचिता चात्र होमस्यासाधरणाङ्गता । प्रतिग्रहमन्त्रानधिकारेणेति न च ब्राह्मणवरणविधानात् यथा ब्राह्मणद्वारा होमसिद्धिस्तथा वृतब्राह्मणद्वारा प्रतिग्रहमन्त्रपाठाधिकारोऽपि सिद्ध्यति, कथमनधिकार इति वाच्यं जुहुयाद्धावयेत् वापीति विशेषवचनबलात् ब्राह्मणद्वारा होममात्राधिकारसिद्धावपि प्रतिग्रहमन्त्रपाठे तादृशवचनाभावात् मन्त्रपाठानधिकारिताया एव वाचस्पत्यभिप्रायकत्वात् प्रतिग्रहे मन्त्रस्य करणत्वं दर्शयति । तदाहेत्यादि एवमिति एवं शब्दः प्रकारवाची यथा मन्त्रानधिकारात् स्त्रीणां तथेत्यर्थः । व्यवस्थापकलिङ्गेन कर्त्तव्यताबोधकविधिना तदधिकारकल्पनात् शूद्राणाम् सजातीयपुत्रीकरणाधिकारविधानादित्यर्थः । अन्यथा तद्विधानं व्यर्थं स्यात् । एतेन परत्र निर्णीतप्रकारेण अस्य तु निरस्त इत्यनेनान्वयः ।

न चैवं शूद्राणामनधिकारप्रसङ्गः । 'शूद्राणां शूद्रजातिषु' इति व्यवस्थापकलिङ्गेन तदधिकारकल्पनात् । एतेन शूद्राणां होमप्रतिग्रहमन्त्रानधिकारेण पुत्रपरिग्रहानधिकार इति वदन्वाचस्पतिः परास्तः । विधवानां स्त्रीणां तु यथाविनियोगमधिकार समर्थनान्न पुत्रपरिग्रहाधिकार इति सिद्धम् ।

न चैवं सधवायामप्यनधिकारापत्तिर्होममन्त्राद्यनधिकारादिति वाच्यम् । अन्यत्रानुज्ञानाद्भर्तुरिति प्रतिप्रसवेन प्रधानाधिकारसिद्धावधिकृताधिकाराद्धोममन्त्रादि प्राप्तौ, 'स्त्रीशूद्राणाममन्त्रकम्' इति मन्त्र पर्युदाससिद्धेरमन्त्रकप्रतिग्रहसिद्धिर्वस्त्वन्तरप्रतिग्रहवत् । किञ्च 'न स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वा' इत्यौत्सर्गिकनिषेधस्य 'अन्यत्रानुज्ञानाद्भर्तुः' इत्यपवादकः प्रतिप्रसवः । तत्र च निमित्तं भर्त्रनुज्ञानम् । ततश्च विध-

---

यथा नियोगमिति नियोगमनतिक्रम्य यथा नियोगं नियोगधर्मानुसारेण इत्यर्थः । अधिकार समर्थनात् पुत्रोत्पादनमात्राधिकारादित्यर्थः । तथा च मनुः—

"विधवाया नियुक्तस्तु घृताक्तो वाग्यतो निशि ।
एकमुत्पादयेत् पुत्रं न द्वितीयं कथञ्चन ॥"

इत्यादि एतत्तु कलौ निषिद्धं यथा वृहस्पतिः ।

"उक्तो नियोगो मनुना निषिद्धः स्वयमेव हि ।
युगह्रासादशक्योऽयं कर्त्तुमन्यैर्विधानतः ॥
तपोज्ञानसमायुक्ताः कृतत्रेतादिकेनराः ।
द्वापरे च कलौ तेषां शक्तिहानिर्हि निश्चिता ॥
अनेकधाः कृताः पुत्राः ऋषिभिर्यैः पुरातनैः ।
न शक्यन्तेऽधुना कर्तुं शक्तिहीनैरिदन्तनैः ॥

न पुत्रपरिग्रहाधिकार इति सिद्धमिति न स्त्री पुत्रं दद्यात् प्रतिगृह्णीयादन्यत्रानुज्ञानाद्भर्तुरिति वशिष्ठवचनात् इति शेषः । अत्रान्यत्रानुज्ञानाद्भर्तुरित्युपदेशात् विधवायास्तु पत्यभावेन अनुज्ञासम्भवात् पुत्रपरिग्रहानधिकारः सिद्ध एवेति भावः । प्रधानाधिकारसिद्धौ प्रधाने पुत्रपरिग्रहेऽधिकारसिद्धौ सत्यामित्यर्थः । अधिकृताधिकारादिति प्रधानेनाधिक्रियते अधिकृतं अङ्गं तस्मिन् अधिकृते अङ्गे अधिकारादित्यर्थः । स्त्रीशूद्राणाममन्त्रकमिति मन्त्रपर्युदाससिद्धेरिति । ननु तद्धुतमहु-

वाया भर्त्रभावेनानुज्ञानासंभवान्निर्निमित्तकप्रतिप्रसवाप्रवृत्त्या प्रापकान्तराभावाच्चानधिकार इति सर्ववादिसम्प्रतिपन्नमेव।

न चैवमलोकतापरिहारो न स्यादिति वाच्यम्।

मृते भर्तरि साध्वी स्त्री ब्रह्मचर्यव्रते स्थिता।
स्वर्गं गच्छत्यपुत्राऽपि यथा ते ब्रह्मचारिणः॥

इति मनुना ब्रह्मचर्येणैव तत्परिहाराभिधानादिति सकलमकलङ्कम्। अपुत्रेणेत्येकत्वश्रवणाच्च न द्वाभ्यां[1] त्रिभिर्वैकः पुत्रः कर्तव्य इति गम्यते। नन्वेवं दत्तकादीनां द्व्यामुष्यायणत्वस्मरणं विरुध्येत। तथा च प्रयोगपारिजाते स्मृत्यन्तरम्—

---

तस्मादग्नौ न स्त्री जुहुयान्नानुपेत इत्यादि वचनात् स्त्रीशूद्रयोर्होमपर्युदासः कथं नोक्तः केवल मन्त्रपर्युदास एव उक्त इति चेन्न जुहुयाद्वावाययेद्वापि इति प्रागुक्तवचनात् तयोर्ब्राह्मण द्वारा होमाधिकारात् साक्षादग्नौ स्वयं करणमात्रप्रतिषेधात् मन्त्रमात्रपर्युदासकथनस्यैवौचित्यात्। अमन्त्रक प्रतिग्रहसिद्धिरिति एतेन होमं विना पुत्रपरिग्रहासिद्धिः सूचिता न च होमस्याङ्गत्वात् तदभावे कथं न परिग्रहसिद्धिरिति वाच्यम्। हुत्वा प्रतिगृह्णीयात् इति वशिष्ठवचने होमानन्तर्यविशिष्टप्रतिग्रह विधिश्रुतेर्होमस्यासाधारणाङ्गत्वप्रतीतेः। अत एव स्वयं वक्ष्यति दानप्रतिग्रहहोमाद्यन्यतमाभावे पुत्रत्वाभाव एवेति मन्त्रस्य तु आकाङ्क्षोत्थाप्यविधिविषयत्वेन साधारणाङ्गत्वात्। अत्रदृष्टान्तमाह। वस्त्वन्तरप्रतिग्रहवत् मन्त्रं विना यथा प्रतिग्रहसिद्धिस्तद्वत् तथा च मन्त्रस्याङ्गत्वेन तदभावेऽपि कर्मसिद्धिर्भवितुमर्हति। तथा च कात्यायनः।

"प्रधानस्याक्रिया यत्र साङ्गं तत् क्रियते पुनः।
तदङ्गस्याक्रियायान्तु नावृत्तिर्न च तत् क्रिया"।

ननु नियोगाधिकारसमर्थनादेव पुत्रपरिग्रहप्रतिषेधो न निर्नेतव्यः। प्रमाणाभावादित्यत आह किञ्चेति औत्सर्गिकनिषेधस्य स्त्रीत्वेन सधवाविधवा साधारणनिषेधस्य।

---

टिप्पणी —[1] (वि० वि० देशपाण्डे)—न द्वाभ्यां त्रिभिः वा एकः पुत्रः—न द्वाभ्यां त्रिभिर्वैकः पुत्रः कर्तव्य इति।

[२]द्वयामुष्यायणका ये स्युर्दत्तकक्रीतकादयः ।
गोत्रद्वयेऽप्यनुद्वाहः शुङ्गशैशिरयोर्यथा ॥ इति ।

मैवम् । द्वयामुष्यायणत्वस्य जनकपरिग्रहीतृद्वयाभिप्रायकत्वात् । निषेधश्च परिग्रहीतृद्वयमभिप्रेत्येति न विरोधः ।

---

तत्र च पुत्रपरिग्रहे च प्रापकान्तराभावाच्च विधवायाः पुत्रपरिग्रहज्ञापकविध्यभावाच्च । ते ब्रह्मचारिण इति सनकादयः । अकलङ्कं निर्विरोधसमाधितम् ॥ ९ ॥

---

[२] द्वयामुष्यायणकाः—द्वयामुष्यायणका ये स्युर्दत्तकक्रीतकादयः गोत्रद्वयेऽप्यनुद्वाहः शौङ्गशैशिरयोर्यथा । इति ।

तदेतत्प्रतीकद्वयसम्बन्धेनैकटिप्पणीलेखनमेव श्रेयस्करम् । ग्रन्थकारस्यायमभिप्रायः—अपुत्रेणेत्येकवचनान्तशब्देन गृह्यमाणस्यैकस्य पुत्रस्य परिग्रहीताऽप्येक एव विवक्षितो न द्वौ त्रयो वेति । द्वयामुष्यायणस्य जनकपरिग्रहीतृभेदेन द्वौ पितरौ भवितुं शक्नुतः । परं त्वेकस्य दत्तकपुत्रस्य प्रतिग्रहीतृ पितृद्वयं नो भवितुं शक्नोति । न्यायालयैरपि यो ह्येकदा यस्य दत्तकपुत्रत्वं स्वीकृतवान्सोऽन्यस्य कस्यापि दत्तकपुत्रत्वमङ्गीकर्तुं समर्थो नैव भवतीत्येवं निरचायि । तथैवैकस्यामेव वेलायां द्वौ पुरुषावेकं पुत्रं दत्तकं ग्रहीतुं नो शक्नुतः । यदि तु तेन प्रकारेण दत्तकग्रहणं कावपि कुर्यातां तर्हि तदशास्त्रीयं भवेदितिकृत्वा तन्नैव जातमिति भग्नं क्रियेत ( राजकुमार वि० विश्वेश्वर १० कलकत्ता ६८८) ।

तथैवैकेनैव पुरुषेणैकस्मिन्नेव समय एकापेक्षयाऽधिकाः पुत्रा दत्तकत्वेन गृहीताश्चेत्ते सर्वेऽप्य शास्त्रीयत्वान्निषिद्धाः क्रियन्ते ( अक्षयचन्द्र वि० कल्पहार १२ कलकत्ता ४०६ ) । एवं त्वेऽपि शास्त्रवचनमनुसृत्य द्व्यामुष्यायणस्यास्तित्वं न्यायालयैरपि मानितम् । आवयोरयं पुत्र इति पणबन्धं कृत्वा जनकेन प्रतिग्रहीत्रे स्वपुत्रो विधिना दीयते चेत्स उभयोरपि पुत्रो भवितुं शक्नोति अथ चोभयकुले दायग्रहणाधिकारास्तस्य लभ्यन्ते ( उमा वि० गोकुलानन्द ३ कलकत्ता ५८७, कृष्ण वि० परमश्री २५ मुंबई ५३७ ) । केषुचिदाङ्ग्लग्रन्थेषु यदा जनकपिता स्वस्यैकं पुत्रं स्वस्यैव भ्रात्रे ददाति तदा आवयोरयं पुत्र इत्युभयोर्मध्ये पणबन्धाभावेऽपि स उभयोः पुत्रोऽर्थाद् द्व्यामुष्यायणो विज्ञेय इत्येवं गृहीतमभूत किन्तु मुंबईमहान्यायालयेनतान्ग्रंथानमान्यान् कृत्वा एवं निश्चितम्—दत्तक ग्रहणात्प्रागथवा दत्तकग्रहणसमय आवयोरयं पुत्र इति जनक परिग्रहीत्रोः पणबन्धो जातोऽभूदिति सिद्धे जाते सत्येव स जनकप्रतिग्रहीत्रोरुभयोः पुत्रः—द्वयामुष्यायणो भवितुमर्हति नान्यथा । अन्यथा तु परिग्रहीतुरेव स पुत्रो न जनकपितुरिति ( लक्ष्मीपतिराव वि० व्यंकटेश ४१, मुंबई ३१५ ) ।

प्रतिनिधिश्च क्षेत्रजादिरेकादशविधः।

क्षेत्रजादीन् सुतानेतानेकादश यथोदितान्।
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः॥

इति मानवात्। तत्र च येषु दंपत्योरन्यतरावयवसम्बन्धस्तेषां न्यायादेव प्रतिनिधित्वम्।

---

एकत्वश्रवणात् विधेयवचने कर्तृविशेषणतया एकत्वश्रवणादित्यर्थः। न द्वाभ्यां त्रिभिर्वा एकः पुत्रः कर्तव्यः द्वाभ्यां त्रिभिर्वा मिलित्वा एक पुत्रो न ग्रहीतव्य इत्यर्थः। शुङ्गशैशिरयोर्यथा इति द्व्यामुष्यायनपुत्रस्य दृष्टान्तस्थानं शुङ्गशैशिरयोस्तत्तन्नामकव्यक्त्योरित्यर्थः। न विरोध इति। तथा च द्व्यामुष्यायणस्य तु जलाशयोत्सर्गवत् जनकस्य पुत्रत्वसत्त्वएव परिग्रहात् परिग्रहीतुरपि पुत्रत्वसिद्धिरतोऽत्र उभयोः परिग्रहाभावात् विरोधाभाव इति भावः।

प्रतिनिधिश्चेति। औरस एव मुख्यः पुत्रस्तदन्य एकादशविधः प्रतिनिधिगौणपुत्र इत्यर्थः। तथा च मनुः

"स्वक्षेत्रे संस्कृतायान्तु स्वयमुत्पादयेद्धि यम्।
तमौरसं विजानीयात् पुत्रं प्रथमकल्पितम्॥" इति।

प्रतिनिधिपुत्रकरणे प्रयोजनं दर्शयतिक्रियालोपादिति क्रिया श्राद्धादि तत्करणार्थमेव प्रतिनिधिपुत्रकरणम्। न्यायादेवेति। सुसदृशा एव गृह्यन्ते इत्यादि न्यायादेवेत्यर्थः। नियमार्थं तदितर निषेधार्थम्। तथा च एतदतिरिक्तस्थले संगृहीतस्त्रीस्थले जातपुत्रे यद्यप्यवयवसम्बन्धो घटते तथापि स प्रतिनिधित्वेन न ग्राह्य इति भावः। वाचनिकं वक्तुं मुख्यन्यायप्राप्तं गणयति यथेत्यादि पौत्रेयपुत्रिकामपुत्रपुत्रिका इत्यर्थः। अन्यथा एकादशत्वबहिर्भावापत्तेः कथनप्रयोजनन्तु पुत्रद्वारोपकारकत्वात्। पुत्ररहिताया उपकारकत्वाभावेन प्रतिनिधित्वाभावात् ततसत्वे प्रतिनिधिपुत्रान्तरं ग्रहीतुं शक्यते इति ज्ञापनमेव न्यायस्तु अवयवसम्बन्धः यस्य मातुः पितुर्वा अवयवसम्बन्धोऽस्ति स न्यायप्राप्तप्रतिनिधिः।

मातृमात्रसम्बन्धादिति क्षेत्रजगूढजयोरिति शेषः क्वचिच्चाविकलोभयसम्बन्धात् आनुपूर्विकपितृमातृभयावयवसम्बन्धात् अविकलावयवत्वेन अविकल पितृमातृभयावयवसम्बन्धाभावेनापि पुत्रिकाकालीनपौनर्भवसहोढानामिति शेषः।

वचनं तु नियमार्थम् । येषु पुनरवयवसंबन्धाभावस्तेषां वाचनिकं प्रतिनिधित्वम् । यथा क्षेत्रजपौत्रिकेयपुत्रिकाकानीनपौनर्भवसहोढजगूढजानां

---

कानीनपुत्रस्थले सहोढ़पुत्रस्थले च गान्धर्वविवाहेन पुत्रोत्पादनानन्तरं गर्भोत्पादनानन्तरञ्च पुत्रोत्पादकेन गर्भोत्पादकेन च सह स्त्रिया अग्निहोमादिविवाहसंस्कारो भवति इति शास्त्रार्थः ।

तथा च मनुः—

पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः ।
तं कानीनं वदेन्नाम्ना वोढुः कन्या समुद्भवम् ॥
(अ० ९ । १७२)

कुल्लूकभट्टः । पित्रिति । पितृगृहे कन्या यं पुत्रं अप्रकाशं जनयेत् तं कन्या परिणेतुः पुत्रं नाम्ना कानीनं वदेत् ॥१७२॥

या गर्भिणी संस्क्रियते ज्ञाताज्ञातापि वा सति ।
वोढुः स गर्भो भवति सहोढ इति चोच्यते ॥
(अ० ९ । १७३)

कुल्लूकभट्टः । येति । सा गर्भवती अज्ञातगर्भा ज्ञातगर्भा वा परिणीयते स गर्भस्तस्यां जातः परिणेतुः पुत्रो भवति सहोढ इति व्यपदिश्यते ॥१७३॥ प्रथमवचने वोढुरिति श्रवणात् द्वितीयवचने संस्क्रियते वोढुरिति श्रवणाच्च येन पुत्र उत्पाद्यते गर्भश्च सम्पाद्यते तेन सहैव पश्चात् पाणिग्रहणादिसंस्कारः अवगम्यते । अत एव—

पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिता ।
ना कन्यासु क्वचिन्नृणां लुप्तधर्मक्रिया हिताः ॥

इति मनु टीकायां कुल्लूक भट्टेन तथैवोक्तम् । पाणिग्रहणिकेति अर्य्यमणं देवं कन्या-अग्निमयक्षत इत्येवमादयो वैवाहिका मनुष्याणां मन्त्राः कन्या शब्द श्रवणात् कन्यास्वेव व्यवस्थिता ना कन्याविषये क्वचित् शास्त्रे धर्म्ये विवाह सिद्धये व्यवस्थिता असमवेतार्थत्वात् अतएवाह ताः क्षतयोनयः वैवाहिकमन्त्रैः संस्क्रियमाणापि यस्मादपगतधर्मविवाहक्रियाशालिन्यो भवन्ति नासौ धर्म्यविवाह इत्यर्थः ।

न तु क्षतयोनेर्वैवाहिकमन्त्रहोमनिषेधकं इदम् । या गर्भिणी संस्क्रियते तथा वोढुः कन्या समुद्भवमिति मनुना वक्ष्यमाणत्वात् ।

**क्वचिन्मातृमात्रसम्बन्धात्क्वचिच्च विकलोभय संबन्धाद्विकलावयवत्वेन मुख्यं प्रतिनिधित्वं दत्तकक्रीतकृत्रिमदत्तात्मापविद्धानां वाचनिकं प्रतिनिधित्वमिति । प्रतिनिधि शब्दश्चोभयत्रापि भूम्ना सृष्टीरुपदधातीतिवत् ॥१०॥**

---

देवले न तु—

गन्धर्वेषु विवाहेषु पुनर्वैवाहिको विधिः ।
कर्त्तव्यश्च त्रिभिर्वर्णैः समयेनाग्निसाक्षिक॥ इति ।

गान्धर्वविवाहेषु होममन्त्रादिविधिरूक्तः गान्धर्वश्चोपगमनपूर्वको भवति तस्य क्षत्रियविषये धर्म्यत्वं मनुनोक्तं अतः सामान्यविशेषन्यायेन इतरविषयोऽयं क्षतयोनिविवाहस्याधर्मत्वोपदेशः इति । अत्र गान्धर्वश्च उपगमनपूर्वको भवति इत्यनेन स्पष्टमुक्तं भवति अन्यथा पुरुषान्तरभुक्ताया विवाहनिषेधात् वोढुः संस्क्रियते -इत्यादिकं नोपपद्यते । तथा च याज्ञवल्क्यः—

अविल्पुतब्रह्मचर्य्यो लक्षण्यां स्त्रियमुद्वहेत् ।
अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ॥
( आ० ५२ )

अनन्यपूर्विकामिति दानेन उपभोगेन पुरुषान्तरसम्बन्धरहितामिति मिताक्षरा । एतेन शास्त्रार्थानभिज्ञतया क्षेत्रजकानीनसहोढजगूढजेषु मातृमात्रावयवसम्बन्ध इति केनचिदुक्तं पुत्रिकायां पौत्रिके ये चोभयीयावयवसम्बन्धः पुत्रिकायां साक्षात् पौत्रिकेये परम्परया इति शेषः, इत्यपरमुक्तङ्क मोहविजृम्भितमेव । परम्परया अवयवसम्बन्धस्य ग्राह्यत्वे पौत्रिकेयस्य प्रतिनिधिपुत्रत्वे च शूद्रस्य दौहित्रदत्तकविधानात् दौहित्रस्य परम्परया मातापित्रवयवसत्वात् दत्तकस्य नैयायिकत्वे दत्तकसामान्यस्य वाचनिकत्वोक्तिविरोधापत्तेः प्रतिनिधिपुत्राणां द्वादशत्वापत्तेश्च ।

यस्य तन्नास्ति स वाचनिकप्रतिनिधिः । तदेव गणयति दत्तकक्रीत इत्यादि । प्रतिनिधिशब्दश्चोभयत्राऽपीति । चोऽवधारणे उभयत्र मुख्यन्यायप्राप्त वचनप्राप्ते च प्रतिनिधिशब्दो व्यवहर्तव्य इत्यर्थः । दृष्टान्तमाह—भूम्ना इत्यादि उपदधाति, उपदिशति इत्यर्थः । तथाहि यथा न्यायमते नित्यत्वेनाकाशादीनां असृष्टत्वेऽपि तस्मादेतस्मादाकाशः सम्भूत इत्यादिश्रुतिवचनात् आकाशादीनां सृष्टत्वोपचारः एवं वाय्वादीनां सृष्टत्वेन न्यायतः सृष्टिरूपदिष्टा इत्युभयार्थता तद्वदित्यर्थः ॥१०॥

यत्तु मेधातिथिना 'न ह्येषां प्रतिनिधिता सम्भवति, प्रारब्धस्य कर्मणो-ऽङ्गापचारे प्रतिनिधिः। न च पुत्रः कर्माङ्गमपत्योत्पादनकर्मणोऽगुण-कर्मत्वात्। तेन सत्येव क्षेत्रजादीनां पुत्रशब्दे प्रतिनिधित्ववचनमौरसप्रशं-सार्थम्। उपकारापचयाभिप्रायत्वात्प्रतिनिधिव्यवहारस्य। यथौरसो भूयां-समुपकारं कर्तुं शक्नोति न तथेतर इत्युक्तम्, तच्चिन्त्यम्। दत्तकादीनां प्रतिनिधित्वाभावे साध्ये पुत्रोत्पादनकर्मणोऽनङ्गत्वस्य हेतोरपक्षधर्मत्वात्। तेषां सिद्धत्वेनोत्पादनायोग्यत्वात्।

अथ पुत्रोत्पादनविधौ पुत्रस्य भाव्यत्वेनानङ्गत्वम्। सत्यमनङ्गत्वं किन्तूत्पादनविधावेव न तु विध्यन्तरे। एष वा अनृणो यः पुत्रोत्पादि-

---

औरस एव पुत्रशब्दवाच्यः न दत्तकादिः यदमीषां पुत्रप्रतिनिधित्वोक्तिस्तदौरस-प्रशंसाज्ञापनेनैव उपपद्यते इति मेधातिथिमतमपाकर्तुं तन्मतमवतारयति यत्त्विति एषां दत्तकादीनाम्। असम्भवे हेतुमाह अङ्गापचारे प्रतिनिधिरिति। अङ्गत्वेनोपदिष्ट-द्रव्याद्यप्राप्तौ तत्कार्यसम्पादकत्वेन अनिषिद्धतदनुकारिवस्तुनः प्रतिनिधित्वेन ग्राह्यता। न चेति न हीत्यर्थः। अपत्योत्पादनकर्मणः ऋतुगमनेनापत्यमुत्पादनीयमिति विधि-सिद्धपुत्रोत्पादनकर्मण इत्यर्थः। अगुणकर्मत्वात् अङ्गत्वाभावात्, अङ्गानां प्रधानोप-कारकत्वेन प्राक्सत्त्वनियमादिति भावः। तेन अङ्गत्वाभावेन। पुत्रशब्दे पुत्रशब्द-प्रयोगे इत्यर्थः।

प्रतिनिधित्ववचनम्—

क्षेत्रजादीन् सुतानेता नेकादशयथोदितान्।
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः॥

इत्यादि वचनादिति शेषः। उपकारापचयाभिप्रायकत्वात् उपकारालपत्वज्ञापनाभि-प्रायकत्वादित्यर्थः, प्रतिनिधिव्यवहारस्य प्रतिनिधिपदप्रयोगस्य। दूषयति तच्चिन्त्य-मिति। दत्तकादीनामिति षष्ठ्यर्थो वृत्तित्वं तस्य प्रतिनिधित्वाभावेऽन्वयः तथा च दत्तकादिवृत्तिप्रतिनिधित्वाभावोऽत्र साध्यमिति फलितम्। पुत्रोत्पादनकर्मणः इत्यत्र षष्ठ्यर्थो निष्ठत्वं तस्यानङ्गत्वेऽन्वयः। अनङ्गत्वमङ्गत्वाभावः तथाच पुत्रोत्पादन-निष्ठाङ्गत्वाभावोऽत्र हेतुः। अत्र स्वरूपासिद्धिं हेतुं दर्शयति अपक्षधर्मत्वात् हेत्व-भाववत् पक्षत्वात् इत्यर्थः। पुत्रोत्पादननिष्ठो योऽङ्गत्वाभावः स दत्तकादिरूपपक्षे

वाक्येषु पुत्रेणाऽऽनृण्यं भावयेदिति विधिपर्यवसानेन पुत्रस्याऽऽनृण्यंकरणतयाऽङ्गतासिद्धेः। उक्तं च साक्षादेव मनुना पुत्रस्य करणत्वं पुत्रेण लोकाञ्जयतीत्यादिना। यद्येवं तर्हि पौत्रप्रपौत्रयोरप्यानन्त्यब्रध्नविष्टपप्राप्त्यर्थं पुत्रप्रतिनिधिः स्यात्। आस्तां नाम किं नश्छिन्नम्॥११॥

न चोभयैकवाक्यतयैकविधित्वसंभवः। ऋतुगमनपुत्रयोः करणयोः पुत्रानृण्ययोर्भाव्ययोश्चैकविधावनन्वयात्। अन्वये च विरुद्धत्रिकद्वयापत्तेः। तस्मादानृण्यभाव्यिकायां भावनायां पुत्रस्य करणतया तदपचारे दत्तकादीनां प्रतिनिधित्वमविरुद्धं सोमापचारे पूतिकानामिव। एतदेव स्पष्टीकृतं मनुना—

"क्रियालोपान्मनीषिण इति।"

---

नास्तीति ज्ञापयितुमुपन्यस्यति सिद्धत्वेनोत्पादनायोग्यत्वादिति जातस्यैव दत्तकत्वविधानेन तदानीम् उत्पादनक्रियाया असम्भवात् इति भावः। भाव्यत्वेन फलत्वेन अनङ्गत्वमिति अङ्गानां कर्मसम्पादकत्वेन प्राक्सत्त्वनियमात् फलस्य तु पश्चाद् भावित्वेन तदसम्भवादिति भावः। किन्तूत्पादनविधावेवानङ्गत्वं पुत्रस्येति शेषः। एवकारस्य व्यावृत्तिं स्वयं दर्शयति। नात्वित्यादिः तदेव विध्यन्तरं दर्शयितुं श्रुतिं निर्दिशति "एष वा अनृणो यः पुत्रीत्यादि" श्रुतिवाक्यात् कल्प्यतविधिं समर्थयति पुत्रेणानृण्यमित्यादि कल्पितविधौ पुत्रस्याङ्गतां साधयति पुत्रस्य इत्यादि तत्पोषकत्वेन मनुवचनं प्रमाणयति मनुनेत्यादि। यद्येवमित्यादि तथा च यदि लोकप्राप्त्यर्थं प्रतिनिधिपुत्रग्रहणमावश्यकं तदा पौत्रप्रपौत्रकर्तृकानन्त्यादिफलश्रुतेस्तयोरपचारेऽपि प्रतिनिधिपुत्रग्रहणं स्यादिति तात्पर्यार्थः। इष्टापत्तिं प्रकाशयति आस्तां भवतु इत्यर्थः। किन्नश्छिन्नमिति आपत्तेस्तुच्छत्वसूचिकेयमुक्तिः॥११॥

न चेति न हीत्यर्थः भाव्ययोः फलयोः तथा च पुत्ररूपफलं प्रति ऋतुगमनस्य करणत्वं आनृण्यरूपफलं प्रति पुत्रस्य करणत्वम्। अनन्वयादिति ऋतुगमने नापत्यमुत्पादयेत् पुत्रेणानृण्यं भावयेदिति विभिन्नक्रिययोरेकवाक्यत्वासम्भवात् इति भावः। अन्वये च उभयोरेकवाक्यतयान्वयस्वीकारे च। विरुद्धत्रिकद्वयापत्तेरिति विरुद्धत्रिकघटितवाक्यद्वयापत्तेरित्यर्थः। तथा हि उभयोरेकवाक्यत्वे उभयवाक्यघटकक्रिययोरन्यतरक्रियाया वैयर्थ्यमवश्यमङ्गीकर्तव्यं तद्विना एकवाक्यता न घटते ततश्च विनिगमनाविरहात् उत्पादयेदिति क्रियाया वैयर्थ्यमङ्गीकृत्य ऋतुगमनद्वारकपुत्रेणा-

क्रिया--पिण्डोदकक्रिया। औरसाभावे प्रतिनिध्यकरणे तल्लोपापत्तेः। तथाऽत्रिणाऽपि—

"पिण्डोदकक्रियाहेतोः"

इति सर्वमनवद्यम् ॥ १२ ॥

यदपि न स्वामित्वस्य भार्यायाः पुत्रस्य देशस्य कालस्याग्नेर्देवतायाः कर्मणः शब्दस्य च प्रतिनिधिरिति सत्याषाढवचनेन पुत्रप्रतिनिधिनिराकरणं

---

नृण्यं भावयेदित्येकं वाक्यं एवं भावयेदिति क्रियाया वैयर्थ्यमङ्गीकृत्य पुत्रद्वारकानृण्याय ऋतुगमनेन पुत्रमुत्पादयेदित्यपरं वाक्यं इत्येवं वाक्यद्वयापत्तिः एतदेव वाक्यद्वयं विरुद्धत्रिकघटितं तथा च ऋतुगमनपुत्रोत्पादनपुत्रमुखदर्शनादिद्वारकर्णमोचनानां त्रयाणां पूर्वपूर्वस्य कारणत्वेन उत्तरोत्तरस्य कार्यत्वेन च पुत्रोत्पादनकाले ऋतुगमनस्य ध्वस्तत्वात् पुत्रस्य मुखदर्शनादि काले उत्पत्तिक्रियाया ध्वस्तत्वाच्च एककालीनसत्त्वाभावात् विरुद्धत्वममाषा सुघटत एव। उपसंहरति तस्मादिति। आनृण्यभाव्यिकायाम् आनृण्यफलिकायां भावनायां फलोत्पादिकाप्रवृत्तौ तदपचारे द्वारीभूतौरसपुत्राभावे। सामापचारे सोमाप्राप्तौ पूतिकानामिव पूतिकानां यथा प्रतिनिधित्वम्। तथा च श्रुतिः।

यदि सोमं न विन्देत् तदा पूतिकामभिवृणुयादिति।

एतदेव औरसपुत्राभावे क्षेत्रजाद्येकादशपुत्राणां प्रतिनिधित्वमेव। अत्र मनुवचनं प्रमाणयति मनुनेत्यादि। "क्रियालोपान्मनीषिणः" इति।

क्षेत्रजादीन् सुतानेतानेकादशयथोदितान्।
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः॥

इति मनुवचनस्थक्रियापदस्य पिण्डोदकादिक्रियापरत्वं यत् व्याख्यातं अत्रिवचनेन तत्साधयति अत्रिणापीति अनवद्यमुसिद्धम् ॥१२॥

क्षेत्रदजादीनां पुत्रप्रतिनिधित्वे सत्याषाढवचनविरोधं परिहर्तुमाशङ्कयते यदपीति सौसादृश्यक्रमेण शुद्धन्यायप्राप्तस्यैव प्रतिनिधित्वमधिकृत्य निषेधयति। न स्वामित्वस्य भार्याया इत्यादि। स्वामित्वस्येति धर्मपरोऽयं निर्देशः, तेन स्वामिनः पत्युः तथा च पत्यभावे विधवा स्त्री अपरपुरुषं पतिप्रतिनिधिं कृत्वा तदनुज्ञया न दत्तकं गृह्णीयात्तदर्थं पत्युः न्यायप्राप्तप्रतिनिधित्वप्रतिषेधः। न तु मनुनारदादिवचना-

तत 'तन्तवे ज्योतिष्मतीन्तामाशिषमाशासत'[1] इत्यादावपुत्रस्य पुत्रप्रतिनिधिं कृत्वाऽऽशीराशंसननिवृत्त्यर्थम् । अत एव श्रुतिः ।

'यस्य पुत्रो जातः स्यात्तन्तवे ज्योतिष्मतीमिति ब्रूयात्'

इति । तथा पितापुत्रीये सामनि 'अमुकस्य पिता यजते' इत्यादावपुत्रस्य

---

नुसारेण नियोगधर्मेण पुत्रोत्पादनार्थं परयन्तरकरणं निषिध्यते तस्य वाचनिकत्वात् यथा मनुः—

देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ् नियुक्तया ।
प्रजेप्सिताधिगन्तव्या सन्तानस्य परिक्षये ॥

( अ० ९ श्लोक ५९ )

इत्यादि नारद पराशरौ—

नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयत ॥

इत्यादि एतदपि कलौ निषिद्धं वृहस्पतिना यथा—

उक्तोनियोगोमनुना निषिद्धः स्वयमेव हि ।
युगह्रासादशक्योऽयं कर्त्तुमन्यैर्विधानतः ॥
तपःज्ञानसमायुक्ताः कृत त्रेतादिके नराः ।
द्वापरे च कलौ नृणां शक्तिहानिर्हि निर्मिताः ॥
अनेकधाः कृताः पुत्रा ऋषिभिर्यैः पुरातनैः ।
न शक्यन्तेऽधुना कर्तुं शक्तिहीनैरिदन्तनैः ॥ इत्यादि ।

भार्यायाः न्यायप्राप्तप्रतिनिधित्वनिषेधस्तु अपत्नीकेन ब्राह्मणेन परभार्यया मिलित्वा विलक्षणशय्याग्रहणं न कर्त्तव्यं इति ज्ञापनाय एवं दम्पतिसाध्ये कर्मणि अनधिकार-ज्ञापनाय च न तु अपुत्रेण क्षेत्रिकानुमतेः प्रतिनिधिंभूतायां परभार्यायां पुत्रोत्पादन-निषेधाय तस्य च वाचनिकत्वात् यथा मिताक्षरायां वचनम् ।

"अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः ।
उभयोश्चाप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥"

( व्य० १२६ )

---

[1] आनन्दाश्रम पाठे—आशिषमाश्महे

पुत्रप्रतिनिधिं कृत्वा तत्प्रवचननिराकरणार्थं न पुनः सर्वथैव पुत्रप्रतिनिधि-

---

मनुरपि –

"क्रियाभ्युपगमात्त्वेतद्वीजार्थं यत् प्रदीयते।
तस्येह्भागिनौ दृष्टौ वीजी क्षेत्रिक एव च॥"
(अ० ९। ५३)

पुत्रस्य प्रतिनिधित्वं निषेधयति तन्तवे ज्योतिष्मतीं तामाशिषमाशासते इत्यादि न्यायप्राप्तप्रतिनिधित्वनिषेधाय। न तु पिण्डोदकक्रियार्थं गृहीतदत्तकादेः प्रतिनिधित्वनिषेधाय तस्य वाचनिकत्वात्। देशस्य नद्यादौ सौसादृश्येन गङ्गायाः प्रतिनिधित्वेन दशहरादिस्नानप्रसक्तिनिषेधाय न तु परभूमौ यत्किञ्चिन्मूल्यदानादिना स्वभूमेः प्रतिनिधित्ववारणाय तस्य वाचनिकत्वात् यथा—

परकीयगृहे यस्तु स्वान् पितन् तर्पयेज्जड़ः।
तद्भूमिस्वामिनस्तस्य हरन्ति पितरो वलात्॥
अग्रभागं ततस्तेभ्यो दद्यान्मूल्यञ्च जीवताम्। इति।

कालस्य अष्टम्याद्यकरणे एकत्र दृष्टन्यायेन सौसादृश्येन च एकादश्यादौ अष्टकादिश्राद्धकालस्य प्रतिनिधित्ववारणाय न तु मृताहाद्यकरणे मृतदिनकरणयोग्यश्राद्धकालस्य कृष्णैकादश्यादौ प्रतिनिधित्वनिषेधाय तस्य वाचनिकत्वात् यथा—

श्राद्धविघ्ने समुत्पन्ने मृताहाविदिते तथा।
एकादश्यां प्रकुर्वीत कृष्णपक्षे विशेषतः॥

अग्नेरिति अग्निराहवनीयस्तस्याभावे सौसादृश्येन लौकिकाग्निरौद्रादौ अग्नेः प्रतिनिधित्वनिषेधाय न तु विप्रपाण्यादौ अग्नौस्तरणहोमार्थं अग्नेः प्रतिनिधित्वनिषेधाय तस्य वाचनिकत्वात् यथा मत्स्यपुराणवचनम्—

अग्न्यभावे तु विप्रस्य पाणावेव जलेऽपि वा। इति।

देवताया इति। देवता अत्र पुण्यत्वेन विधिप्राप्ता इन्द्रादयः तथा च देवतादेस्तत्तद्देवतात्वेनैव फलजनकत्वावगमात् नान्यस्मात् तत्फलसिद्धेरितिभावः। कर्मण इति प्रजापत्याद्यदृष्टार्थककर्मण इत्यर्थः। न तु वाचनिकस्य निषेधः, यथा—

प्राजापत्यव्रताशक्तौ धेनुं दद्यात् पयस्विनीम्। इत्यादि।

शब्दस्य मन्त्रस्य मन्त्रान्तरं न प्रतिनिधिः न तु वाचनिकस्य यथा मन्त्राज्ञाने गायत्र्येति। कश्चित्तुः स्वामित्वस्य स्वत्वस्य इत्यर्थः भार्यासाहचर्यात् स्वामित्वस्य पतित्वस्य नार्थः पत्यपचारे देवरादीनां प्रतिनिधित्वस्य देवराद्वा सपिण्डाद्वा इत्यादिसिद्धत्वादित्याह,

निराकरणार्थम् । 'पुत्रप्रतिनिधीनाहुः' इत्यादि स्मृतिविरोधात् ॥१३॥

अथेदं चिन्त्यते—योऽयं पुत्रप्रतिनिधिर्विधीयते स किं पुत्रोत्पादनविधावुत पिण्डोदकादिविधाविति, उभयथा श्रवणात् । यथा--अपुत्रेणैव कर्तव्य इत्यनेन पुत्रोत्पादनविधौ पिण्डोदकक्रियाहेतोरित्यनेन च पिण्डोदकादि-

---

तत्र यथेष्टविनियोगफलानुमेयस्वत्वस्य सौसादृश्यविरहेण न्यायप्राप्तप्रतिनिधित्वासम्भवात् देवरादेस्तु वाचनिकत्वादेव दोषास्पर्शात् । विरोधं परिहरति तदित्यादिक्तन्तरे सन्तानाय ज्योतिष्मती बलयती आशासत इति प्रार्थयत इत्यर्थः । अपुत्रस्य औरसपुत्ररहितस्य पुत्रप्रतिनिधिं दत्तकादि ननु माभूत आशिराशंसनार्थं दत्तकादिग्रहणं पिण्डोदकक्रियार्थं गृहीतदत्तकेन आशिराशंसनं क्रियतामित्यत आह अतएव इति यतएव औरसपुत्रवतएव आशिराशंसनं अतएवेत्यर्थः । श्रुतिं प्रमाणयति श्रुतिरिति तद्दर्शयति अस्य इत्यादि अत्र श्रुतौ पुत्रोजात इति श्रवणात् औरसे पुत्रपदस्य मुख्यत्वाच्च औरसपुत्रवतएव आशिराशंसनं ननु प्रतिनिधिपुत्रवत् इति भावः । ननु पुत्रोजात इति श्रुतौ जातेति श्रवणात् प्रतिनिधिदत्तकादेस्तज्जातत्वाभावात् कथं आशिराशंसनप्रशक्तिः इत्यतः आह पितापुत्रीय इति पितापुत्रघटितसामनि सामाभिधेये मन्त्रे तथा च जैमिनिः—"गीतेषु सामाख्या" इति गीतेषु गीयमानेषु मन्त्रेषु सामसंज्ञेत्यर्थः । अत्र सामान्यतः पितापुत्रनिर्देशात् न्यायप्राप्तप्रतिनिधिप्रशक्तिरस्ति इति न्यायप्राप्तप्रतिनिधिमात्रनिषेधाय सत्याषाढसूत्रे पुत्रस्य न्यायप्राप्तप्रतिनिधित्वाभाव उक्तः, ननु वाचनिकस्य निषेधः तथात्वे मुनिवचनवैयर्थ्यं स्यात् एतदेवोपपादयति न पुनः सर्वथैव इत्यादिना तत्रैव स्मृतिवचनं प्रमाणयति पुत्रप्रतिनिधीनित्यादि ॥१३॥

दत्तकादेः प्रतिनिधिपुत्रत्वं साधयितुं विचारमवतारयति अथेत्यादि । स इति प्रतिनिधिरित्यर्थः किं पुत्रोत्पादनविधौ ऋतुगमनेन पुत्रमुत्पादयेदिति विधिजन्यफलसिद्धौ तथाच ऋतुगमनेन पुत्रमनुत्पाद्य तत्स्थाने दत्तकादिकर्तव्यमिति प्रतिनिधिर्विधीयते इत्याशङ्कार्थः । उत पिण्डोदकादिविधवापीति पिण्डोदकादिविधिस्थाने इत्यर्थः । तथा च पिण्डोदकदानादिकमकृत्वा तत्प्रतिनिधित्वेन दत्तकादिग्रहणविधिः । उभयथाश्रवणादिति तदुक्तं तत्प्रमाणं दर्शयति यथेत्यादि पुत्रोत्पादनविधौ पुत्रोत्पादनविधिजन्यफलसिद्धौ इत्यर्थः । पिण्डोदकादिविधौ पिण्डोदकादिदानजन्यफलसिद्धावित्यर्थः । पुत्रोत्पादनविधौ पुत्रकामः ऋतुगमनं कुर्यात् इति विधावित्यर्थः । भाव्यत्वेन फलत्वेन अनङ्गतया अङ्गत्वाभावेन तथा च यथोक्तवन्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत इत्यादि

विधाविति । तत्र नाऽऽद्यः । पुत्रोत्पादनविधौ पुत्रस्य भाव्यत्वेनानङ्गतया प्रतिनिध्ययोग्यत्वात् । न द्वितीयः । विरोधात् । अपुत्रं प्रति पुत्रप्रतिनिधिः श्रूयते न तत्कृता पिण्डोदकक्रिया ।

पुत्रकर्तृका च पिण्डोदकक्रिया न तं प्रति प्रतिनिधिविधिरिति । किंच पिण्डोदकादिविधिः पुत्रकर्तृको न च कर्तुः प्रतिनिधिः । अथापि क्रिया-कर्तृत्वांशे प्रतिनिधिर्न फलभोगांशे, यथा सत्रे सप्तदशानामन्यतमस्य मृतस्य क्रियाकर्तृत्वांशे प्रतिनिधिस्तथाऽत्रापीति वाच्यम् । तदपि न ।

---

शास्त्रे अङ्गस्यैव प्रतिनिधित्वमुक्तं ततश्च अङ्गस्य कर्मसम्पादकतया प्राक्सत्वनियमात् न फलस्य पश्चाद्भावित्वेन अङ्गत्वासम्भवादेवं पुत्रोत्पादनविधौ पुत्रस्यानङ्गतया प्रति-निधित्वासम्भव इति भावः । द्वितीयकल्पं दूषयति न द्वितीय इति न पिण्डोदक-क्रियायाः प्रतिनिधिरित्यर्थः विरोधात् इति प्रतिनिधित्वविरोधादित्यर्थः विरोधमुपपाद-यति अपुत्रं प्रतीति अपुत्रकर्तृकतया पुत्रप्रतिनिधिः प्रतिनिधिपुत्रग्रहणमित्यर्थः । न तत् कृता पिण्डोदकादिक्रिया इति तत्कृता अपुत्रकृता अपुत्रकर्तृका पिण्डोदकादिक्रिया-मेत्यर्थः, पुत्रकर्तृकाच इति पुत्रएवकर्त्ता यस्यां सा । तं प्रतीति तच्छशब्देन प्राक्रान्ता-पुत्रो लक्ष्यते तथाहि अपुत्रकर्तृकतया इत्यर्थः । प्रतिनिधिविधिरिति पिण्डोदकक्रियायाः स्थानीयत्वेन दत्तकादिप्रतिनिधिपुत्रग्रहणविधिरित्यर्थः । अस्य तु श्रूयते इति प्रक्रान्तेन सम्बन्धः । तथा च पिण्डोदकक्रियायाः पुत्रस्य कृतिजन्यत्वेनाधीनत्वात् पिण्डोदक-क्रियायाः स्थानीयत्वेन न दत्तकादेः प्रतिनिधित्वसम्भव इति भावः । ननु यद्यपि पिण्डोदकक्रियायाः पुत्रकृतिव्याप्यत्वात् ततस्थानीयत्वेन प्रतिनिधित्वं न घटते तथापि क्रियायाः कर्तृत्वांशे प्रतिनिधित्वविधौ बाधकाभाव इत्याशङ्क्यते, किञ्चेति पुत्रकर्तृक इति पुत्र एव कर्ता यस्य इति विग्रहेण पुत्ररूपकर्त्रधीन इत्यर्थः । न च कर्तुः प्रतिनिधि-रिति पिण्डोदकादिविधेः कर्त्रधीनत्वेन कर्तुः प्रतिनिधित्वबाधात् तथा च पिण्डोदकादि-विधिः यदि कर्तुः प्रतिनिधिर्भवितुमर्हेत तदा यथा कर्तुरभावे तत्स्थानीयदत्तकादित्वेन प्रतिनिधित्वं तथा पिण्डोदकादिरपि भवितुमर्हेत तदेव न सम्भवतीति भावः । क्रिया कर्तृत्वांशे प्रतिनिधिः । पिण्डोदकक्रियायाः यः कर्ता औरसपुत्रः तदभावे तत्स्थानीय-तया तत् सम्पाद्यपिण्डोदकादिक्रियायाः कर्तृत्वेन दत्तकादिप्रतिनिधिविधिरित्यर्थः । न फलभोगांशे इति पिण्डोदकादिक्रियाजन्यफलभोगसिद्धौ पिण्डोदकादिक्रियास्थानीय-

वैषम्यात् । सत्रे ह्यारब्धक्रियस्य प्रतिनिधिः प्रकृते त्वत्यन्तासतः क्रियारम्भस्यैवासंभवात्कथं प्रतिनिधिसंभवः । न च प्रतिनिधिना क्रियारम्भो न्यायवित्संमतः ॥ १४ ॥

अथापुत्रस्य जीवच्छ्राद्धे स्वकर्तृक एव पिण्डादिविधिरिति तत्रैव प्रतिनिधिरिति वाच्यम् । तदपि न । पुत्रप्रतिनिधिसम्भवे जीवच्छ्राद्धविधेरेवाप्रवृत्तेः ।

---

त्वेन प्रतिनिधिर्नेत्यर्थः । क्रियाकर्तृत्वांशे दृष्टान्तं दर्शयति यथेत्यादि । सत्रे सत्रयागे सप्तदशानां सप्तदशवरा ऋषिकामाः सत्रमुपासीरन्निति विधिबलादिति शेषः । तथात्रापीति । सत्रे यथा सप्तदशानामन्यतमापचारे तत् कर्मकरणाय तत् क्रियाकर्तृत्वांशे प्रतिनिधिविधानं दृश्यते । तथा च याज्ञवल्क्यः—

जिह्मं त्यजेयुर्निर्लोभमशक्तोऽन्येन कारयेत् ।
अनेन विधिराख्यात ऋत्विक् कर्षिक कर्मिणाम् ॥ इति ।

व्यवहार अ०, २६५ श्लो०

तद्वदत्रापि औरसपुत्राचारे तत् क्रियमाणपिण्डोदकादिक्रियाकर्तृत्वांशे प्रतिनिधिविधिः स्यादिति भावः । दूषयति तदपि नेति वैषम्यात् विषमदृष्टान्तत्वात् इत्यर्थः । तदेवोपपादयति । सत्रे आरब्धक्रियस्य प्रतिनिधिरिति सत्रे य एव यजमानास्त एव ऋत्विज इति नियमात् आरब्धकर्मणि ऋत्विगपचारे ऋत्विगन्तरेण कर्मनमापनस्यावश्यकत्वात् प्रतिनिधित्वसम्भवः । अत्यन्तासतः क्रियाकर्तुरत्यन्ताभावात् कथं प्रतिनिधिसम्भवः इति तथा च अपाटवादिना कर्तुः स्वयं करणाशक्तौ प्रतिनिधिविधिर्लोकवेदसिद्धः तथा च याज्ञवल्क्यः—

जिह्मं त्यजेयुर्निर्लोभमशक्तोऽन्येन कारयेत् ।
अनेन विधिराख्यात ऋत्विक् कर्षिककर्मिणाम् ॥

व्यवहाराध्याय, २६५

इति प्रकृते तु औरसस्याजातत्वात् क्रियाकर्तुरत्यन्ता सम्भवेन प्रतिनिधित्वासम्भव इतिभावः । न च प्रतिनिधिना क्रियारम्भो न्यायवित्सम्मत् इति । अत्र प्रधानस्य कर्तुरधिकारिणोऽत्यन्तासत्वत्वेन अनधिकारिणा प्रतिनिधिनियोजनासम्भवादिति शेषः । अन्यथा प्रकृते दत्तकविधेः स्मार्त्तकर्मत्वेन नित्यत्वेन च प्रतिनिधिना क्रियारम्भः केनापि न निवार्य्यते । अत्रोऽत्र यत् केनचित् प्रतिनिधिना क्रियारम्भनिराकरणाय ।

किंच जीवाच्छ्राद्धस्य स्वकर्तृकत्वेन स्वस्यैव प्रतिनिधिः स्यान्न पुत्रस्य। पुत्रकर्तृत्वाभावात्। तस्मान्नोक्तविधिद्वयेऽपि पुत्रप्रतिनिधिसंभवः। किंच पिण्डोदकक्रियाहेतोरिति हेतुवचनमप्ययुक्तमेव। अपक्षधर्मत्वात्। नह्य-पुत्रस्य पिण्डोदकक्रियाप्राप्तिरस्तीत्युक्तमेवेति।

अत्रोच्यते—नापुत्रस्य लोकोऽस्तीत्याद्यर्थवादानुगृहीते पुत्रेण लोका-ञ्जयतीत्यादिविधौ पुत्रापचारे क्षेत्रजाद्येकादशविधः प्रतिनिधिर्विधीयते।

---

"श्रौतं कर्म स्वयं कुर्यात्" इत्यादिवचनम्।

"काम्ये प्रतिनिधिर्नास्ति नित्यनैमित्तिके हि स"

इति वचनद्वयं प्रमाणत्वेनोपन्यस्तं तदयुक्तं दत्तकादिविधेर्नित्यत्वेन तद्धृतवचनेनैव प्रतिनिधिना क्रियारम्भप्राप्तेः।

ननु यथा प्रव्रज्यास्थले पश्चात् श्राद्धलोपसम्भावनायां स्वकर्तृकस्वोद्देश्यक-श्राद्धं शास्त्रविहितं यथा सन्न्यासमुपक्रम्य नरसिंहपुराणे।

"दिव्यपितृभ्या देवेभ्यः पितृभ्यश्च प्रयत्नतः।

दत्वा श्राद्धमृषिभ्यश्च मनुजेभ्यस्तथात्मने॥

इति तद्वत् अपुत्रस्थले अपुत्रकर्तृकस्वोद्देश्यकश्राद्धं कल्प्यं तथा च स्वकर्तृत्वांशे प्रति-निधेः सोलभ्यमेव इत्याशङ्क्यते, अथ अपुत्रस्य जीवत्श्राद्धं इति जीवत्कर्तृकस्वश्राद्धे पिण्डोदकादिविधिरिति एकत्र दृष्टपरिकल्पनन्यायादिति शेषः। दूषयति तदपि न इति पुत्रप्रतिनिधिसम्भवे जीवत्श्राद्धविधेरप्रवृत्तेरिति पुत्रप्रतिनिधिसम्भवे प्रतिनिधिपुत्रेण पिण्डोदकदानादेः कर्तव्यतायाः सम्भवे इत्यर्थः तथा च सर्वथा लोपासम्भवे एकत्रदृष्ट-न्यायेन कल्पनाया अभावात् स्वस्यैव स्वश्राद्धकर्तृत्वं न घटते इति भावः। ननु सौसादृश्याभावात् न्यायप्राप्तप्रतिनिध्यभावस्यस्वतः सिद्धत्वेन सर्वथैव पिण्डलोपसम्भा-वनासत्वात् एकत्र दृष्टन्यायात् स्वस्य स्वश्राद्धकर्तृत्वे बाधकाभाव इत्यत आह किञ्चेति जीवच्छ्राद्धस्य आत्मश्राद्धस्य स्वस्यैवेत्येवकारेण पुत्रव्यावृत्तिं दर्शयति न पुत्रस्येति तथा च—

"अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदा।

इति वचनोक्तपुत्रप्रतिनिधिकथनविरोध इति भावः। अपक्षधर्मत्वात् हेत्वभाववत्-पक्षत्वात् तदेवोपपादयति न ह्यपुत्रस्येत्यादि तथा च विशेषवचनाभावात् अपुत्रस्यात्म-

तत्र च लोकपुत्रयोः साध्यसाधनभावनिर्वाहकावान्तरव्यापारभूत-क्रियापेक्षायां पिण्डोदकक्रियाहेतोरित्युच्यते ॥१५॥

सदेति—

'वन्ध्याष्टमेऽधिवेत्तव्या'

इत्यादिवदत्रावधिप्रतीक्षाभावं बोधयति। पिण्डः श्राद्धम्। उदकमञ्जलि-दानादि। क्रिया—और्ध्वदेहिकं दाहादि। अत एव हेतुः पुत्रीकरणे निमित्तम्।

---

श्राद्धकर्तृत्वं न सिद्धयति नापुत्रस्य लोकोऽस्तीति अपुत्राः सन्त्यदृशाइत्यादिवचनबोधित-निन्दाया अन्यथानूपपत्त्या एकत्र दृष्टन्यायस्यात्र बाधोऽङ्गीकर्तव्यः ततश्च अपुत्ररूपपक्षे पिण्डोदकदानादिरूपहेतोरप्रसक्त्या सत्वाभावेन हेत्वभाववत्पक्षत्वरूपस्वरूपासिद्धि-र्भवत्येवेति भावः। वाचनिकप्रतिनिधिं व्यवस्थापयति अत्रोच्यते इत्यादि। नापुत्रस्य लोकोऽस्तीत्याद्यर्थवादानुगृहीते इति, आदिना अपुत्राः सन्त्यदृशा इत्यादेः परिग्रहः अदृशा अदर्शनशीला राक्षसाः इत्यर्थः। अर्थवादानुगृहीते निन्दार्थवादेन अवश्य-कर्तव्यतया बोधिते इत्यर्थः। पुत्रेण लोकान् जयतीति विधौ पुत्रेण पुत्रमुखदर्शनेन पुत्रकर्तृकश्राद्धेन च उत्कृष्टलोकम् अवाप्नुयात् इति विधावित्यर्थः। पुत्रापचारे औरस-पुत्राभावे। लोकपुत्रयोरित्यादि अत्र लोकः साध्यः पुत्रः साधनः यथाक्रमेणान्वयः पुत्रपदं प्रतिनिधिपुत्रपरं न तु औरससहितपरं औरसमुखदर्शनेनापि अलोकतापरिहा-रोक्तेः प्रतिनिधिपुत्राणां पिण्डोदकादिक्रियाद्वारैवलोकसाधनतां दर्शयति। अवान्तरव्या-पारभूतक्रियापेक्षायामिति अवान्तरव्यापारः स्वकृतिजन्यव्यापारः तद्रूपा या क्रिया पिण्डोदकदानादिरूपा तदपेक्षायामित्यनेन दत्तकादिभिः क्रियाकरण एव ग्रहीतुरलोकता परीहारः न तु ग्रहणमात्रेण इति सूचितम्॥ १५॥

सदेति। अवधिप्रतीक्षाभावं बोधयतीति अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिः सदा इति वचनस्य सदापदेनेत्यर्थः।

यथा—

"वन्ध्याऽष्टमेऽधिवेत्तव्या दशमे तु मृतप्रजा।
एकादशे स्त्रीजननीसद्यस्त्वप्रियवादिनी॥

(म० स्मृ० ९।८१)

हेतुरित्येकत्वनिर्देशान्मिलितानामेषां निमित्तत्वं न प्रत्येकमिति गमयति। तेन चैकैकार्थं न पृथक्पृथक्पुत्रीकरणम्। किन्तु सर्वार्थमेकमेव पुत्रीकरणमित्यर्थः। पुत्राभावे पिण्डादिलोपप्रसङ्गात्।

अत एव मनुः—

'पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः'।

इति क्रियालोपादिति व्यतिरेके हेतुः। पुत्र प्रतिनिध्यभावे क्रियालोपादित्यर्थः। यद्वा, अलोपादिति पदच्छेदः। अलोपादिति ल्यब्लोपे पञ्चमी। अलोपार्थ-

---

इति मनुवचनात् वन्ध्यादिस्थले अष्टमाब्दादिकालमपेक्ष्याधिवेदनवत् नात्र-कालप्रतीक्षास्ति। अत्र सदेति श्रुतेर्नित्यतया पत्न्या प्रागनुमतितः भर्तृमरणदेहाशौचेऽपि दत्तकपुत्रः कर्तुं शक्यते।

अत एव—

महागुरुनिपातेतु काम्यं किञ्चिन्न चाचरेत्।
आर्त्विज्यं ब्रह्मचर्यञ्च श्राद्धं देवयुतञ्च॥

यदिति कालिकापुराणवचने काम्यसामान्यस्यैव निषेधो दृश्यते।

ननु—

"अन्यश्राद्धं परान्नञ्च गन्धं माल्यञ्च मैथुनम्।
वर्जयेत् गुरुपातेतु यावत् पूर्णो न वत्सरः॥" इति।

स्मार्तधृतदेवलवचने मैथुननिषेधेन मुख्यपुत्रकरणाप्रसक्तेः कथं प्रतिनिधिपुत्रविधानम्। अतएव रघुनन्दनः कलौ मद्यदाननिषेधात् मद्यप्रतिनिधिदानमपि न युक्तमित्याह इति चेन्मैवं मुख्यनिषेधस्थले सौसादृश्येन न्यायप्राप्तप्रतिनिधिनिषेधस्यैवानुभविकत्वात् न वाचननिकप्रतिनिधेर्निषेधः तस्य च वाचनिकत्वेन नित्यतया च सर्वदेष्टत्वात् अतएव स्त्रीशूद्राणां होमनिषेधेऽपि ग्रहणपुरश्चरणादौ होमसंख्यद्विगुणजपरूपप्रतिनिधिसमाचारो दृश्यते च महापातकादौ ब्राह्मणस्य मरणनिषेधेऽपि मरणप्रतिनिधिचतुर्विंशतिवार्षिकव्रतादिकम्। एवं नित्यत्वात् प्रातिस्विकनिषेधाभावाच्च समयाशुद्धावपि पुत्रग्रहणं न निषिद्धम्। पिण्डदानस्य श्राद्धाङ्गत्वादेव पिण्डोदकक्रियाहेतोरित्यत्र पिण्डादिशब्दस्यार्थं विवृणोति पिण्डः श्राद्धमित्यादि। तेन चैकैकार्थं न पृथक्पुत्रीकरणमिति विधिगौरवापत्तेरिति शेषः। एकत्वनिर्देशादिति अतः काव्यप्रकाशे समुदितत्रयो

मित्यर्थः। यद्यपि 'पुत्राभावे तु पत्नी स्यात्' इत्यादिना पुत्राभावे पत्न्यादीनामपि क्रियाधिकारः श्रूयते, तथाऽपि 'नापुत्रस्य लोकोस्तीत्यादि' श्रवणात्पुत्रकृतक्रियाजन्या लोका न स्त्र्यादिकृतक्रियया जन्यन्त इत्यवश्यं वाच्यम्। अन्यथा पुत्रपत्न्यादीनां तुल्यफलकक्रियाधिकारे तुल्यतया विकल्पापत्त्याऽभावविधानानुपपत्तेः। तस्मात्पुत्रकृतक्रियाजन्यलोकविशेषसिद्ध्यै पुत्रप्रतिनिधिरावश्यक इति। उक्तं च मेधातिथिना—तत्र च यदौरसस्य प्रथमकल्पिकत्ववचनं तन्न व्यवहारोपयोगि किन्तूपकारातिशयाय। यथौरसो भूयांसं शक्नोत्युपकारं कर्तुं न तथेतर इति। उपकाराप्चयाभिप्रायश्च प्रतिनिधिव्यवहार इति।

यत्तु तेनैव क्रियालोपादित्यत्र क्रियत इति क्रिया, अपत्यमुत्पादयितव्यमिति विधिस्तस्य लोपो मा भूदिति नित्यो ह्ययंविधिः स यथाकथंचिद्गृहस्थेन संपाद्यस्तत्र मुख्यः कल्प औरसस्तदसंपत्तावेते कल्पा आश्रयितव्या

---

हेतुर्नतु हेतव इत्युक्तं अतएवेति यत एव पिण्डोदकादिसमुदितक्रियार्थम्, एक एव प्रतिनिधिः कार्यः अतएवेत्यर्थः ननु प्रतिनिधिपुत्राकरणे तनैव पिण्डोदकादिक्रियाया अवश्यम्भावात् कथं क्रियालोपान्मनीषिण इत्यत्र पुत्राकरणे क्रियालोपस्य हेतुता इत्यत आह व्यतिरेके इति ननु व्यतिरेके हेतुत्वकल्पने पुत्रप्रतिनिध्यभावे इत्यादेरध्याहारकल्पनापत्त्या गौरवं स्यात् लाघवात् अकारप्रश्लेषेण पिण्डोदकक्रियालोपाभावार्थमित्यर्थस्यैव युक्तत्वमित्याह यद्वेति ननु पुत्राभावे पत्न्याः पिण्डोदकक्रियाया अधिकारात् कथं पिण्डोदकक्रियाया अलोपार्थं प्रतिनिधिपुत्राकरणमित्याशङ्क्यते यद्यपीति पुत्राभावे पत्नी स्यादिति।

पितुः पुत्रेण कर्तव्या पिण्डदानोदकक्रिया।
तदभावे तु पत्नीस्यात्तदभावे सहोदरः॥ इति।

शङ्क वचनादिति शेषः। नापुत्रस्य लोकोऽस्तीत्यादिश्रवणात् लोको विशेषलोकः। श्रवणात् श्रुताविति शेषः लोका यादृशालोका इत्यर्थः जन्यन्ते इति तादृशालोका इति शेषः अन्यथा तुल्यलोकतास्वीकारे विकल्पापत्त्या इच्छाविकल्पापत्त्या तल्लक्षणन्तु स्मृतिशास्त्रे विकल्पस्तु आकांक्षापूरणे सति। अभावविधानानुपपत्तेरिति तदभावे तु

इति व्याख्यातम् । तच्चिन्त्यम् । किं पुत्रोत्पादनविधेर्दत्तकादिविधिः प्रतिनिधिरित्युच्यत आहोस्विदौरसस्य दत्तकादिरिति ।

नाद्यः[1] । 'न देवताग्निशब्दक्रियम्' इत्यस्मिन्नधिकरणे क्रियायाः प्रतिनिधिनिराकरणात् । न द्वितीयः । न ह्येषां प्रतिनिधिता संभवतीत्यादिपूर्वग्रन्थविरोधात् । तत्र पुत्रोत्पादनविधौ पुत्रस्य भाव्यत्वेनानङ्गतया प्रतिनिध्यसम्भवाभिधानात् । तस्मान्न क्रियाशब्देन पुत्रोत्पादनविधिः किन्तु पिण्डोदकक्रियैव वाच्या । पिण्डोदकक्रियाहेतोरित्यत्रित्राक्यैकवाक्यत्वादित्यलम् ॥ १६ ॥

प्रयत्नत इति । पञ्चम्यास्तसिल् । यस्मात्तस्मादिति सामानाधिकरण्यात् । ततश्च येन केनापि प्रयत्नेन पुत्रप्रतिनिधिः कार्य इत्यर्थः ।

---

पत्नीस्यादित्यत्र पुत्राभावे पत्न्यधिकारविधानानुपपत्तेरित्यर्थः अन्यथा तुल्योपकारित्वे च युगपदेव तयोरधिकारः स्यादिति भावः । तस्मात् प्रमाणत्वाप्रमाणत्वाद्यष्टदोषदुष्टत्वेन इच्छाविकल्पस्यात्रान्याय्यत्वादित्यर्थः ।

प्रथमकल्पितत्ववचनम्—

स्वेक्षेत्रे संस्कृतायान्तु स्वयमुत्पादयेद्धियम् ।
तमौरसं विजानीयात् पुत्रं प्रथमकल्पितम् ॥ इति ।

मनुनाभिहितप्रथमकल्पितवचनमित्यर्थः न व्यवहारोपयोगि न व्यवहारमात्रोपयोगीत्यर्थः । यथाकथञ्चित् औरसपुत्रोत्पत्तिसम्भावनायामित्यर्थः । उपकारापचयाऽभिप्रायश्च उपकाराल्पत्वाभिप्रायश्च इत्यर्थः । प्रतिनिधिव्यवहारः प्रतिनिधिपदप्रयुक्तिरित्यर्थः ।

पूर्वग्रन्थविरोधादिति तथा च न ह्येषां प्रतिनिधिता संभवतीत्यनेन मेधातिथिना दत्तकादीनाम् उपकाराल्पत्वमेवाङ्गीकृतं न प्रतिनिधित्वमिति भावः भाव्यत्वेन फलत्वेन ॥ १६ ॥

प्रयत्नत इति । अपुत्रेणैव कर्तव्य इत्याद्यत्रिवचनस्थप्रयत्नत इत्यर्थः सामानाधिकरण्यं प्रकाशयति ततश्चेत्यादि एकादशप्रयत्ना इति एकादशानां पुत्राणां भेदेन प्रयत्न-

---

[1] नाऽऽद्यः ।

तत्र प्रयत्नसामान्यश्रुतावप्येकादशपुत्रश्रवणादेकादशैव प्रयत्ना अभ्यनुज्ञायन्ते । तत्रापि कलौ[१]—

---

स्यापि भेदात् एकादशत्वमुक्तम् अभ्यनुज्ञायन्ते प्रतीयन्ते । तत्रापीति एकादशविधिप्रतिनिधिपुत्रविधानेऽपि । एकादशविधप्रतिनिधिपुत्राः शास्त्रे विहिता अपि विशेषनिषेधवचनात् कलौ सर्वेषां पुत्राणां ग्रहणं नास्ति तदेव दर्शयति कलौत्विति अनेकधा इति वचनपूर्वार्द्धे कलिपदश्रवणात् ।

यथा—

उक्तो नियोगो मनुना निषिद्धः स्वयमेव हि ।
युगह्रासादशक्योऽयं कर्त्तुमन्यैर्विधानतः ॥
तपोदानसमायुक्ताः कृतत्रेतादिके युगे ।
द्वापरे च कलौ नृणां शक्ति ह्रानिर्हि निर्मिताः ॥ इति ।

---

टिप्पणी—१ (वि० वि० देशापण्डे)—तत्रापि कलौ—

अनेकधा कृताः पुत्रा ऋषिभिर्ये पुरातनैः ।
न शक्यास्तेऽधुना कर्तुं शक्तिहीनतया नरैः ॥ इति ।

औरसपुत्राभावे कः प्रतिनिधीभवितुमर्हती, यदा तु प्राक्तनदैवदुर्विलासवशादौरसपुत्रसंप्राप्तिर्न जायेत तदा तदभावेऽपिसृष्टिसंधारणादिसमाजकार्यं यथाऽविच्छिन्नं प्रवर्तेत तथा धर्मशास्त्रानुसारेण व्यवस्थाकरणमावश्यकम् । अत एवैतादृशप्रसङ्गे शास्त्रकृद्भिर्नित्यः पुत्रप्रतिनिधिविधिरभिहितो दरीदृश्यते । अत्रिस्मृतावेतद्विधिसंबन्धीदृशं वचनमालक्ष्यते

'अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिः सदा' इति ।

अत्र न केवलमस्माद्वचनादेव वैतत्समानार्थकान्यवचनेभ्यः एव वा पुत्रप्रतिनिधिविधेर्नित्यत्वं प्राप्नोतीति मन्तव्यम् । अपि तु यद्यौरसः पुत्रो न स्यात्तर्हि तदग्रिमवंशे तत्तद्व्यक्तिकर्तृकाणां समाजोपकारिकर्तव्यानां विच्छेदस्य जातत्वात्तदवलम्बिनी समाजव्यवस्थाऽपि तत्तत्संघपर्याप्ता विच्छिद्येतेत्यतः कारणादपि तस्य नित्यत्वं प्राप्नोति ।

सोऽयं पुत्रप्रतिनिधिर्भिन्नभिन्नैश्चतुर्भिः प्रकारैः कर्तुं शक्य इति प्रतिपादितमालक्ष्यते । क्षेत्रजपुत्रः, पुत्रिकैव पुत्रः, पुत्रिकायाः पुत्रः दत्तकपुत्रश्चेत्येवं प्रकाराणां चतुर्णां पुत्रप्रतिनिधीनां मध्येऽतीव प्राचीने काले सर्वप्रतिनिधिषु सर्वमान्यतां प्राप्तः प्रतिनिधिः क्षेत्रजपुत्राख्यः स्यात् । क्षेत्रजपुत्रोल्लेखो वैदिकवाङ्मय एवाऽऽलक्ष्यते नैवमेव, अपि तु पुराणेतिहासादिषु ये प्राचीनकथाविभागाः संलक्ष्यन्ते तेष्वपि क्षेत्रजपुत्रोदाहरणानि बहुश उपलभ्यन्ते । क्षेत्रजेति नाम्नैवास्य

अनेकधा कृताः पुत्रा ऋषिभिर्ये पुरातनैः ।
न शक्यास्तेऽधुना कर्तुं शक्तिहीनतया नरैः ॥

इति बृहस्पतिस्मरणात्[२]

कलिधर्मप्रस्तावे पराशरस्मरणादिति 'कलौ पाराशरः स्मृतः' इति वचनात् वस्तुतः पश्चिमदेशीयसमाचारादेव दत्तपदं कृत्रिमस्याप्युपलक्षणम् इत्युक्तं ग्रन्थकारेण न तु शास्त्रतः अन्यथा तेषामितिवक्तव्ये तयोर्मध्ये दत्तविधिरभिधीयते इत्यग्रिमग्रन्था-सङ्गतिः स्यात् ।

पराशरेण कलिधर्मप्रस्तावे ब्राह्मणादीनां कृषिकर्म अपरं प्रायश्चित्तकाण्डम्

पुत्रप्रतिनिधेर्विधिप्रकारः कीदृशः स्यादिति झटित्येव मनस्यायाति स्वैरपरिष्टाद्दृष्टमेव यत्स्वीयै-रानुवंशिकगुणैः संस्कारैः शिक्षणेन च युक्तस्य पुत्रस्योत्पादनं पितुः कर्तव्यमिति । भ्रातुष्पुत्रा-स्तित्वे तस्यैव पुत्रप्रतिनिधित्वेनोपादाने प्रोत्साहनाय मनुस्मृतावयमर्थवादात्मकः श्लोकः पठ्यते—

भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान्भवेत् ।
सर्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥
(मनु० स्मृ० ९।१८२)

तस्मात्प्रथमतो भ्रातुष्पुत्रः पुत्रप्रतिनिधित्वेनोपादातव्यः । तदसंभवे तदनन्तरः सगोत्रसपिण्डः । तदभावेऽसगोत्रसपिण्डः । तदभावेऽसपिण्डः सगोत्रः । तदभावे समानजातीयो ग्राह्यः । इत्येवं ग्राह्यपुत्राणामनुक्रमेण प्रणाल्यभिहिता ।

औरसपुत्राभावे तत्स्थाने पिण्डोदकाद्यर्थं शास्त्रोक्तप्रयत्नतो यः पुत्रो निर्मीयते स मुख्यः पुत्रप्रतिनिधिः । तादृशस्याभावे पालितः पुत्र औरसस्थाने कैश्चिच्छैरह्यो विज्ञायते । मातापितृभ्यां जन्मत एव परित्यक्तयोः कन्यापुत्रयोः रक्षणसंवर्धनकर्तव्यताधर्मशास्त्रेण यस्मिन्समर्पिता स पालनादेव तयोः पिता स्मर्यते तौ च कन्यापुत्रौ तस्य पालितकन्यापुत्रौ भण्येते । अर्थादौरस-मुख्यप्रतिनिध्योरभावे तत्स्थानं प्राप्तः पालितपुत्रः कतिपयैरंशैस्तयोः कर्तव्यं निर्वहेदिति सत्यम् । अत एव—

एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः ।
शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम् ॥
( म० स्मृ० ९।१६३ )।

---

[२] आनन्दाश्रमपाठे श्रवणात् ।

'दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः'

इति च शौनकेन पुत्रान्तरनिषेधाद्दत्तौरसावेवाभ्यनुज्ञायेते। दत्तपदं [1]कृत्रिमस्याप्युपलक्षणम्।

---

इत्युभयमात्रमुक्तम् अतएव पराशरभाष्ये माधवाचार्येण तथैवोक्तं यथा ननु स्मृत्यन्तरेष्वपि शौचाचारादिरुक्त इत्यत आह वर्तमाने कलौयुगे इति। कलौयुगे वर्तमाने सति याजनाध्यापनादीनां जीवनाया सम्पूर्त्तेः मानुषाणां जीवनाय अभ्युदयाय निःश्रेयसाय

---

उत्पन्ने त्वौरसे पुत्रे तृतीयांशहराः सुताः।
सवर्णाः, असवर्णास्तु ग्रासाच्छादनभागिनः॥

(कात्यायनः)

इत्यादि वचनानि संगच्छन्ते। औरसाभावे क्षेत्रजपुत्रिकापुत्रिकापुत्रदत्तककृत्रिमपुत्राणां स्थानं भिन्नभिन्नेषु कालेषु प्रदेशेषु वा औरससममेवाऽऽसीदित्यत्र न संशयः। कारणमौरसाभावे गृहस्थाश्रमधर्माणां परिपालनं भवत्विदत्येतदर्थं धार्मिकविधिनैते पुत्रा निर्मीयन्ते। भूमिकायां प्रदर्शितवद्दत्तककृत्रिमौ वर्जयित्वाऽन्येषां क्षेत्रजपुत्रिकापुत्रिकापुत्राणां निर्माणपद्धतयः साम्प्रतमलुपन्। आदित्यवचनानुसारेण दत्तकमन्तरेणेतरगौणपुत्रनिर्माणं कलियुगेऽधर्म्यम्। न्यायालयैरपि औरसप्रतिनिधित्वाधिकारो दत्तकस्यैवेत्यमानि। परन्तु मिथिलाप्रदेशे कृत्रिमपुत्रस्य मलबारप्रान्ते पुत्रिकापुत्रिकापुत्रयोश्चास्तित्वं न्यायालयैर्गृहीतम्।

---

[1] दत्तपदं कृत्रिमस्याप्युपलक्षणमिति। आदित्य पुराणे—

दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः।

इति दत्तकं वर्जयित्वेतरेषां प्रतिनिधिपुत्राणां स्पष्टं निषेधे कृतेऽपि नन्दपण्डितैः प्रतिनिधित्वेन कृत्रिमपुत्रस्वीकारे मान्यता प्रदर्शिता, एतत्कारणं बहुधा तेषां जीवनकाले कृत्रिम पुत्रस्वीकरणरूढ्या बलवत्या मान्यतां प्राप्तया च भवितव्यमिति। यदा च मिथिलाप्रान्त इंग्रजायत्ततां गतस्तदा तत्रत्यन्यायालयानामपि कृत्रिमपुत्रस्वीकृतिरूढेः सार्वत्रिक्याः प्रचलितत्वं दृष्टिपथमगमत्।

औरसः क्षेत्रजश्चैव दत्तः कृत्रिमकः सुतः।

इत्येवं पराशरवचनस्य नन्दपण्डितैराधारं दत्वा कृत्रिमपुत्रस्वीकरणे स्वमान्यता प्रदर्शिता। परन्तु तद्वचने निर्दिष्टस्य क्षेत्रजस्य तु मान्यता तैर्दापिता नाभूत्। विकल्पाष्टदोषापत्तिर्माभूदिति क्षेत्रजो मान्यीकर्तुं नार्हति, इत्येवं तत्र कारणं प्रदर्शितम्। परन्तु तुल्यन्यायादियं विकल्पाष्टदोषापत्तिः कृत्रिमपुत्रमान्यीकरणेनाप्यायात्येव। कारणं दत्तौरसेत्यत्र दत्तपदार्थे यावत्या

च हितः। सुकरो यो धर्मः ब्राह्मणकर्तृकक्रष्यादिः योऽत्र प्राधान्येन प्रतिपाद्यते इति अनन्यलभ्यत्वात् विषयत्वमित्यर्थः अपरमपि। तथा च

अतः परं गृहस्थस्य धर्माचारं कलौयुगे।
धर्मं साधारणं शक्यं चातुर्वर्ण्याश्रमागतम् ॥

---

योग्यरीत्या कृत्रिमपुत्रोऽन्तर्भाव्यते तावत्या योग्यरीत्या औरसपदार्थे क्षेत्रजोऽन्तर्भावयितुं शक्यः। सोऽयमर्थः स्वयं मूलकारेणैव क्षेत्रजशब्दस्य औरस इत्यर्थकरणेनाप्रत्यक्षरीत्या प्रदर्शितः। तथाऽपि नियोगविधिना क्षेत्रजोत्पादनपद्धतेः सर्वात्मना विलयं गतत्वेन नियोगविधिनिषेधकानामार्षवचनानां धर्मग्रन्थे बहुश उपलभ्यमानत्वेन च निरुक्तपराशरवचनव्यवस्था क्षेत्रे जातः क्षेत्रज इति केवलयोगेन क्षेत्रजशब्द औरसविशेषणमित्येवंप्रकारेण लापयितव्याऽभूत। आस्ताम्।

न्यायालयैर्मिथिलाप्रदेशे कृत्रिमपुत्रस्वीकरणरूढिर्ग्राह्यत्वेन मान्यीकृतेत्युक्तं तत्संबन्धेनाग्रिमाः केचन निर्बन्धा मनसि संनिधातव्या भवन्ति।

(१) यः पुत्रः कृत्रिमपुत्रत्वेन स्वीकरणीयस्तस्य पुत्रस्य स्वतस्त्वेनास्मिन्विधौ संमतिरपेक्षितव्या, अर्थात्तेन पुत्रेण यादृश्यामवस्थायां विशेषतो विधिसमये स्वसंमतिं दातुं प्रभूयेतैतादृशीं महतीं वयोवस्थां दधानेन भाव्यम्। तत्संमतिर्धर्मशास्त्रीयवचनादप्यावश्यक्यालक्ष्यते। यतः—

सदृशं तु प्रकुर्याद्यं गुणदोषविचक्षणम्।
पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयश्च कृत्रिमः॥
(म० स्मृ० ९·१६९)।

एतन्मनुवचनस्थगुणदोषविचक्षणमितिपदेन स गुणदोषान् विवेक्तुं शक्नुयादित्येवं वयसा महानपेक्षित इति स्पष्टं भवति।

(२) तथा स्वीकरणीयकृत्रिमपुत्रेण परिग्रहीतृपितृसजातीयेनैव भाव्यम्। अयमप्यर्थो धर्मशास्त्राभिप्रेतः—

सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः।
(या० स्मृ० २।१३३)

तदिदं याज्ञवल्क्यवचनं द्रष्टव्यम्।

(३) कृत्रिमपुत्रोऽयं पत्या तत्पत्न्या चेति द्वाभ्यामपि ग्रहीतुं शक्यः। भर्त्रैकः पुत्रो गृहीतस्तर्हि तत्पत्न्याः स्वातन्त्र्येण द्वितीयः पुत्रः स्वीकर्तुं शक्यः। परन्तु दत्तकपुत्रवत्पत्न्याः

'औरसः क्षेत्रजश्चैव दत्तः कृत्रिमकः सुतः'

इति कलिधर्मप्रस्तावे पराशरस्मरणात् ॥ १७ ॥

---

इत्यादि अत्र भाष्यः प्रथमाध्याये व्यासेन पृष्ठयोर्वर्णचतुष्टयसाधारणासाधारणधर्मयोः साधारणधर्मं संक्षिप्य असाधारणधर्मः प्रपञ्चितः। अथ इदानीं संक्षिप्य साधारणधर्मो द्वितीयाध्याये प्रपञ्च्यते। अथवा पूर्वाध्याये आमुष्मिकधर्मः प्राधान्येन उक्तः अयन्तु प्राणहेतुकजीवनहेतुधर्मः प्राधान्येन प्रवर्तते। गृहस्थस्येति कृत त्रेताद्वापरेषु वैश्यस्यकृषादावधिकारो न तु गृहस्थमात्रस्य विप्रादेः अतो विशिनष्टि कलौयुगे इति। अपरमपि पराशरेण चाप्युक्तं प्रायश्चित्तं विधीयते। अत्रभाष्यः पराशरग्रहणन्तु कलियुगाभिप्रायं सर्वेष्वपि कल्पेषु पराशरस्मृतेः कलियुगधर्मपक्षपातित्वात् प्रायश्चित्तेष्वपि कलिविषयेषु पराशरः प्राधान्येन आदवनीयः। अपि च चतुर्थाध्याये प्रसङ्गात् प्रथमतः पतितसंसर्गादिकम् उक्तं

---

स्वभर्त्रर्थं तदनुज्ञास्याच्चेदपि कृत्रिमपुत्रस्वीकरणेऽधिकारो नास्ति। उपरितनपञ्चमाङ्कीयटिप्पन्यां निर्दिष्टवन्मिथिलाविभागे नन्दपण्डितमतानुसारेण विधवाया दत्तकग्रहणाधिकारो नास्तीति न्यायालयैरपि मान्यमकारि। परं मिथिलाविभागे विधवाया दत्तकग्रहणाधिकाराभावे सति तस्य स्थाने कृत्रिमपुत्रस्वीकाराधिकारोऽस्तीति संमानितमस्ति।

(४) कृत्रिमपुत्रस्य जनककुले दायाधिकार औरसपुत्रवदेवास्ति। तस्य कृत्रिमकुले तु येन पुरुषेण तस्य पुत्रत्वेन स्वीकारः कृतः तस्यैव पुरुषस्य यद्धनं तादृशधनसंबन्धेनैव कृत्रिमपुत्रस्य दायाधिकारोऽस्ति।

(५) कृत्रिमपुत्रग्रहणसमये कीदृशोऽपि धार्मिकविधिरथवा समारम्भो राजकीयनियमदृष्ट्या कर्तुं नापेक्ष्यते। एतद्विषये तु नन्दपण्डितमतस्य न्यायालयैर्मान्यतानादायि। दत्तकमीमांसायामग्रे नन्दपण्डिता एवं लिखन्ति—'दत्ताद्या इत्याद्यपदेन कृत्रिमादीनां ग्रहणमित्युक्तमेव। तेषामपि संस्कारैरेव पुत्रत्वम्' इति। तस्माद्दत्तको वाऽस्तु कृत्रिमो वा भवतु तयोः पुत्रत्वोत्पादनार्थं केचन विशिष्टसंस्कारा भवितुमावश्यकाः। तेभ्य ऋते तत्र पुत्रत्वं नैवोदस्येतेत्येवमभिप्रायः सर्वधर्मशास्त्रकाराणामस्ति। यद्यपि दत्तकविषये केचन धार्मिकविधयो न्यायालयैरावश्यका अमानिषत तथाऽपि कृत्रिमपुत्रविषये कीदृशस्यापि विधेरावश्यकता नास्तीति स्पष्टं तेषामभिप्रायोऽस्ति। तेन संप्रति मिथिलाप्रदेशे यदि कस्यापि कृत्रिमपुत्रः स्वीकार्यः स्याच्चेद् धार्मिकं वा लौकिकं वा कीदृशमपि विधिं विनैव कृत्रिमपुत्रो ग्रहीतुं शक्यः। स च राजनियमानुसारी भवति।

न चैवं क्षेत्रजोऽपि पुत्रः कलौ स्यादिति वाच्यम्। तत्र नियोगनिषेधेनैव तन्निषेधात्। अस्तु तर्हि विहितप्रतिषिद्धत्वाद्विकल्प इति चेन्न। दोषाष्टकापत्तेः। कथं तर्ह्यत्र क्षेत्रजग्रहणमिति चेत्। औरसविशेषणत्वेनेति ब्रूमः।

---

तत्प्रसङ्गे स्त्रीपुरुषयोः परित्यागे दोषः उक्तः तत्प्रसङ्गे क्षेत्रजादिपुत्राः उक्ताः तत्प्रसङ्गे परिवेदनाग्न्याधानं विहितं तत्प्रसङ्गे नष्टमृतादिस्थले स्त्रीणां नियोगधर्मब्रह्मचर्यसहमरणधर्मादिकमुक्तम् चतुर्थाध्याये ये धर्माविहिताः ते सर्वे प्रासङ्गिका न तु कलिधर्मा अतएव माधवाचार्येण उक्तं परिवेदनपर्य्याधानयोरिव स्त्रीणां पुनरुद्वाहस्यापि प्रसङ्गात् क्वचिदभ्यनुज्ञां दर्शयति नष्टे मृते प्रव्रजिते इत्यादिः। अतः पुत्रप्रकरणं न कलिधर्मप्रस्तावे पराशरेणोक्तं सुतरां वक्तव्यं वङ्गदेशे तु कृत्रिमपुत्रव्यवहारो नास्ति अपि च नियोगनिषेधात्। यथा क्षेत्रजपदं औरसविशेषणं दत्तौरसेतरेषान्तु पुत्रत्वेन परिग्रह इति निषेधात् तथा कृत्रिमपदमपि दत्तविशेषणं भवितु मर्हति तथा च करणात् वशिष्ठशौनकान्यतरोक्तहोमादिकरणान्निष्पणः कृत्रिम इति तस्यार्थः। वस्तुतस्तु औरसः क्षेत्रजश्चैव इत्यत्र चकारेण अपरे पुत्राः समुच्चिता परन्तु विशेषवचनात्, कलौ तु औरसदत्तकपुत्रद्वयमात्रं ग्राह्यम्। 'कलौ पाराशरः स्मृतः' इति तु कृषिकर्मणः प्रायश्चित्तकर्मणश्च मन्वादिविरोधेन विप्रादेरनुष्ठेयतया कलौ पाराशरस्य प्राधान्यं ज्ञापयतीति तत्त्वम्।

नियोगनिषेधेनेति। मन्वर्थं विवृण्वता बृहस्पतिना इति शेषः। तन्निषेधादिति क्षेत्रजपुत्रनिषेधादित्यर्थः। अस्तुतर्हि यदि स्वीकुर्य्यात्। विहितनिषिद्धत्वादिति पराशरेण विहितत्वात् मन्वर्थं विवृण्वता बृहस्पतिना निषिद्धत्वात् चेत्यर्थः। विकल्पः स्यात् क्षेत्रजपुत्रं कुर्यात् न कुर्यात् इति इच्छाविकल्पः स्यात्। दोषाष्टकापत्तेरिति। प्रमाणत्वाप्रमाणत्वपरित्यागमकल्पनात् तदुज्जीवनहानिभ्यामित्येवमष्टदोषतापत्तेरिति तथा हि ब्रीहिभिर्यजेतयवैर्यजेत इति श्रूयते तत्र ब्रीहिप्रयोगे प्रतीतयवप्रामाण्यपरित्यागः। अप्रतीतयवाप्रामाण्यकल्पनम् इदन्तु पूर्वस्मात् पृथक् अन्यथा समुच्चयेऽपि यागसिद्धिः स्यात्। अतएव विकल्पेनोभयः शास्त्रार्थः। इत्युक्तं तथा प्रयोगान्तरे यवे उपादीयमाने परित्यक्तयवप्रामाण्योज्जीजनं स्वीकृतयवाप्रामाण्यहानिरिति चत्वारो दोषा एवं ब्रीहावपि चत्वार इत्यष्टौ दोषा विकल्पे तथा च उक्तम्—

एवमेवाष्टदोषोऽपि यद्ब्रीहियववाक्ययोः।
विकल्प आश्रितस्तत्र गतिरन्या न विद्यते॥

तथा च मनुः—

स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादितश्च यः ।
तमौरसं विजानीयात्पुत्रं प्रथमकल्पिकम् ॥१७॥ इति ।

तयोर्मध्ये दत्तकविधिरभिधीयते । स च कः कीदृशः कथञ्चग्राह्य इति त्रितयं निरूपणीयम् । तत्र क[1] इत्यत्राह शौनकः—

---

इति इदमुपलक्षणम् । अत्र विधानप्रतिषेधस्वीकारे सत्यादि युगे सर्वदैव क्षेत्रजविधानं भवेत् कलियुगे तु निषेधसापेक्षमिति बाधनिरपेक्षं नित्यवदविधानं कचिच्च निषेधबाधसापेक्षमिति विधिवैरूप्यापत्तिरपि द्रष्टव्या । औरसविशेषणत्वेनेति तथा च पराशरवचने—"औरसः क्षेत्रजश्चैव" इत्यत्र क्षेत्रपदं लक्षणया सवर्णत्वसंस्कृतत्वविशिष्टक्षेत्रपरं वक्तव्यम् । एतदेव प्रमाणयति तथा च मनुरित्यादि ॥१७॥

तयोर्मध्ये औरसदत्तकयोर्मध्ये कः इति ग्राह्य इत्यनेनान्वयः । कीदृश इति निषिद्धातिरिक्तस्य ग्राह्यतासूचनाय कथञ्चेति होमादिकेतिकर्त्तव्यता ज्ञापनाय तत्र निरूपणीयेषु त्रिषु मध्ये इत्यर्थः । सपिण्डेषु सप्तमपुरुषावधिकेषु इति मत्स्यपुराणम्—

---

टिप्पणी—[1] तत्र क इत्याह शौनक इति । आधुनिकन्यायालयेषु यदा दत्तकसंबन्धेन प्रश्ना उपतिष्ठन्ते तदा तदन्तर्गतानां मुख्यतः पञ्चानां प्रश्नानां विचारः करणीयो भवति । (१) दत्तग्रहणे को वाऽधिकारी ? (२) दत्तकः केन देयः ? (३) को वा दत्तको भवितुमर्हति ? (४) दत्तकग्रहणसमये के के धार्मिकविषय आवश्यकाः ? (५) दत्तकविधाने राजकीयनियमानुसारीति निश्चिते जाते सति जनकपालककुलीयद्रव्यसंबन्धिनस्तस्य तदितरेषां वा कीदृशा अधिकाराः ? इति । नन्दपण्डितैः स्वग्रन्थेऽनेन क्रमेण विषयाः प्रत्यपादिषत (१) दत्तकः केन ग्राह्यः ? (२) दत्तकावश्यकता । (३) द्व्यामुष्यायणः (४) कृत्रिमपुत्रः । (५) दत्तकः कीदृशो ग्राह्यः ? । (६) पुत्रदानाधिकारिणः के ? (७) दत्तकत्वेन ग्राह्यपुत्रस्य वयसा कियत्परिमितेन भाव्यम् ? तस्य कीदृशाः संस्काराः प्रतिग्रहीतृपितृहस्तेनैव भवितुमावश्यकाः ? (८) दत्तकविधानसंबन्धिन आवश्यका धार्मिकविषयः, (९) विरुद्ध संबन्धः, (१०) संस्कारैः पुत्रत्वम्, (११) दत्तकस्य धनग्रहणाधिकारः, (११) दत्तकसापिण्ड्यनिर्णयः, द्व्यामुष्यायणसापिण्ड्यनिर्णयः, (१३) दत्तकदुहिता, क्षेत्रजादिदुहितरश्च, (१४) दत्तकाशौच निर्णयः, (१५) औरसे सति दत्तकस्य दायाधिकारः, इति । उपर्युक्तविषयानुक्रमादेवं मनस्यायास्यति—यदेतद्ग्रन्थे (१) (५) (६) (७) (८) (९) (१०) (११) (१५) एतदङ्क

"ब्राह्मणानां सपिण्डेषु कर्तव्यः पुत्रसंग्रहः।
तदभावेऽसपिण्डे वा अन्यत्र तु न कारयेत् ॥ इति।

"लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः।
पिण्डदः सप्तमस्तेषां सापिण्डं साप्तपौरुषम् ॥"

निर्दिष्टा विषया अद्य न्यायालयेषु मुख्यतश्चर्च्यन्ते। (३) एतदङ्कनिर्दिष्टा विषयाः यदा कदा न्यायालयेषूत्पत्तुं शक्नुवन्ति। सापिण्ड्यनिर्णयसम्बन्धी प्रश्नः कदाचिद्विवाहविषय उपस्थितो भवेत्। परंत्वाशौचनिर्णयदत्तकदुहितृक्षेत्रजादिदुहितृसंबन्धिनां प्रश्नानामुत्पत्तौ मार्ग एव नास्ति। यः कोऽपि प्रश्नो न्यायालयपुरतः समागच्छति तन्मूलप्रदेशे धनग्रहणसम्बन्धी कश्चन विवादोऽवतिष्ठत एव। आशौचादयः प्रश्ना ये केवलं धार्मिकस्वरूपमभिप्राप्तास्तेषां विचारं कर्तुं न्यायालया नैव प्रवर्तन्ते। अस्तु, एवमुपोद्घातादनन्तरं प्रकृतविषये मनःप्रवृत्तिः क्रियते। दत्तकः केन ग्राह्य इत्येतद्विषये न्यायालयेषु ये निर्णयाः जाताः सन्ति तत्सम्बन्धी विचारः (३, ४, ५) टिप्पनीषु कृत एव। अधुना दत्तकः को ग्राह्य इत्येतत्संबन्धेन न्यायालयेषु कीदृशा निर्णयाः सन्ति तदवलोक्यते।

दत्तकोऽयं पुत्र एवेति कृत्वा दत्तकदुहिता स्वीकर्तुं नैव शक्या भवति। परं मद्रासीयन्यायालयेनैवं निश्चितं यद्वारस्त्रीनर्तकीप्रभृतिजातीयस्त्रीभिः स्वपश्चात्स्वधनस्य कोऽप्यधिकारी स्यादिति हेतुना यदि दत्तकविधिना दुहिता परिगृह्येत, सा च दत्तकन्या स्वीयहीनजीवनवृत्तेरलिप्ता परिस्थाप्येत तर्हि तादृशं दत्तकविधानं राजकीयनियमानुसारि धर्तव्यमिति। मोहमयीकलिकातान्यायालयाभ्यां त्वेवं निरचायि—यत्तादृश्यां रूढौ सत्यामपि निरुक्तं गणिकादिकर्तृकदत्तकदुहितृग्रहणं राजनियमाननुसार्येव ज्ञेयमिति।

जिघृक्षितो दत्तकपुत्रोऽयं परिग्रहितृपितृवर्णीय एवापेक्षितः। अर्थात् ब्राह्मणेन ब्राह्मणजातीय एव दत्तको ग्राह्यो न क्षत्रियादिजातीयः। परमसौ समानान्तर्जातीय एवापेक्ष्यत इत्येवमनभिमतनिर्बन्धो नास्ति! तेन ऋग्वेदिनो यजुर्वेदी, देशस्थस्य च कौंकणस्थ इत्येवमन्तर्जातिवैपरीत्येनापि दत्तको ग्राह्यो भवेत्। नन्दपण्डितैर्जिघृक्षितदत्तकपुत्राणां या पालिका प्रोक्ता तस्यां सर्वतः प्राधान्यं भ्रातृष्पुत्र स्यादीयत, भ्रातुष्पुत्रालाभसम्भव एव सगोत्रसपिण्डः, तदभावेऽसगोत्रसपिण्डः, तदभावे सगोत्रासपिण्डः, ततः समानजातीयः, इत्येवमनुक्रमेण ग्राह्यपुत्राः प्रतिपादिताः सन्ति। तत्रापि द्विजातीयैर्दौहित्रः, भागिनेयः मातृस्वसृसुतश्चेति त्रयः पुत्राः सर्वथा वर्ज्या एवेतीत्येवं तेषां कटाक्षो लक्ष्यते। अपि चैवमप्येको नियमस्तैर्दत्तोऽस्ति—यस्य पुरुषस्य यया स्त्रिया सह तत्कन्यावस्थायां विवाहो भवितुं न शक्योऽशास्त्रीयत्वात्तादृशस्त्रियाः पुत्रस्तेन पुरुषेण

सपिण्डेषु सप्तमपुरुषावधिकेषु। सपिण्डेष्विति सामान्यश्रवणात्समाना-समानगोत्रेष्विति गम्यते। तत्र समानगोत्रतायाम्—

---

मनुरपि—

"सपिण्डता तु पुरुषे सप्तमे विनिवर्तते।"

सपिण्डोऽत्र ग्रन्थकर्तृमते अवयवान्वय सपिण्डो ग्राह्यः। मत्स्यपुराणवचनन्तु तन्मते पुरुषसंख्यामात्रविधायकम् बोध्यं सामान्यश्रवणात् सगोत्रतया असगोत्रतया

---

दत्तकत्वेन नैव ग्रहीतव्य इति। मोहमयीविनाकृत्यान्यन्यायालयैर्यया सह विरुद्धसंबन्धो भविता तादृशस्त्रियाः पुत्रो दत्तको न ग्राह्य इत्येवं मतं ग्राह्यत्वेन धृतमस्ति। परन्तु मुम्बापुरीस्थन्यायालयस्य निरुक्तमतं मान्यं नास्ति। मोहमयीयन्यायालयमते द्विजातीयस्य दौहित्रभागिनेयमातृष्वसृसुतान् विना कृत्वा कीदृशोऽपि समानजातीयः पुत्रो दत्तकत्वेन ग्रहीतुमर्हो भवति। इतरत्रस्यन्यायालयैरपि हि निरुक्तनिर्बन्धविषये दृष्टिशैथिल्यं व्यधायि। सर्वमहान्यायालयमते शूद्रविषयेऽसौ दौहित्रादिनियमोऽपि लग्नो भवितुं शक्नोति।

परं तथा रूढिः प्रचलिता स्याच्चेद्दौहित्रादीनां दत्तकविधानं द्विजातीयेष्वपि राजनियमानुसारि धर्तुं यायात्। भ्रातृपुत्रादीनां योऽनुक्रमः प्रोक्तः स केवलं प्रशस्तिमात्रमिति हेतोर्भ्रातृपुत्रसद्भावेऽपि यद्यन्यः पुत्रो दत्तको गृह्येत तर्हि सोऽपि राजनियमानुसारी (कायदेशीर) धृतो भवेत्, इति सर्वन्यायालयीयं व्यक्तं मतमस्ति। दत्तकपुत्रस्य वयोवस्थासंबन्धेन प्रतिग्रहीत्रा क्रियमाणसंस्कारसंबन्धेन चानेकविधन्यायालयानां नैकविधानि मतानि सन्ति। बंगाल, बिहार, ओड़िसा, काशीप्रान्त, इत्येवं चतुर्षु देशेषु द्विजातीयैरुपनयनात्प्रागृदत्तको गृह्येत चेत्तदैव दत्तकविधानं राजनियमानुसारी मन्यैत (गंगासहाय वि० लेखराज १० अलहाबाद २५३)। मद्रासप्रान्त इत्थं निर्णयोऽकारि यज्जिघृक्षितः पुत्रः सगोत्रः स्याच्चेत्तद्विवाहपर्यन्तं तादृशः पुत्रो द्विजातीयानां ग्राह्यो भवेत् (वीरराघव वि रामलिंग ९ मद्रास १४८)। अर्थात् ग्राह्यपुत्रस्योपनयनं जनककुले संजातमपि न क्षतिः किन्तु तद्विवाहः प्रतिग्रहीतृकुल एव सम्पादनीयः। असगोत्रदत्तकस्य तूपनयनमपि प्रतिग्रहीतृकुल एव निष्पाद्यं भवति। मुम्बापुरीयमहान्यायालयेनैवं निरचायि—यज्जिघृक्षितः पुत्रोऽयं सगोत्रो वाऽसगोत्रो वा, उपनायितो वाऽनुपनायितो वा, विवाहितो वाऽविवाहितो वा सपुत्रो वाऽपुत्रो वा कथमप्यस्त्वितरैः कैरपि कारणैः शुद्धं तादृशपुत्रस्य दत्तकविधानं राजनियमानुसार्येव ध्रियेत। तथैव सर्वमहान्यायालयानामित्थं निर्णयोऽस्ति—यद्ग्राह्यः पुत्रोऽयं स्वप्रतिग्रहीतृपित्रपेक्षया वयसाऽधिकोऽपि स्यात्तर्हि न क्षतिः (चन्द्रेश्वर वि० विश्वेश्वर ५ पाटणा ७७७)। शूद्रादिषूपनयनं भवितुमेव न शक्यं, तथाऽपि तेषां तत्स्थाने विवाहोऽस्मारि। अतो

सगोत्रेषु कृता ये स्युर्दत्तक्रीतादयः सुताः।
विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते ॥

इति वृद्धगौतमीयं वचनं प्रमाणम्।

---

च विधौ विशेषतोऽश्रवणात् इत्यर्थः। समानासमानगोत्रेषु समानगोत्राः भ्रात्रादि-सन्ततिप्रभृतयः। असमानगोत्राः दुहित्रादिसन्ततिप्रभृतयः। तत्र तयोर्मध्ये समान-गोत्रतायामित्यत्र प्रमाणमित्यनेनान्वयः। विधिनेति एतेन अविधानगृहीतस्य पुत्रत्वं न सिद्ध्यतीति सूचितं न सापिण्ड्यं न साप्तपौरुषिकं सापिण्ड्यं दत्तकादेः त्रैपुरुषिक-

---

मोहमयीनागपूरप्रभृतिप्रान्तान् विनाकृत्य विवाहितः शूद्रपुत्रो दत्तकत्वेन राजनियमाननुसृत्य ग्राह्यो न भवति।

एककः पुत्रो न देयो नापि ग्राह्य इत्येवं स्पष्टं शास्त्रवचनं वर्तते ( वसिष्ठधर्मसूत्रम् )। परं तु यदैकाकिपुत्रदत्तकविधानस्य राजनियमानुसारित्वविषये न्यायमन्दिरेषु प्रश्न उपस्थितस्तदा पूर्वमीमांसीयहेतुवन्निगदाधिकरणस्यानवधानतयाऽन्यथैवार्थं विधाय यद्विधिवाक्यं कारणघटितं स्यात्त-द्वाक्यस्य विधिस्वरूपत्वमेव नश्यति, अतस्तद्वाक्यमर्थवादात्मकं भवतीत्येवं न्यायमन्दिरेषु गृहीतं म्रियते स्म। अथ चैतस्माद् यतः "नत्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा, स हि संतानाय पूर्वेषाम्" अस्मिन् वाक्य एकाकिपुत्रदाननिषेधमुक्त्वा तत्साहित्येन 'स एककपुत्रः कुलपरम्परां प्रचालयितुमा-वश्यकः' इत्येवं कारणमदायि तत एतद्वाक्यीयप्रतिषेधोऽर्थवादात्मको धर्तव्यः, एककपुत्रस्य दत्तक-विधानं राजनियमानुसारीति धर्तव्यं चेत्यसौ निर्णयो न्यायमन्दिरैर्दीयते स्म ( श्रीबलुसु वि० श्री-बलुसु २६ ई० अ० ११३ )। वस्तुतोऽवलोकिते 'शूर्पेण जुहोति तेन ह्यन्नं क्रियते' एतस्मिन् विधिवाक्ये शूर्पं ह्यन्ननिष्पादनक्रियोपकारकमित्येवं यद्यपि शूर्पस्य महत्त्वाभिधायकं कारणं निर्दिष्टं तथाऽपि तद्वाक्यस्य विधिस्वरूपं नैव नश्यतीत्येवमेव निर्णयो हेतुवन्निगदाधिकरणे कृतोऽस्ति। तमनुसृत्य 'नत्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा' इदं वाक्यं तत्त्वतः प्रतिषेधस्वरूप एव पर्यवसन्न-मित्येव धर्तुं योग्यम्। कारणं 'स हि संतानाय पूर्वेषाम्' इतीदं कारणवाक्यं यद्यपि प्रतिषेधेन सह निगडितं तथाऽपि तद्वाक्यस्य प्रतिषेधात्मकत्वं नैव नश्यति। अस्तु, अधुना न्यायालयैर्मुक्त-ताया ( मुभा ) दत्तत्वेनैकपुत्रस्य दानप्रतिग्रहकरणे प्रतिबन्धो नास्ति।

एवमेककपुत्रस्य दत्तकविधाने राजनियमान्विते जायमानेऽपि यस्य ग्राह्यपुत्रस्य मातापितरौ मृतौ तादृशपुत्रस्य दत्तकविधानं राजनियमान्वितं भवितुं न शक्नोति। एतत् कारणमिदमस्ति—पुत्रदानाधिकारस्तन्मातापित्रोरेवास्ति नेतरस्येतिन्यायालयैर्निश्चितत्वात्तयोरजीवतोः सतोस्तत्पुत्रस्य दत्तकविधानं राजनियमानुसारेण भवितुमेव न शक्नोतीति।

गोत्रतां संततित्वम् ।

दत्ताद्या अपि तनया निजगोत्रेण संस्कृताः ।
आयान्ति पुत्रतां सम्यगन्यबीजसमुद्भवाः ॥

इति कालिकापुराणात् ।

'संततिर्गोत्रजननकुलान्यभिजनान्वयौ'

इति त्रिकाण्डीस्मरणाच्च । न तु गोत्रतापदेन गोत्रसंबन्धो विधीयते । सगोत्रेष्वेव पुत्रीकरणेन तस्य साहजिकतया विधानायोगात् ॥१८॥

न सापिण्ड्यं विधीयत इत्यसपिण्डस्य पुत्रीकरणे सापिण्ड्यं च प्रतिग्रहीतुः पाञ्चपौरुषं साप्तपौरुषं च निषिध्यते । असमानगोत्रस्य पुत्रीकरणे—'गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः' इति मानवम् ।

दत्तक्रीतादि पुत्राणां बीजवप्तुः सपिण्डता ।
पञ्चमी सप्तमी तद्वद्गोत्रं तत्पालकस्य च ॥

इति बृहन्मानवं च वचः प्रमाणम् । सोऽयं मुख्यः कल्पः ।

---

सापिण्डस्य वक्ष्यमाणत्वात् गोत्रतापदस्य सन्ततित्वार्थपरत्वं प्रमाणयति दत्ताद्या इति निजगोत्रेण ग्रहीतुर्गोत्रेण संस्कृता चूडादिसंस्कृता साहजिकतया अन्यानपेक्षतया विधानायोगात् सगोत्रेषु इत्यनेन गोत्रसम्बन्धप्राप्तौ विधित्वासम्भवात् इत्यर्थः ॥१८॥

न सापिड्यं विधीयत इति । असपिण्डस्य पुत्रीकरणे इत्यादि च । ननु सपिण्डदत्तककरणे साहजिकसाप्तपौरुषिकसापिण्ड्यप्रसक्तौ तन्निषेधार्थमेव न सापिण्ड्यं विधीयत इति निषेधो युज्यते एव किमिति असपिण्डस्य इत्याद्यतिरिक्तं विधीयत इति चेन्न । दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता । पञ्चमी सप्तमी तद्वदिति विशेषवचनेन सपिण्डदानकादीनामवयवान्वयसापिण्डस्य परित्यागायोगात् । निषिध्यत इति असपिण्डदत्तकस्य अन्यवंशजातत्वेन ग्रहीत्रादिभिः सह अवयवान्वयसापिण्ड्याप्रसक्तेः न्यायप्राप्तनिषेधो विधीयते, परन्तु वाचनिकमेव त्रैपुरुषिकम् अशौचाविवाह्यत्वप्रयोजकं सापिण्ड्यं दत्तकस्य वक्ष्यति । ग्रन्थकारकृतायां विष्णुस्मृतिटीकायां केशववैजयन्त्यामप्युक्तं यथा दत्तकपुत्रे सत्यपि जनकावयवान्वये तत्कर्तृकश्राद्धसम्बन्धाभावात् न दशपुरुषं सापिण्ड्यम्, किन्तु दत्तक्रीतादिपुत्राणां

[1]तदसंभवेऽनुकल्पमाह—तदभावेऽसपिण्डे वा इति। तेषां सपिण्डानामभावेऽसपिण्डोऽपि पुत्रीकार्यः। असपिण्डाः सप्तमपुरुषबहिर्भूता असंबन्धिनश्च। तेऽपि द्विविधाः—समानगोत्रा असमानगोत्राश्चेति। तत्रापि पूर्वोदाहृतवचनमेव प्रमाणम् ॥१९॥

तदयं निर्गलितोऽर्थः—समानगोत्रः सपिण्डो मुख्यः। तदभावेऽसमान-

---

बीजवप्तुः सपिण्डता पंचमी सप्तमी तद्वद्गोत्रं तत्पालकस्य चेति बृहन्मनुवचनात् साप्तपौरुषमेव। तथा प्रतिगृहीते पुत्रे सत्यपि प्रतिगृहीतृश्राद्धान्वये अवयवान्वयाभावात् न दशापुरुषं सापिण्ड्यं किन्तु यावन्तः पितृवर्गाः स्युः तावद्भिर्दत्तकादयः प्रेतानां योजनं कुर्य्युः स्वकीयैः पितृभिः सह द्वाभ्यां सहाय तत्पुत्रः पौत्रस्त्वेकेन तत्समं चतुर्थपुरुषे छेदस्तस्मादेषा त्रिपौरुषीति कार्ष्णाजिनवचनात् त्रिपुरुषमेव। पितृवर्गा इति पितुः प्रतिग्रहीतुर्वर्गाः पितृवद् गौणमुख्याः योजनं कुर्य्युः दत्तकपुत्रस्येति विशेषः तस्य दत्तकस्य ये पुत्रास्ते स्वपितुः प्रतिग्रहीतुरप्रेतनाभ्यां द्वाभ्यां प्रतिग्रहीत्रा च समं स्वपितृयोजनं कुर्य्युः। एवं दत्तकस्य पौत्रोऽपि तज्जनकपरिग्रहीतृभ्यां तदप्रेतनेनैकेन तादृशेन सह स्वपितृयोजनं कुर्य्युः यतस्तस्मादेव त्रिपौरुषीत्यर्थः। सोऽयं मुख्यः सगोत्रसपिण्ड एव मुख्यः तदसम्भवे सगोत्रसपिण्डासम्भवे तेऽपि सप्तमपुरुषबहिर्भूता असपिण्डाः द्विविधत्वं दर्शयति समानगोत्रा इत्यादि ॥ १९ ॥

पर्य्यवसितार्थं दर्शयति तदयमित्यादिः समानगोत्रसपिण्ड इति मुख्य इति।

---

१. तदसंभवेऽनुकल्पमाहेति। कस्मिंश्चित्—कर्मणि मुख्यत्वेन शास्त्रविहितोयः पदार्थो विधिर्वा स यदा केनचित् कारणेन् ग्रहीतुमशक्यो भवति तदा तत्प्रतिनिधित्वेनयोऽन्यः पदार्थो विधिर्वाऽऽदिश्यते सोऽनुकल्प इत्युच्यते। यथा—

'यदि सोमं न विन्देत् पूतीकानभिषुणुयादित्यादि'।

एवमौरसपुत्राभावे दत्तके जिघृक्षोः सगोत्रसपिण्डं पुत्रं मुख्यतो ग्राह्यत्वेनोक्त्वा तदलाभे असगोत्रसपिण्डस्तस्याप्यलाभे सगोत्रासपिण्डो ग्राह्य इत्येवमादयोऽनुकल्पा उक्ताः। एतस्मात् सगोत्रासपिण्डसद्भावे योऽन्यं पुत्रं ग्रहीतुं प्रवर्तेत, न तद्वस्तान्मुख्यविधिपरिपालनं जातमिति दत्तकमीमांसाकारा मन्यन्ते। परं स्वेतन्नियमानां सगोत्रसपिण्डग्रहणप्रशस्तिमात्रे पर्यवसानान्मुख्यकल्पसद्भावेऽप्यनुकल्पाश्रयेण दत्तके गृहीतेऽपि तस्य राजनियमानुसारित्वदोषापत्तेर्न भयम्। केवलं न्यायालयैः प्रेक्तानामितरनियमानां परिपालने कृते सति न काचित्क्षतिः।

गोत्रः सपिण्डः यद्यप्यसमानगोत्रः सपिण्डः समानगोत्रोऽसपिण्डश्चेत्युभावपि तुल्यकक्षौ, एकैकविशेषणराहित्यादुभयोस्तथाऽपि गोत्रप्रवर्तकपुरुषात्सापिण्ड्यप्रवर्तकपुरुषस्य संनिहितत्वेनाभ्यर्हितत्वम् ।

तेन चासमानगोत्रोऽपि सपिण्ड एव ग्राह्यो मातामहकुलीनः । सर्वथा सपिण्डाभावेऽसपिण्डस्तत्रापि समानोदक आ चतुर्दशात् समानगोत्रः प्रत्यासन्नः । तस्याभावेऽसमानोदकः सगोत्र एकविंशात् । तस्याप्यभावेऽसमानगोत्रोऽसपिण्डश्चेति । तदाह शाकलः—

सपिण्डापत्यकं चैव सगोत्रजमथापि वा ।
अपुत्रको द्विजो यस्मात्पुत्रत्वे परिकल्पयेत् ॥
समानगोत्रजाभावे पालयेदन्यगोत्रजम् । इति ।

सगोत्रेत्यनेन सोदकसगोत्रौ गृह्येते । अत्र च पूर्वपूर्वस्य प्रत्यासत्त्यतिशयेन निर्देश इति । तदेवाऽऽह वसिष्ठोऽपि--

'अदूरबान्धवं बन्धुसंनिकृष्टमेव प्रतिगृह्णीयात्' इति ।

अस्यार्थः--अदूरश्चासौ बान्धवश्चेत्यदूरबान्धवः । संनिहितः सपिण्ड इत्यर्थः ।

---

यद्यपि अवयवान्वयसपिण्डवादितया ग्रहकर्तुर्मते समानासमानगोत्रयोरपि सपिण्डयोः मुख्यत्वं समानं तथापि समानगोत्रसपिण्डे अवयवान्वयसपिण्डान्वयरूपोभयसापिण्डसद्भावात् तस्यैव मुख्यत्वोक्तिः साधीयसी । समानगोत्रसपिण्डत्वन्तु अवयवान्यित्वे सति निरपेक्षपिण्डतल्लेपदातृत्वभोक्तृत्वान्यतरसम्बन्धवत्वम् । असमानगोत्रः सपिण्डः········· । तुल्यकक्षाविति एकस्यावयवान्वयसपिण्डत्वेऽपि असमानगोत्रत्वेनापकर्षात् अपरस्य तु समानगोत्रत्वेऽपि असपिण्डत्वेनापकर्षाच्च तुल्यकक्षत्वमिति भावः । तुल्यकक्षत्वं दर्शयति एकैकेत्यादि । सन्निहितत्वेन अल्पसंख्यकपुरुषव्यवधानेन निकटवर्तितया अभ्यर्हितत्वं अन्तरङ्गत्वं तेन च समानगोत्रसपिण्डस्याभ्यर्हितत्वेन च मातामहकुलीनः मातामहकुले जातः एतदसमानगोत्रसपिण्डविशेषणं तथा च असमानगोत्रोऽपि मातामहसपिण्ड एव ग्राह्यः सर्वथा सपिण्डाभावे सर्वप्रकारसपिण्डाभावे आचतुर्दशादिति तथा च मिताक्षराविवाद-

सांनिध्यं च द्विधा--सगोत्रतया स्वल्पपुरुषान्तरेण च भवति। तत्र सगोत्रः स्वल्पपुरुषान्तरः सपिण्डो मुख्यः। तदभावे बहुपुरुषान्तरोऽपि सगोत्रः सपिण्डः। तदभावेऽसमानगोत्रः सपिण्डः। तस्याप्यभावे बन्धुसंनिकृष्टः सपिण्डः बन्धूनां सपिण्डानां संनिकृष्टः सपिण्डः स्वस्यासपिण्डः सोदक इत्यर्थः पर्यवस्यति। तत्रापि संनिकर्षो द्विविधः--सगोत्रतया स्वल्पपुरुषान्तरेण च। स्वस्यासपिण्डोऽपि स्वसमानगोत्रः स्वल्पपुरुषान्तरः सपिण्डानां सपिण्डो मुख्यः। तदभावे बहुपुरुषान्तरोऽपि सगोत्रः सपिण्डः सोदक इति यावत्। सपिण्डसोदकासंभवे समानगोत्र एकविंशद्ग्राह्यः। तदसंभवेऽसमानगोत्रोऽसपिण्डोऽपि ग्राह्यः। 'तदभावेऽसपिण्डोऽपि' इति शौनकीयात्। 'सन्देहे चोत्पन्ने दूरबान्धवं शूद्रमिव स्थापयेत्' इति वशिष्ठलिङ्गाच्च। दूरे बान्धवा यस्यासौ दूरबान्धवः। गोत्रसापिण्ड्याभ्यामसंनि-

---

चिन्तामण्यो बृहन्मनुः। सपिण्डता तु पुरुषे सप्तमे विनिवर्तते समानोदकभावस्तु निवर्त्तेताचतुर्दशात्। जन्मनाम्न स्मृतावेके तत्परं गोत्रमुच्यते इति एकविंशादिति एकविंशतिपुरुषपर्यन्तं यद्यपि तत्र वचनप्राप्तं तथापि बृहन्मनुवचन सप्तमपुरुषपर्यन्तसपिण्डमभिधाय ततः सप्तमपुरुषपर्यन्त स्नानोदकत्वमभिधाय च चतुर्दशपुरुषात् परं गोत्रत्वाभिधानात् वचनान्तरेण च गोत्रजानामहः—सद्यश्चत्युभयारशौचयावधानात् तयोः सार्थक्याय विशेषगोत्रजे एकाहो शौचे वक्तव्ये। एकत्र दृष्टन्यायात् चतुर्दशपुरुषात्परं एकविंशतिपुरुषपर्यन्त विशेषगोत्रजत्वमावश्यकल्प्यप्रामिति विभाव्यं- तद्युक्त्या एकविंशादित्युक्तम्। लिखितक्रमस्य प्रमाणं दर्शयति शाकल इत्यादि वचनोक्तक्रमस्य ग्राह्यत्वे सपिण्डाभावे गोत्रजस्य ग्राह्यता स्यादिता व्याचष्टे सगोत्र इत्यनेनेत्यादि। प्रत्यासत्त्वातिशयेन सम्बन्धनैकन्यन। अदूरबान्धवबन्धुसन्निकृष्टपत्यायेथा श्रुतार्थत्वे वैयर्थ्यमाशङ्क्य स्वय व्याख्यायते अदूरश्चासावित्यादि अत्र बान्धवपदं सपिण्डपरं बन्धुसन्निकृष्टमित्यत्र बन्धुनामेव सन्निकृष्टमित्यर्थमभिप्रेत्य व्याचष्टे स्वस्यासपिण्ड इत्यादि। वशिष्ठलिङ्गाच्च इत्यादि असपिण्डेत्यादि असपिण्डस्य असगोत्रस्य च उदासीनतया प्रायेण कुलशीलाद्यपरिचयात् सजातीयो नवेति सन्देहो जायते सति सन्देहे शूद्रमिव स्थापयेदिति वदतो वशिष्ठस्य सन्देहा-

हितमित्यर्थः। संदेहोऽत्र [1]कुलशीलादिविषयः। स चासपिण्डेऽसगोत्रे च भवतीति सोऽप्यनुज्ञायते॥ २०॥

अन्यत्र तु न कारयेदिति। यद्यपि सपिण्डासपिण्डेभ्योऽन्यो न संभवति तथाऽपि—

'सर्वेषामेव वर्णानां जातिष्वेव न चान्यतः'

इति वाक्यशेषेण सपिण्डासपिण्डानां सजातीयत्वेन विशेषणादसमानजातीयाः सपिण्डा असपिण्डाश्च व्यावर्त्यन्ते। अप्रतिषिद्धमनुमतं भवतीति न्यायेनानुकल्पतया तत्प्राप्तिसंभवात्। अत एव वृद्धगौतमः—

---

भावे असपिण्डासगोत्रौ ग्राह्यावित्यभिमतं प्रतिभाति। अन्यथा सन्देहे इति विशेषो न स्यात्॥ २०॥

असमानजातीया ब्राह्मणस्य मूर्द्धाभिषिक्तपुत्रादयस्तेषामपि अवयवान्वयसापिण्ड्यसद्भावात् ननु पिण्डोदकक्रियाहेतो र्दत्तकविधानात् असमानजातीयानां तदनधिकारात् प्रसक्त्याभावेन निषेधो विफलमित्यत आह अप्रतिसिद्धमनुमतमिति तथा च न्यायत एव असमानजातीयस्य नामसंकीर्तनाय दत्तकत्वप्रसक्तौ जातिष्वेव

---

१. सन्देहोऽत्र कुलशीलादि विषय इति सन्देहे चोत्पन्ने '[ अ ] दूरबान्धवं शूद्रमिव स्थापयेत्' एतद्वसिष्ठवचनाद्दत्तकनिर्वृत्तौ ( निवड ) कर्तव्यायां सुतरां दक्षताग्रहणमावश्यकमित्यत्रगम्यते। पातित्यादिदोषविषयकः कुले संदेहः। परं त्वाधुनिकराजनियमानुसारेण पातित्यदोषो दायाधिकारं नापहर्तुं शक्नोति। कस्यचित्पुत्रो महापातकेन म्लेच्छसंसर्गेण वा पातित्यं प्राप्तस्तथाऽपि स पितृधनांशं लभेतैव। किन्तु पतितपुत्रापेक्षयाऽन्यं शुद्धं पुत्रं दत्तकं गृहीत्वा तद्द्वारा स्वौर्ध्वदेहिकश्राद्धादिधार्मिकविधिसंपादने कः प्रतिबन्धः। केवलं पित्रा स्वकष्टार्जितद्रव्यांशप्रदानमन्तरा स दायविभागग्राही न भवेदित्येव। भूमिकायां वार्णतरीत्या पुत्राऽयं मुख्यतः समाजतदन्तर्गतविशिष्टसंघगतस्य स्वपितृस्थानस्य संरक्षणार्थं भवति। तस्मात्स्वपितृसदृश एवापेक्षितः। किं बहुना, पितृपेक्षयाऽपि तत्तद्विशिष्टगुणेषु यदि सोऽधिकश्रेष्ठः स्यात्तर्हि समाजकार्यसंपादनेऽतीव समर्थः स्यादिति कथनस्यापेक्षा नास्ति। परं त्वद्येयं दत्तकविषयिणी दृष्टिन्यायालयाना नास्ति।

नैतावदेव, किन्तु यस्मिन् समाजे दत्तकपुत्रो गृह्यते तेषां पुरुषाणामपीयं दृष्टिर्नास्तीति खेदावहमेतत्।

यदि स्यादन्यजातीयो गृहीतो वा सुतः क्वचित् ।
अंशभाजं न तं कुर्याच्छौनकस्य मतं हि तत् ॥

इत्यसमानजातीयस्यांशभाक्त्वं निषेधति । तस्माद्[1]समानजातीयो न पुत्रीकार्यं इति सिद्धम् । अत एव मनुः–

'सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः' इति ।

सदृशं सजातीयम्–

'सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः'

इति यौगीश्वरस्मरणात् । यत्तु मनुनैव—

क्रीणीयाद्यस्त्वपत्यार्थे मातापित्रोर्यमन्तिकात् ।
स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपि वा ॥

इत्युक्तं, तत्र गुणैरसदृशो वेति व्याख्येयं न जात्येति । यत्तु सदृशं न जातितः किं तर्हि कुलानुरूपैर्गुणैः । तेन क्षत्रियादिरपि ब्राह्मणस्य पुत्रो युज्यत इति मेधातिथिना व्याख्यातम्, यच्च शूद्रोऽपि किल पुत्रो भवतीत्यभिप्राय इति कल्पतरुव्याख्यानम्, तदुभयमपि–

'सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः'

---

न चान्यत इति निषेधेन असमानजातीयस्य व्यावृत्तिसद्भावं दर्शयति अनुकल्पतया आपत्कल्पतया तत्प्राप्तिसम्भवात् असमानजातीयदत्तकत्वप्राप्तिसद्भावादित्यर्थः । एतेन असमानजातीयस्य दत्तकत्वं सिद्धत्येव परन्तु स तु न प्रकृष्टः अतः अन्यत्र तु न कारयेदित्यस्य जातिष्वेव न चान्यत इत्यस्य च पिण्डोदकक्रियागात्रनिषेधकतया सार्थक्यं वक्तव्यमिति सिद्धम् । यत एव असमानजातीयस्य न प्रकृष्टदत्तकत्वं अतएवेत्यर्थः । अंशभाजं न तं कुर्यादिति अथा च दायभागप्रकरणे मनुना त्रयाणामुदकं कार्यं त्रिषु पिण्डः प्रवर्तते इति कीर्तनात् तदन्यथानुपपत्त्या पिण्डदानसम्बन्धादेव धनसम्बन्धस्य मनोरभिमतत्वेन असमानजातीयस्य पिण्डदानाभावादेव धनसम्बन्धाभावो न्यायप्राप्त एवेति भावः । अंशभाक्त्वं निषेधयति इति अंशभाक्त्वनिषेधप्रदर्शनेन अस-

---

१. तस्मादसमानजातीयो न पुत्रीकार्य इति ।

इत्युदाहृतयोगीश्वरवचनविरोधात् 'जातिष्वेव न चान्यतः' इति शौनकवचनविरोधाच्चोपेक्ष्यम्। यत्तु मनुना--

'स्वयं दत्तश्च शौद्रश्च षडदायादबान्धवाः'

इत्यत्र शौद्रस्य पुत्रप्रतिनिधित्वेन परिगणनं कृतं तच्छूद्रेण दास्यामुत्पादितस्यानूढोत्पन्नस्य मुख्यपुत्रत्वाभावात्पुत्रप्रतिनिधित्वमभिप्रेत्येति व्याख्येयम्।

जातोऽपि दास्यां शूद्रेण कामतोंऽशहरो भवेत्।
मृते भर्तरि कुर्युस्तं भ्रातरस्त्वर्धभागिकम्॥ (भागिनम्)
अभ्रातृको हरेत्सर्वं दुहितॄणां सुतादृते।

इति योगिस्मरणात्। तस्मात् सदृशं दातुः प्रतिग्रहीतुश्च सवर्णमित्यपरार्कव्याख्यैवात्र साधीयसी। याज्ञवल्क्योऽपि--

'सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधि'रिति।

संनिहितसगोत्रसपिण्डेषु च [1]भ्रातृपुत्र एव पुत्रीकार्य इति। अभ्युपगतं

मानजातीयस्यापि दत्तकत्वं सिद्धत्येव स्वाभिमतं प्रकटितम्। अतएव चन्द्रिकाधृतं वृद्धयाज्ञवल्क्यवचनम्। सजातीयसुतः कार्यः (ग्राह्यः) पिण्डदाता स रिक्थभाक्। तदभावे विजातीयो वंशमात्रकरः स्मृतः ग्रासाच्छादनमात्रं तु स लभेत तद्रिक्थिनः इति तस्मात् पिण्डोदकदानाधिकारित्वेन असमानजातीयस्य धनानधिकारात्। न पुत्रीकार्य इति पिण्डोदकक्रियाहेतोरिति शेषः अतएव पिण्डोदकक्रियाहेतोः प्रशस्तदत्तकविधानादेव कलौ तु असवर्णविवाहनिषेधेन असवर्णमुख्यपुत्रनिषेधात् सुतरामेव असवर्णगौणपुत्रकरणमपि निषिध्यते। मनुवचनस्थसदृशासदृशपदस्य गुणसादृश्यासादृश्यज्ञापनार्थं यथाश्रुतं सजातीयत्वासजातीयत्वमर्थमादाय आशङ्कते यत्तु मनुनेवेत्यादि मेधातिथिमतं कल्पतरुमतञ्च उपेक्ष्यमितिकृत्वा यद्दूषितं तत् कलियुगाभिप्रायेण अन्यथा प्रागुक्तचन्द्रिकाधृतवचनेन यदि स्यादिति वचनेन च सह विरोधः स्यात् सदृशपदस्य सवर्णत्वार्थकत्वं प्रकटीकर्तुम् अपरार्कव्याख्यानमुदाहरति तस्मादिति।

भ्रातृपुत्र एव सोदरभ्रातृपुत्रो मुख्य एव इत्यर्थः। एवकारेण अन्यसपिण्डस्य

१. भ्रातृपुत्र एव पुत्रीकार्य इति।

च तद्विज्ञानेश्वराचार्यैरपि-भ्रातृपुत्र एव पुत्रीकार्य इति। अत्र सोदरभ्रातृपुत्र एव पुत्रीकार्य इत्याह मनुः—

भ्रातृणामेकजातानामेकश्चेत्पुत्रवान्भवेत्।
सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत्॥ इति।

अत्र भ्रातृणां प्रतिगृहीतृत्वप्रतिपादनाद् ग्राह्यत्वाभावोऽवगम्यते। एकजातानामित्यनेनैकेन पित्रा, एकस्यां मातरि जातानामेव ग्रहीतृत्वं न भिन्नोदराणां भिन्नपितृकाणां वेति गम्यते। भ्रातृणामिति पुंस्त्वनिर्देशात्पदद्वयोपादानसामर्थ्याच्च सोदराणां भ्रातृभगिनीनामपि परस्परं पुत्रग्रहीतृत्वाभावोऽवगम्यते। तदाह वृद्धगौतमः—

'ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित्' इति—

भागिनेयपदं भ्रातृपुत्रस्याप्युपलक्षणम्। तेन भगिन्या भातृपुत्रो न ग्राह्य इत्यर्थः सिध्यति। भ्रातृणामेव ग्रहीतृत्वप्रतिपादनात्। यद्यपि 'भ्रातृपुत्रौ स्वसृदुहितृभ्याम्' इत्यनेनैकशेषोऽवगम्यते, ततश्च भ्रातृभगिनीपुत्रयोभ्रातृ-

---

मुख्यत्वनिरासः भ्रातृपुत्रग्रहणसम्भवे अन्यपुत्रग्रहणनिषेध इति च ज्ञाप्यते प्रभुः प्रथमकल्पस्य इत्यादिवचनादितिशेषः। न तु भ्रातृपुत्रसद्भावमात्रे अन्यस्य ग्रहणनिषेधः तथात्वे भ्रातुरेकमात्रपुत्रत्वे वैरादिना दानाभावे वा दत्तकपरिग्रहाभावादलौकतापरिहारो न स्यात् अतः केनचिदुक्तं भ्रातृपुत्र एवेति तत् सद्भावे अन्योनग्राह्य इत्येवकारेण द्योत्यत इति भ्रमविजृम्भितमेव। अभ्युपागतमङ्गीकृतं ग्राह्यात्वाभावो इव गम्यते। भ्रात्रा भ्राता न ग्राह्य इत्यवगम्यते एकजातानामित्यत्र एकत्वस्य विनिगमनाविरहात् एकमात्रपेक्षया एकपित्रपेक्षया चान्वयमभ्युपेत्य समादधाति। एकेन पित्रा एकस्यामित्यादि भिन्नोदराणां एकेन पित्रा विभिन्नमातृजानां सापत्न्यभ्रातृणामित्यर्थः। विभिन्नपितृकाणाम् एकस्यां मातरि विभिन्नपित्रा जातानाम्। तथा च ब्रह्मपुराणम्—

एकामाता द्वयोर्यत्र पितरौ द्वौ च कुत्रचित्।

तयोः स्यात् लुतकादैक्यं मृतकाच्च परस्परं भ्रातृणामिति पुंलिङ्गनिर्देशात् इति पदद्वयोपादानसमर्थाच्चेति उद्देश्यविशेषणत्वेन पुंस्तमविवक्षितमित्याह भ्रातृभगिनीनाम्

भगिनीभ्यां परस्परं पुत्रीकरणमवगम्यते, तथाऽऽप्येकजातानामिति भ्रातृविशेषणेनैकं जातं जातिर्येषां त एकजाताः। 'जातिजातं तु सामान्यम्' इति कोशात्, तेषां समानजातीयत्वप्रतिपादनात्, भ्रातॄणां पुंसां भ्रातृपुत्रस्य भगिनीनां च स्त्रीणां भगिनीपुत्रस्य पुत्रीकरणं सिध्यति, न भ्रातृपुत्रस्य भगिन्या भगिनीपुत्रस्य भ्रात्रा वा पुत्रीकरणं सम्भवति। स्त्रीपुंस्त्वजातिभेदात्।

ननु सकृदुच्चारितस्यैकजातानामित्येकस्य पदस्य सोदरत्वं समानजातीयत्वं चेत्यर्थद्वयं न सम्भवति। सकृदुच्चारितः शब्दः सकृदेवार्थं गमयतीति न्यायविरोधादिति चेन्न।

[1]'असंसृष्टयपि चाऽऽदद्यात्संसृष्टो नान्यमातृजः'

---

अधिकारप्राप्तौ एकजातानामिति पृथगुपादानवैयर्थ्यात् एकपितृमातृजातैकजातीयानामित्यर्थस्यैव मनोरभिमतत्वादिति भावः। भागिनेयः सुतः क्वचिदिति भागिनेयनिषेधात् भ्रात्रा भगिनीपुत्रो न ग्राह्य इत्यवगम्यते भ्रातृपुत्रस्योपलक्षणम् इति लक्षणा चेयं निरुक्तमनुवचनस्थपदद्वयोपादानयुक्तिप्राप्ता न दूषणवहा भ्रातृणामेव एव कारेण भ्रातृभगिनीनां विजातीयानां परस्परपुत्रप्रतिग्रहीतृत्वव्युदासः। भ्रातृपुत्रावित्यादिपाणिनिसूत्रं स्वस्रा सह भ्रातृपदस्यैकशेषः दुहित्रा सह पुत्रपदस्यैकशेषः। एकशेष इति भ्रातरश्च स्वसारश्च इति विग्रहेण भ्रातॄणामित्यनेन भ्रातृभगिन्योर्लाभः सम्भवति।

ततश्च एकशेषेण भ्रातृपदेन भ्रातृभगिन्योर्लाभाच्च। तथाप्येकजातानामिति एतेन भ्रातॄणामित्यत्र भ्रातृपदे एकशेषः सिद्ध्यत्येव परन्तु एकजातानामिति विशेषणेन एकजातीयत्वप्रतिपादनात् भ्रातृभगिनीभ्यां परस्परं पुत्रग्रहणं न कार्यमिति एतावन्मात्रं सिद्धं न तु एकशेषाभावः तथात्वे भगिनीनाञ्च स्त्रीणां भगिनी पुत्रस्य पुत्रीकरणं सिद्ध्यति इति ग्रन्थकारस्य अग्रिमलिखनमसङ्गतं स्यात् भ्रातृपदस्य सापत्न्यसाधारण्ये

---

१. मञ्जरी व्याख्या—असंसृष्ट्यपीति—(याज्ञ० स्मृ० २।१३९) अन्योदर्यस्तु संसृष्टी नान्योदर्यो धनं हरेदिति, अस्य पूर्वार्द्धं बोध्यम्। सोदरौ द्वौ भ्रातरौ, तयोश्चैकः सापत्नभ्राता त्रयोऽप्येते विभक्तधना आसन्। पश्चात्सापत्नभ्राता सोदरयोर्द्वयोर्भ्रात्रोर्ज्येष्ठेन भ्रात्रा सह संसृष्टी संजातः। संसृष्टी नाम विभक्तं धनं पुनर्मिश्रीकृतं संसृष्टं तदस्यास्तीति संसृष्टी। एकत्रवासीत्यर्थः। कनिष्ठः सोदरः पुनर्विभक्त एवा-

इत्यत्र संसृष्टपदस्य सोदरपरत्वेन संसृष्टिपरत्वेन च विज्ञानेश्वराचार्यैर्व्याख्यातत्वादिहापि तथैवेति न दोष इत्यलम् ॥२१॥

बहुवचनमेकद्वित्वयोरप्युपलक्षणम् । बहुषु द्वयोः संभवात् । यदि हि द्विपिता स्यादेकैकस्मिन् पिण्डे द्वौ द्वावुपलक्षयेदिति द्विपितृकत्वसंभवाच्च । एक एकोऽपि चेदित्यनेन द्वयोर्बहूनां वा पुत्रवत्त्वे सुतरां सुकरं पुत्रग्रहण-

---

प्रयोगदर्शनात् न भ्रातृपदेन सोदरार्थः प्रतीयते । एकजातपदेन एकजातीयार्थग्रहणे न सोदरार्थप्रतीयते सकृदुच्चरितमिति न्यायादित्याशङ्क्यते नन्वित्यादि संसृष्टपदस्येति गर्भसंसृष्टत्वमादाय सोदरार्थे प्रतीतिः यथाश्रुतार्थमादाय संसृष्टत्वप्रतीतिश्च यथा उभयार्थता । तथा इहापि एकजातानामित्यत्रापि तथैव एकजातत्वैकजातीयत्वोभयार्थतैव ॥ २१ ॥

ननु एकजातनामित्यत्र बहुवचनश्रवणात् बहुभ्रातृस्थल एव भ्रातृपुत्रस्य दत्तकत्वेन ग्राह्यता न तु भ्रातृद्वयस्थले इत्याशङ्कामपनेतुमाह बहुवचनं द्वित्वस्याप्युपल-

---

ऽऽसीत् । संसृष्टिनोर्द्वयोः सापत्नभ्रात्रोर्मध्य एको यस्य सोदरो भ्राताऽस्ति स कालवशात् स्मृतिपथं प्राप्तः । मृत इति यावत् । मृतस्य च तस्य न पुत्रः, नापि पत्नी, न वा दुहिताऽऽसीत् । एवं स्थितौ मृतस्य संसृष्टिनो धनं केन ग्राह्यं किं संसृष्टिना सापत्नभ्रात्राऽथवाऽसंसृष्टिना सोदरभ्रात्रेत्याकाङ्क्षायामाह याज्ञवल्क्यः—असंसृष्ट्यपि चाऽऽदद्यात् संसृष्टो नान्यमातृजः, इति । मृतस्य संसृष्टिनो धनं संसृष्ट्यपि संसृष्टः सोदरभ्राता गृह्णीयात् । अत्रासंसृष्टस्यापि सोदरस्य धनग्रहणे सोदरत्वं कारणमुक्तम् । तथा च संसृष्टशब्दस्यैकोदरसंसृष्ट इत्यर्थात्सोदर इत्यर्थ इति स्पष्टमेव । तत्र संसृष्टपदमुत्तरत्रापि संबध्यते । तत्र च संसर्गयुक्तः संसृष्टः । संसृष्टीति यावत् । संसर्गश्च विद्यमानं भावि वा धनमावयोः साधारणमित्यकारकोऽभिप्रायः । तथा च संसृष्ट्यप्यन्यमातृजो मृतस्य संसृष्टिनो धनं न गृह्णीयात् । अत्र संसृष्टिनोऽप्यंशहरत्वाभावे भिन्नमातृजत्वं कारणमुक्तम् । तथा चात्र संसृष्टपदस्य संसृष्टीत्यर्थ इति व्यक्तं भवति । ततश्च मिताक्षराकृद्भिर्विज्ञानेश्वरैरसंसृष्ट्यपि चाऽऽदद्यादित्यत्रत्यस्य सकृदुच्चारितस्यापि संसृष्टपदस्य यथा निरुक्तार्थद्वयपरत्वमङ्गीकृतं तद्वत्सकृदुच्चारितस्याप्येकजातानामिति पदस्यैकमातापितृकत्वसमानजातीयत्वरूपार्थद्वयपरत्वस्वीकारे बाधकाभाव इति भावः । इतिमञ्जरीकारः ।

मन्येषामपुत्राणां गमयति नैक्रीयैकपुत्रग्रहणं व्यावर्तयति। एकपदोपादान-सामर्थ्याच्चेनेत्येकत्वनिर्देशाच्च। पुत्रः पुत्रौ पुत्रा वा विद्यन्ते यस्येति मतुप्। तेन चैकस्यापि पुत्रस्य दानाभ्यनुज्ञाने न त्वेवैकं पुत्रं दद्यादिति निषेधस्यात्रानवकाशः। सहि संतानाय पूर्वेषामिति हेतुवचनप्रतिपादितपित्रादिपूर्वसंतानस्य भ्रातृद्वयसाधारणेनापि पुत्रेण निर्वाहादुक्तनिषेधस्य भ्रात्रतिरिक्तविषयतासिद्धेः।

किंच दानस्य स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनरूपत्वात् तस्य चानेन निषेधात् प्रकृते चैकस्योभयसाधरणीकरणेन स्वत्वनिवृत्त्यभावात्कन्यादान इव दानपदार्थस्य गौणत्वात्। पुत्रपदस्यौरसे मुख्यत्वादौरसत्वमेव पुत्राणां

---

क्षणम् इति बहुषु द्वयोः संम्भवादिति संख्याया अपेक्षाबुद्धिविशेषरूपत्वात् अयमेकः अयमेकः अयमेक इत्यपेक्षाबुद्धिविशेषरूपबहुत्वाश्रयेषु बहुषु अयमेकः अयमेक इति अपेक्षाबुद्धिविशेषरूपद्वित्वस्य सत्वादिति भावः।

ननु मनुवचने सर्वे ते तेन पुत्रेण इत्यत्र एकत्वनिर्देशात् एकपुत्रस्य दानप्रतिग्रहयोर्निषाधात प्रतिग्रहं विना पुत्रत्वानिष्पत्तेश्च कथम्? एकपुत्रेण सर्वेषां भ्रातॄणां पुत्रत्वं घटते इत्याशङ्कायामाह द्विपितृकत्वसम्भवाच्च व्यामुष्यायणत्वसम्भवाच्चेत्यर्थः। तथाच सन्तानविच्छेदहेतोर्दाननिषेधात् व्यामुष्यायणत्वे च सन्तानविच्छेदाभावात् नानुपपत्तिरितिभावः। उपलक्षयेत् एकस्मिन् पिण्डे द्वयोः पित्रोर्नाम उच्चरेदित्यर्थः। द्विपितृकत्वसम्भवाच्चेति चोऽवधारणे द्विपितृकत्वसम्भवादेव इत्यर्थः। इदं पञ्चम्यन्तद्वयं गमयति इत्यत्र हेतुः। एकश्चेदिति मनुवचने एकत्वस्य उद्देश्यविशेषणत्वेनाविवक्षामभिप्रेत्य विवृणोति। एकोऽपि चेदित्यनेनेत्यादि द्वयोर्बहुनाम्वा सहोदरणामिति शेषः। पुत्रवत्वे औरसपुत्रवत्वे सुकरं सुलभं गमयति प्रतिनिधिपुत्रग्रहणं बोधयति अन्यथा एकस्य द्विपितृकता न घटेते। नैक्रीयैकपुत्रग्रहणम् इत्यादि। एकस्य एकमात्रपुत्रसत्वेऽपि व्यामुष्यायणविधिना अपरस्य तत्पुत्रग्रहणं न व्यावर्त्तयति न निषेधयति। निषेधाभावे हेतुं दर्शयति। एकपादोपदानसामर्थ्यादिति एकश्चेत् पुत्रवान् भवेत् इत्यत्र इति शेषः।

ननु पुत्रवान् भवेदित्यत्र पुत्राः वर्तन्तेऽस्य इत्यनेन एकस्य बहुपुत्रसत्वे एव अपरस्य प्रतिनिधिपुत्रग्रहणं वाच्यं कथम्? एकस्य एकमात्रपुत्रसत्वे तत् पुत्रग्रहणम-

सिध्यति। तेन च भ्रातृकृतपुत्रप्रतिनिधीनां परिग्रहणाभावोऽवगम्यते। भवेदित्यनेन पुत्रवत्तायाः सत्ताप्रतिपादानाद्भूतपुत्रत्वं भविष्यत्पुत्रत्वं च व्यावर्तयति। तेन चातीतेन भ्रातृपुत्रेणान्यस्य भ्रातुर्न, पितापुत्रस्य

---

परस्य प्रतीयते इत्यत आह—तेनेत्येकत्वनिर्देशाच्च सर्वे ते तेन पुत्रेण इत्यत्र तृतीयैक-वचननिर्देशादितिभावः। ननु न त्वेकं पुत्रं दद्यात् प्रतिगृह्णीयादिति वशिष्ठवचनेन एकपुत्रदानपरिग्रहप्रतिषेधात् कथं एकमात्रभ्रातृपुत्रसत्वे तस्य दानपरिग्रहौ सम्भवतः इति चेन्न स हि सन्तानाय पूर्वेषामिति हेतुवचनेन पूर्वेषां सन्तानविच्छेदसम्भावनायामेव दानप्रतिग्रहयोर्निषिद्धतया व्यामुष्यायणस्थले एकस्योभयसन्तानत्वादेव तदसम्भवात् एतदेव उपदिशति न त्वेकं पुत्रं दद्यादित्यादि। भ्रात्रतिरिक्तविषयतासिद्धेः व्यामुष्या-यणपुत्रकारिभ्रात्रतिरिक्तविषयतासिद्धेरित्यर्थः। ननु विधि र्हि न हेतुमपेक्षते अतएवोक्तं अनपेक्षरवा श्रुतिरिति। तथाच निषेध एव बलवान् न हेतुवचनेन तस्य संकोच इत्याशङ्क्य मुख्यदानमेव व्यामुष्यायणस्थले नास्ति इति दर्शयति किञ्चेत्यादि तस्य च स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादानत्यागरूपमुख्यदानस्य च अनेन न त्वेकं पुत्रं दद्यादित्यादिना। कन्यादान इव कन्याया वाग्दान इव इत्यर्थः। तथा च दास्यामीति प्रतिश्रुतौ तत्र वरस्य किञ्चित् स्वत्वमुपजायते। कथमन्यथा नारदेन तत्कन्याया अन्यत्र-दाने दातरि चौरवद्दण्डमभिदधाति। यथा नारदः दत्त्वा न्यायेन या कन्या वराय न ददाति तां अदुष्टश्चेद्वरो राज्ञा स दण्ड्यस्तत्र चौरवत्। कथंवा वरकुले अशौचसम्बन्धः दातुश्च सम्यक् स्वत्वं न निवर्तते अन्यथा विवाहकाले स कथं सङ्कल्पपूर्वकं ददाति। कथं वा वरस्य दुष्टत्वेन अन्यस्मै ददाति। दातुः स्वत्वसत्वे एव वरस्य सत्त्वोत्पत्त्या कन्याया गौणपतिपत्नीत्वसिद्धिः। तथा व्यामुष्यायणस्थले जनकस्य स्वत्वसत्वेऽपि प्रतिग्रहीतुः स्वत्वोत्पत्त्या गौणपुत्रत्वसिद्धिः।

वस्तुतश्चन्द्रिकाकाराद्युक्तो जलाशयोत्सर्गदृष्टान्तोऽत्र साधीयान् ननु अपुत्राणां भ्रातॄणां मध्ये एकस्य दत्तकादिप्रतिनिधिपुत्रग्रहणे अपरेषामपि पुत्रिता स्यादित्यत आह पुत्रपदस्येति औरसे औरस एव औरसत्वमेव पुत्राणां पुत्रपदवाच्यत्वमेव औरसानां तेन च औरसमात्रस्य पुत्रपदवाच्यत्वेन च भ्रातृकृतपुत्रप्रतिनिधीनां भ्रातृ-कृतप्रतिनिधिपुत्राणमित्यर्थः। परिग्रहाभावः दत्तकविधया अपरभ्रातृकर्तृकपरिग्रहा-भाव इत्यर्थः। सत्ताप्रतिपादनात् विद्यमानत्वप्रतिपादनात् तेन च भूतपुत्रत्वभविष्य-त्पुत्रत्वव्यावर्तनेन च अतीतेन मृतेन अन्यस्य अपुत्रस्य। नेतिफलसम्बन्धइत्यनेना-

जातस्य पश्येच्चेज्जीवतो मुखमित्यादिफलसंम्बन्धः । न चानागतपुत्रप्रतीक्षायां पुत्रान्तरापरिग्रह इति ॥ २२ ॥

तच्छब्देनापुत्राणामेव भ्रातॄणां परामर्शाज्जनकस्य स्वपुत्रसम्बन्धाभावव्यावर्तनाय सर्व इति। त इत्यत्र स च तौ च ते चेत्येकशेषादेवैकस्य द्वयोर्बहूनां वा पुत्रेच्छया तत्र पुत्रीकरणं भवति। तेनेति। येन जनकस्य पुत्रवत्त्वं तेनैव सर्वेषामपोति। पुत्रेणेत्येकत्वनिर्देशादेकस्याप्यनेकपुत्रत्वाभिधानेन 'न त्वेवैकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा' इत्येतन्निषेधस्यात्रानवकाश इत्युक्तमेव।

---

न्वयः अनागतपुत्रप्रतीक्षायां भविष्यत्पुत्रप्रतीक्षायां पुत्रान्तरापरिग्रह इति भ्रातृपुत्रस्य अतिप्रशस्तत्वेन भविष्यत्भ्रातृपुत्रप्रतीक्षा न कर्तव्येति भावः ॥ २२ ॥

तच्छब्देनेति सर्वनामोत्तरवर्ति ते इति तच्छब्देनेत्यर्थः। [1]अपुत्राणामेवेति परामर्शादिति तथा च एकश्चेत् पुत्रवान् भवेदित्यनेन जनकस्य पुत्रवत्तासिद्धेः। सर्वे ते पुत्रिणा इत्यत्रानुवादादेव जनकातिरिक्तैकजातानामेव प्रकृतवाचिना सर्वशब्देन बोधनादिति भावः। येनेति पुत्रेणेति शेषः। एकस्येति पुत्रस्येतिशेषः।

---

१. मञ्जरीव्याख्या—स हि संतानाय—'बृहत्पाराशरः—

अपुत्रस्य पितृव्यस्य तत्पुत्रो भ्रातृजो भवेत्।
स एव तस्य कुर्वीत श्राद्धपिण्डोदकक्रियाः॥
बह्वीनामेकपत्नीनामेष एव विधिः स्मृतः।
एका चेत्पुत्रिणी तासां सर्वासां पिण्डदस्तु सः॥ (बृ० पा०)
सर्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत्।
सर्वास्तास्तेन पुत्रेण पुत्रिण्यो मनुरब्रवीत्॥

(मनुस्मृतिः ९।१८३)

तत्र च—पुत्रान्द्वादश यानाह नृणां स्वायंभुवो मनुः। तेषां षड् बन्धुदायादाः षड्दायादबान्धवाः (म० स्मृ० ९।१५८) इत्युक्तद्वादश संख्याविरोधात्।

पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा।
तत्सुता गोत्रजा बन्धुशिष्यसब्रह्मचारिणः॥

(या० स्मृ० २।१३५)

तथा च कालिकापुराणे वेतालभैरवयोः शंकरात्मजयोरेकेन पुत्रेणोभयोः पुत्रवत्त्वलिङ्गं दृश्यते। ऋषयः ऊचुः—

अपुत्रस्य गतिर्नास्ति श्रूयते लोकवेदयोः।
वेतालभैरवौ यातौ पुरा वै तपसे गिरिम्॥
पूर्वं त्वकृतदारौ तौ तयोः पुत्रा न च श्रुताः।
तेषां तु सम्यगिच्छामः श्रोतुं संस्थानमुत्तमम्॥

मार्कण्डेय उवाच—

अपुत्रस्य गतिर्नास्ति प्रेत्य चेह च सत्तमाः।
स्वपुत्रैर्भ्रातृपुत्रैश्च पुत्रवन्तौ हि स्वर्गताः॥
सम्यक्सिद्धिमवाप्येह यदा वेतालभैरवौ।
हरस्य मन्दिरं यातौ कैलासं प्रति हर्षितौ॥
तदा हरस्य वचनान्नन्दी तौ रहसि द्विजाः।
प्राहेदं वचनं तथ्यं सान्त्वयन्निव बोधकृत॥

नन्द्युवाच— अपुत्रौ पुत्रजनने भवन्तौ शंकरात्मजौ।
यतेतां जातपुत्रस्य सर्वत्र सुलभा गतिः॥

मार्कण्डेय उवाच—

तस्येदं वचनं श्रुत्वा नन्दिनः प्रीतमानसौ।
एकमेव करिष्यावो नन्दिनं चेत्यभाषताम्॥
ततः कदाचिदुर्वश्यां भैरवो मैथुनं गतः।
तस्यां स जनयामास सुवेशं नाम पुत्रकम्॥
तमेव चक्रे तनयं वेतालोऽपि स्वकं सुतम्।
ततस्तौ तेन पुत्रेण स्वर्ग्यां गतिमवापतुः॥२३॥ इति।

---

अनेक पुत्रत्वाभिधानेन अनेकेषां अतिदिष्टपुत्रत्वविधानेन एकस्य द्वयोः पुत्रत्वे प्रमाणं दर्शयति तथा चेतिभ्रातृपुत्रैश्च यथाविधिगृहीतभ्रातृपुत्रैश्चेत्यर्थः। यतेतामित्यस्य पुत्रजनने इत्यनेनान्वयः॥ २३॥

नन्विदमेकस्यानेकपुत्रत्वं किं युगपदुत्पत्स्यतेऽथवा क्रमेण। नाऽऽद्यः। युगपत्प्रतिगृह्णीयुरिति विध्यभावात्। नापरः। पूर्वसंस्कारावरुद्धे तत्सजातीयसंस्कारान्तरानुत्पत्तेरिति चेन्न।

सप्तदशावराश्चतुर्विंशतिपरमाः सत्रमासीरन्निति वत् तत्सर्वशब्दयोर्द्वन्द्वैकशेषेण प्रतिगृहीतृभ्रातृसाहित्यस्यात्र विवक्षितत्वात्। तेन दानमपि सहितेभ्य एव सिध्यति। यथा तुलापुरुषे सहितानामेव ऋत्विजां संप्रदानत्वं प्रतिग्रहीतृत्वं चेति। तदाहुः—

'इत्यावाह्य सुरान्दद्यादृत्विग्भ्यो हेमभूषणम्'

इत्यत्र ऋत्विग्भ्य इति बहुवचनान्मिलितानामेव संप्रदानत्वम्। तेन च सर्वेषामुपरि गुरुहस्तं कृत्वा तदधः क्रमेण ऋग्वेद्यादीनामृत्विजां हस्तानाधाय

---

ननु सर्वे ते तेन पुत्रेण पुत्रिण इत्यनेन एकस्यानेकपुत्रत्वाभिधानात् परिग्रहेणैव पुत्रत्वं नान्यथा इति सिद्धान्ताच्च। कथमेकस्यानेकपुत्रत्वमित्याशङ्क्यते। नन्वित्यादि-युगपदुत्पत्स्यते युगपत् सर्वेषां परिग्रहादिति शेषः। विध्यभावादिति इदमुपलक्षणम् एकजातानामित्युपक्रम्य सर्वे इति श्रुतेः। पुत्रजन्मानन्तरं जातानां भ्रातॄणां युगपत्परिग्रहबाधादित्यपि बोध्यम्।

द्वितीयकल्पं दूषयति नापर इति पूर्वसंस्कारावरुद्धे पूर्वग्रहीत्रा कृतसंस्कारे सति इत्यर्थः। तत् सजातीयसंस्कारानुपपत्तेरिति संस्काराणां सकृत्करणोक्तेः सकृत्कृते कृतः शास्त्रार्थ इति न्यायाच्च इति शेषः। ननु संस्काराभावेऽपि प्रत्येककृतपरिग्रहादेव कथं न एकस्य बहुपुत्रत्वसिद्धिरिति चेदयमाशयः। दत्तकस्य यथाविधिपरिग्रहानन्तरं परिग्रहीतृकृतसंस्कारादेव पुत्रत्वसिद्धिर्नान्यथा। अतएव वक्ष्यति तस्माद्दत्तकादिषु संस्कारनिमित्तमेव पुत्रत्वमिति सिद्धम्। तथा च यत्र बहवः भ्रातरः सन्ति तत्र प्रत्येकग्रहणावश्यकत्वात् क्रमिकग्रहणस्थले प्रथमग्रहीत्रा कृतसंस्कारे दत्तके संस्कारस्य सकृत्करणोपदेशादेव द्वितीयग्रहीतुस्तत्संस्काराप्रसक्तेः न च एकैकेन भ्रात्रा एकैकसंस्कारकरणे नानुपपत्तिरिति वाच्यं अकृतचूडस्य ग्रहणविधानात् षष्ठसंख्यभ्रात्रादिस्थले अनुपपत्तेर्वज्रलेपत्वात् पुत्रत्वासिद्धिरितिभावः। युगपद्दानपरिग्रहयोः सम्भवमभिप्रेत्य दृष्टान्तयति सप्तदशवरा इति अवरा निकृष्टकल्पः। परमा उत्कृष्टकल्पः।

भूषणानि देयानीति वाचस्पतिमिश्राः । न च युगपदनेकपुत्रत्वानुपपत्तिरपि । युगपत्प्रतिग्रहेण द्रौपदीभार्यात्ववदस्य विलक्षणस्यैवानेकपुत्रत्वस्य प्रसिद्धद्व्या-मुष्यायणत्ववत्स्वीकारात् ॥२४॥

पुत्रिण इत्यत्र पुत्रोऽस्तीत्येषामिति भवनार्थकेनास्तिना पुत्रभवनप्रति-पादनात् अभावितस्य च भावनायोगात् प्रतिग्रहीतृव्यापार आक्षिप्यते । तथा चात्रिः—

---

इतिवत् यथा सप्तदशानामृत्विजां मिलितानामेवाधिकारः तद्वदित्यर्थः । तत् सर्व-शब्दयोरिति सर्वे ते इति तच्छब्दसर्वशब्दयोरित्यर्थः । द्वन्द्वैकशेषेण स तौ ते इति ते सर्वः सर्वौ सर्वे इति सर्वे सिद्धिमिति शेषः । प्रतिग्रहीतृ साहित्यस्येति साहित्ये द्विवचनबहुवचने द्वन्द्वसमासो वेति कात्यायनसूत्रादिति शेषः । युगपदनेकेभ्यो दाने दृष्टान्तं दर्शयति तुलापुरुष इत्यादि तत्र प्रमाणं दर्शयति इत्यावाह्य इत्यादि । स्वमत-पोषकतया वाचस्पतिमिश्रव्याख्यानमुद्धरति तेन चेति गुरुहस्तं गुरोः प्रधानस्य हस्तं कृत्वा स्थापयित्वा । न चेति अनुपपत्तिरित्यनेनान्वयः । द्रौपदीभार्यात्ववदिति इदन्तु न युगपदंशे दृष्टान्तितम् । परन्तु विलक्षणानेकपुत्रत्वांशे महाभारतीयविवाह-पर्वणि क्रमेणैव युधिष्ठिरादीनां द्रौपदीपाणिग्रहणश्रुतेः । यथा—

अहञ्चाप्यनिविष्टो वै भीमसेनश्च पार्थिव ।
पार्थेन विजिता चैषा रत्नभूता सुता तव ॥२५॥
सर्वेषां धर्मतः कृष्णा महिषी नो भविष्यति ।
आनुपूर्व्येण सर्वेषां गृह्णातु ज्वलने करान् ॥२६॥

आनुपूर्व्येण क्रमेण । अत्रानिर्विष्ट इत्यनेन ज्येष्ठे निर्विष्टे कनीयान् निर्वि-शन् इति वचनबोधितोऽर्जुनस्याग्रेविवाहे युगपद्विवाहे वा परिवेदनदोषो भविष्यतीति ज्ञापितम् । अतएव रघुनन्दनः अनिर्विष्टे अकृतविवाहे अकृताग्निहोत्रे च । निष्ठा-निर्देशात् एकदापि ज्येष्ठकनिष्ठाभ्यां विवाहो न कर्तव्य इत्याह । सिद्धद्व्यामुष्याय-णत्ववदिति पुत्ररहितेन पुरुषेण परक्षेत्रोत्पादितक्षेत्रजपुत्रत्ववदित्यर्थः । तथा च—

अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः ।
तदपत्यं द्वयोरेव बीजिक्षेत्रिकयोर्मतम् ॥२४॥ इति ।

भवनार्थकेन विद्यमानार्थकेन भवनार्थकप्रतिपादनात् विद्यमानपुत्रत्वप्रतिपाद-

'अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिः सदा' । इति

वसिष्ठोऽपि पुत्रं प्रतिग्रहीष्यन्बन्धूनाहूय राजनि चाऽऽवेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वाऽदूरबान्धवं बन्धुसंनिकृष्टमेव प्रतिगृह्णीयादिति ।

शौनकोऽपि—

'दातुः समक्षं गत्वा तु पुत्रं देहीति याचयेत्' । इति

याचयेदिति प्रयोजकणिजन्तेन याचनार्थं वृतब्राह्मणद्वारा याचयेदिति । एतेनाकृतस्यैव भ्रातृपुत्रस्य पितृव्यपुत्रत्वम् ।

अपुत्रस्य पितृव्यस्य तत्पुत्रो भ्रातृजो भवेत्
स एव तस्य कुर्वीत श्राद्धपिण्डोदकक्रियाम् । इति

बृहत्पराशरस्मरणादिति चोद्यं निरस्तम् । प्रतिग्रहीतृव्यापारं विना तत्पुत्रत्वानुपपत्तेः ॥ २५ ॥

न च गूढोत्पन्नदत्तात्मनोः कर्तृव्यापाराभावः ।

गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः ।

---

नात् अभावितस्य यथाविध्यगृहीतस्य भवनायोगात् पुत्रत्वसम्बन्धायोगात् । प्रतिग्रहीतृव्यापारः परिग्रहरूपप्रतिग्रहीतृव्यापारः आक्षिप्यते अपेक्षते । अत्र प्रमाणं दर्शयति तथाचात्रिरित्यादि अत्र प्रतिनिधिः कर्तव्य इत्युपदेशात् कृतिजन्यपरिग्रहरूपोः व्यापारः प्रतीयते । ननु अपुत्रेण प्रतिनिधिपुत्रः कर्तव्य इति सामान्यविधेः भ्रातृपुत्रातिरिक्तविषयत्वेन चरितार्थत्वसम्भवात् कथं भातृपुत्रस्य यथाविधिग्रहणे अत्रिवचनं प्रमाणमित्यत आह वसिष्ठोऽपीति अत्र व्याहृतिहोमपूर्वकादूरबान्धवपरिग्रहोक्तेः अदूरश्चासौ बान्धवश्चेति विग्रहवाक्येन निकटसपिण्डतया भ्रातृपुत्रोऽपि लभ्यत इति भावः । एतेन वसिष्ठाद्युक्तविधिना परिगृहीतस्यैव भ्रातृपुत्रस्य प्रतिनिधिपुत्रत्वं न त्वगृहीतस्येति व्याख्यानेन । पुत्रत्वानुपपत्तेरिति बृहत्पराशरेण प्रतिनिधिपुत्रत्वसिद्धिमनभिधाय श्राद्धपिण्डोदकक्रियाकर्तृत्वमात्रोक्तेः सामान्यविधेर्बाधायोगात् न परिग्रहविधिं विना पुत्रत्वसिद्धिरिति भावः ॥२५॥

ननु परिग्रहीतुर्व्यापारं विना पुत्रत्वासिद्धिरित्युक्तं तच्च न सर्वत्र घटते नियोगादिरूपाङ्गीभूतव्यापारं विनापि, गूढजपुत्रत्वसिद्धिरिव स्वयंदत्तपुत्रस्यापि देयस्य

दत्तात्मा तु स्वयं दत्तः ॥

इति कर्तृव्यापाराश्रवणादिति वाच्यम्। तत्रापि फलस्य क्रियासामानाधिकरण्यान्यथानुपपत्त्या तत्कल्पनात्। तस्माच्छ्रूयमाणं भ्रातृणामेकजातानामिति, अपुत्रस्य पितृव्यस्येति च न यथाश्रुतमेवार्थवत्। त्रयोदशपुत्रापत्तेः। न चेष्टापत्तिः।

पुत्रान्द्वादश यानाह नृणां स्वायंभुवो मनुः।
तेषां षड् बन्धुदायादाः षडदायादबान्धवाः ॥

इति द्वादश संख्याविरोधात्। नन्वस्त्येव संख्याविरोधः।

औरसः पुत्रिका बीजक्षेत्रजौ पुत्रिकासुतः।
पौनर्भवश्च कानीनः सहोढो गूढसम्भवः ॥
दत्तः क्रीतः स्वयंदत्तः कृत्रिमश्चापविद्धकः।
यत्र क्वचोत्पादितश्च पुत्रास्तु दश पञ्च च ॥

इत्यादिस्मृत्यन्तरस्मरणात्।

---

स्वस्य परीग्रहीतुरुद्योगं विनापि स्वयं दातृत्वेनाङ्गीभूतस्य याञ्चादेर्बाधात् साङ्गस्य परिग्रहरूपव्यापारस्य विरहेणापि पुत्रत्वसिद्धिर्दृश्यते इत्याशङ्क्यते न चेति। कर्तृव्यापाराभावः साङ्ग कर्तृव्यापाराभावः गूढजस्तु सुत इति। प्रतिग्रहीतृव्यापारं विना तत्पुत्रत्वानुपपत्तेरिति प्रस्तुत्य लिखितस्य गूढजस्तु इत्यादेः। प्रतिग्रहीतृव्यापाराप्रसक्तेर्दृष्टान्तार्थमेवोक्तिः साधीयसीति तात्पर्य्यम्। तत्रापि स्वयंदत्तपुत्रस्थलेऽपि फलस्य पुत्ररूपफलस्य क्रियासामानाधिकरण्यान्यथानुपपत्त्या इति फलस्य क्रियाजन्यत्वात् सामानाधिकरणप्रत्यासत्त्यैव जनकत्वाच्चेति भावः। तत्कल्पनात् स्वयंदत्तपुत्रस्थलेऽपि परिग्रहहोमादिविधिकल्पनात्। तस्मात् परिग्रहीतुर्व्यापारं विना पुत्रत्वासिद्धेः। यथा श्रुतमेव परिग्रहहोमादिकं विनैव एकजातानां एकतमस्य पुत्रोत्पत्त्या एकस्मिन् पुत्रे सकलभ्रातॄणां पुत्रत्वसिद्धिरूपमेव अर्थवत् यथार्थतात्पर्यकम्। प्रतिबन्धिं दर्शयति त्रयोदशपुत्रापत्तेरिति मुख्यगौणभेदेन पुत्राणां द्वादशविधत्वे भ्रातृपुत्रस्यातिरिक्तपुत्रत्वस्वीकारे तेन सह त्रयोदशपुत्रत्वापत्तेरित्यर्थः। इष्टापत्तौ मनुविरोधं

पुत्रास्त्रयोदश प्रोक्ता मनुना येऽनुपूर्वशः ।
संतानकारणं तेषामौरसः पुत्रिका तथा ॥

इति बृहस्पतिस्मरणात् ।

क्षेत्रजादीन्सुतानेतानेकादश यथोदितान् ।
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥

इति स्मरणात्

औरसक्षेत्रजौ पुत्रौ पितू रिक्थस्य भागिनौ ।
दशापरे तु क्रमशो गोत्ररिक्थांशभागिनः ॥ इति

---

दर्शयति पुत्रानित्यादि । द्वादशसंख्याविरोधादिति परिग्रहविधिं विना भ्रातृपुत्रस्य प्रतिनिधिपुत्रत्वस्वीकारे तमादाय पुत्राणां त्रयोदशत्वे च मनुक्तद्वादशसंख्याकीर्तन-विरोधादित्यर्थः । ननु अपरापरमुनिवचनेषु क्वचिद्द्वादशत्वस्य क्वचित्त्रयोदशत्वस्य क्वचिच्च पञ्चदशत्वस्य पुत्राणां दर्शनात् मनुवचने द्वादशत्वमविवक्षितमित्याशङ्का-मपनेतुं विचारमवतारयति नन्वस्तीत्यादि । समाधत्ते केषाञ्चिदित्यादि । तथा च—मनुर्वै यत्किञ्चिदवदत्तद्भेषजं भेषजातायाः इति श्रुतेः ।

"वेदार्थोपनिबन्धृत्वात् प्राधान्यं हि मनो स्मृतम् ।
मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते" ॥

इति बृहस्पत्युक्तेश्च मनोः प्रधानतया । तदुक्तसंख्याया अविवक्षायोगात् तदेक-वाक्यतया च त्रयोदशानां पञ्चदशानाञ्च द्वादशत्वं वाच्यं ततश्च बीजज इति औरसस्य प्रकारभेदः । अपकृष्ट औरस उच्यते न पृथक् । तथाहि औरसस्त्रिविधः उत्कृष्टमध्यमा-पकृष्टभेदात् । सवर्णायां संस्कृतायां स्वयमुत्पादित औरस उत्कृष्टः । स्वसंस्कृतायां स्वय-मुत्पादितो मध्यमः । परसंस्कृतायां स्वयमुत्पादितः शुल्कादिना अधमः । यथा बौधा-यनः—सवर्णायां संस्कृतायां स्वयमुत्पादितपुत्रं औरसं विद्यादिति मनुरप्येवम् । याज्ञवल्क्यः—औरसो धर्मपत्नीज इत्यादि ।

"जाता ये त्वनियुक्तायां एकेन बहुभिस्तथा ।
अरिक्थभाजस्ते सर्वे बीजिनामेव ते सुता ॥
दद्युस्ते बीजिने पिण्डं माता चेत् शुल्कतो हृता ।
अशुल्कतो हृतायान्तु पिण्डदा वोढुरेव ते" ॥

मनुस्मरणाच्चेति चेत् । सत्यम् । केषांचित्क्वचिदन्तर्भावात् क्वचिद्बहिर्भावाच्च तत्तत्संख्योपपत्तेर्न द्वादशसंख्याविरोध इति स्थितम् । किंचापुत्रदायाधिकारे–

पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा । तत्सुताः ।

इति पञ्चमस्थानस्थितिविरोधश्च । अयमभिसंधिः । भ्रातृव्यस्याकृत-

---

अतएव रघुनन्दनः कलौ क्षेत्रजादिकरणनिषेधात् सच पुत्रो बीजिनामेव इदानीं व्यवहारोऽपि तथा । पुत्रिकाया पुत्रस्य तु निरपेक्षश्राद्धकर्तृत्वेन पुत्रधर्मातिदेशार्थं पुत्रिकासुत इत्युक्तम् अतएव जीमूतवाहनः । यत्तु वसिष्ठवचनम्—

"अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम् ।
अस्यां यो जायते पुत्रः समे पुत्रो भवेदिति" ॥

पुत्रिकापुत्रस्य पुत्रत्वं वदति तेन पुत्रिकायाः तत् सुतस्य पुत्रत्वं तन्मनुविरोधात् पिण्डदानमात्रयोगाद् गौणमिति गौणमतिदिष्टम् । यत्र क्वचोत्पादित इत्यादित इत्यपि औरसप्रकारभेदः । तथा च विष्णुना द्वादशविधपुत्रगणने यत्र क्वचोत्पादितस्य द्वादशत्वमुक्तं मनुना वसिष्ठेन च द्वादशविधपुत्रगणने शूद्रापुत्रस्य द्वादशत्वमुक्तम् । आभ्यामेकवाक्यतया यत्र क्वचोत्पादितपदेन शूद्रापुत्र उच्यते । शूद्रापुत्रस्तु—

यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत् सुतम् ।

इत्यादिना मनुना दर्शितः । अतो न द्वादशत्वव्याघात इत्यावेदयति न द्वादशसंख्याविरोध इति स्थितम् । औरसादिलक्षणमाह याज्ञवल्क्यः—

औरसो धर्मपत्नीजः तत्समः पुत्रिका सुतः ।
क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ॥
गृहे प्रच्छन्न उत्पन्नः गूढजस्तु सुतः स्मृतः ।
कानीनः कन्यकाजातो मातामहसुतः स्मृतः ।
अक्षतायां क्षतायां वा जातः पौनर्भवस्तथा[1] ॥

---

१. मंजरीव्याख्या—

"या पत्या वा परित्यक्ता विधवा वा स्वयेच्छया ।
उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते ॥"

वाग्दानसंस्कारोत्तरमेव यस्याः पतिर्मृतस्तादृश्यां प्रमीतपतिकायां पण्डस्य प्रसवविरोधीव्याधियुक्तस्य वा भार्यायां घृताभ्यक्तत्वादिधर्मेण गुरुनियुक्तायां पित्रादिभि-

स्यापि पुत्रत्वेऽपुत्रत्वाभावादपुत्रधनाधिकारे पञ्चमस्थाने भ्रातृव्यपरिगणनं विरुद्धम् । एवम्—

पुत्रः पौत्रः प्रपौत्रश्च तद्वद्वा भ्रातृसंततिः ।
सपिण्डसंततिर्वाऽपि क्रियार्हा नृप जायते ॥

इत्यादि पिण्डाधिकारे ज्ञेयम् ॥२६॥

नन्विदमप्रयोजकं यत्पिण्डरिक्थाभावादपुत्रत्वमिति ।

---

दद्यान्मातापिता वा यं सुपुत्रो दत्तको भवेत् ।
क्रीतस्तु ताभ्यां विक्रीतः कृत्रिमः स्यात् स्वयं कृतः ॥
दत्तात्मा तु स्वयंदत्तः गर्भे भिन्नः सहोढजः ।
उत्सृष्टो गृह्यते यस्तु सोपविद्धो भवेत् सुतः ॥

ननुः दत्तकादिवत् भातृपुत्रस्य प्रतिनिधिपुत्रत्वे यथा दत्तकादीनाम् औरसेन सह तृतीयांशिता तथैव भ्रातृपुत्राणां स्यात् कथं भ्रातुरभावे भ्रातृपुत्रस्याधिकार उक्त इति याज्ञवल्क्यविरोधरूपप्रतिबन्धिं दर्शयति किञ्चेति । विरुद्धमिति न च भ्रातृपुत्रस्य प्रतिनिधिपुत्रत्वेऽपि वाचनिकोऽयम् अधिकारक्रमः कथं विरोध इति वाच्यम् । भ्रातृपुत्रस्य मुख्यत्वेऽपि औरससत्वे अधिकाराभावः अमुख्यस्यान्यस्य तृतीयांशिता इति न्यायविरोधेन विषमशिष्टापत्तेः । एवमिति विरुद्धमित्यर्थः । अस्य पिण्डाधिकारे इत्यनेन सम्बन्धः । तथा च पुत्र इत्यनेन मुख्यगौणसाधारण्यतया भ्रातृपुत्रस्यापि लाभे तद्वद् वा भ्रातृसन्ततिरित्युक्तिविरोध इति भावः ॥ २६ ॥

---

नियुक्तेनैव देवरेण ज्येष्ठेन कनिष्ठेन तस्यासंभवे सपिण्डेन तस्याप्यसंभवे सगोत्रेण तस्याप्यसंभव इतरेण द्विजेन वोत्पादितः प्रमीतादेः क्षेत्रजो पुत्रो द्वितीयः । प्रथममेकस्य जाया भूत्वाऽपरस्य पुनर्या जाया भवति सा पुनर्भूः । तदुक्तम्—

'कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता ।
पुनर्भूः प्रथमा प्रोक्ता पुनः संस्कारकर्मणा ॥'

सा कन्या केवलवाग्दानसंस्कारसंस्कृता चेत्तादृशकन्यापरिणेतुः सकनीनः पुत्रः । सर्वथा संस्काररहिता चेत्स कानीनः पुत्रो मातामहसुतो बोध्य इति । पत्न्यामन्येन प्रच्छन्नोऽनियोगेऽपि चौर्यरताहितगर्भमूलक उत्पन्नः पुत्रो गूढजः । सहोढः—सह भार्यया य उत्पद्यते, या गर्भिणी परिणीयते तस्याः स गर्भ इति यावदिति ।

अप्रशस्तास्तु कानीनगूढोत्पन्नसहोढजाः ।
पौनर्भवश्च नैवैते पिण्डरिक्थांशभागिनः ॥

इति विष्णुना कानीनादीनां पुत्रत्वेऽपि पिण्डरिक्थाभावदर्शनात् । तथा पिण्डरिक्थाभावेऽप्यकृतस्यैव भ्रातृव्यस्यास्तु पुत्रत्वं का क्षतिरिति चेत् । मैवम् । पिण्डदोंऽशहरश्चैषामित्यनेन पिण्डरिक्थभागित्वं हि पुत्रत्वस्य प्रयोजकमुक्तम् । तदभावे क्लीबादेरिव पुत्रत्वस्वरूपसत्तामात्रस्याप्रयोजकत्वात् ।

अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिः सदा ।

इति विधिप्रत्ययश्रवणेनाकृतस्य पुत्रत्वायोगाच्च । न च भ्रातृव्येतरविषयोऽयं विधिरिति वाच्यम् । संकोचे प्रमाणाभावात् । प्रत्युतैकमेव करिष्याव इत्युपक्रम्य—

तमेव चक्रे तनयं वेतालोऽपि स्वकं सुतम् ।

इति वेतालीयभैरवपुत्रपुत्रीकरणलिङ्गविरोधाच्च । किं च यत्र दशानां

---

अधुना प्रतिबन्धिं समुद्धरति नन्वित्यादि इदं पिण्डदातृत्वरिक्थग्राहित्वम् अप्रयोजकं न पुत्रत्वप्रयोजकम् । अप्रयोजकत्वे व्यभिचारं दर्शयति अप्रशस्ता इत्यादि । पिण्डरिक्थाभावदर्शनादिति प्रतिपादनादित्यर्थः । तथा च यदि पिण्डदातृत्वं रिक्थग्राहित्वञ्चैव पुत्रत्वप्रयोजकं तदा कथं कानीनादीनां पिण्डरिक्थाभावे पुत्रत्वं सिद्ध्यति इति भावः । दूषयति मैवमिति । पिण्डरिक्थभागित्वं पिण्डदातृत्वं रिक्थग्राहित्वञ्चेत्यर्थः तदभावे पिण्डरिक्थाभावे । संकोचे प्रमाणाभावादिति अपुत्रेणैव कर्तव्य इति सामान्यप्रवृत्तविधेर्भ्रातृपुत्रेतरत्वेन सङ्कोचे प्रमाणाभावादित्यर्थः । ननु अपुत्रेणेति विशेषणात् भ्रातृपुत्रस्य पुत्रत्वादेव अपुत्रत्वनिरासे कथं सामान्यविधिसङ्कोच इत्यत आह प्रत्युत इत्यादि । वैतालीयभैरवपुत्रकरणलिङ्गविरोधात् भैरवजातपुत्रस्य वेतालेन यत् पुत्रीकरणं तद्विरोधात् । तथा च—

तमेव चक्रे तनयं वेतालोऽपि स्वकं सुतम् ।

इत्यत्र स्वकं सुतं चक्रे इत्यन्वयात् न जातमात्रेण पुत्रत्वसिद्धिरितिभावः । ननु देवानां देवकल्पानायां वा आचरणम् न प्रमाणम् । अतएवोक्तं न देवचरितम् चरेदिति । अथवा मुख्यौरसपुत्र एव तथा नियमः मुख्यपुत्रस्तु सवर्णायां संस्कृतायां परिणेत्रा उत्पादितः ।

सोदराणां मध्ये पञ्च प्रत्येकं दश पुत्राः पञ्च चात्यन्तमपुत्रास्तत्र पञ्चानामप्यपुत्राणां प्रत्येकं पञ्चाशत्पुत्रत्वापत्तिः पञ्चाशतश्च पुत्राणां प्रत्येकं दशपितृकतापत्तिरित्याद्यनेकोपप्लवः ॥२७॥

न चेष्टापत्तिः पुत्रप्रतिनिधिः कार्य इत्युपादेयगतैकत्वविवक्षणात् । एकश्चेत्पुत्रवान् भवेत् , सर्वे ते तेन पुत्रेणेत्यत्र पुत्रपुत्रवतोरुभयोरपि प्रत्येकं श्रुतैकत्वविरोधाच्च ।

न च—

स्वपुत्रैर्भ्रातृपुत्रैश्च पुत्रवन्तो हि स्वर्गताः ।

इत्यत्र भ्रातृपुत्राणां बहुत्वश्रवणाद्बहवोऽपि भ्रातृपुत्रा अकृता एवैकस्य पुत्रा भवेयुरिति वाच्यम् । तस्य लोकसिद्धबहुत्वानुवादकार्थवादगतत्वेनाविवक्षितत्वात् । अस्मत्पक्षे त्वेकेनैव प्रकृतनित्यविधिसिद्धावनेकोपादानस्य वैयर्थ्यादशास्त्रीयत्वाच्च । तस्मात्संनिहितसगोत्रसपिण्डेषु भ्रातृपुत्र एव

---

इह तु उर्वश्याम् स्वयमसंस्कृतायां भैरवेण जनितस्य तथा त्वाभावात् पुत्रीकरणलिङ्गं न प्रमाणम् । इत्यत आह किञ्चेति पञ्च पञ्च भ्रातर इति शेषः । प्रत्येकं दशपुत्रा इति दशास्यां पुत्रान् आधेहि इति श्रुत्यानुसारेण सिद्धवन्निर्देशः कृत इति तात्पर्यम । अनेकविप्लवो व्यवहारविरोध इत्यर्थः ॥ २७ ॥

न चेष्टापत्तिरिति पञ्चाशत् पुत्रत्वापत्तौ दशपितृकतापत्तौ चेति शेषः । इत्युपादेयगतैकत्वविवक्षणादिति । तथा च पुत्रः कार्यः इत्येकत्वश्रुतेः विधेयगततया विवक्षार्हत्वाच्च इष्टापत्तौ तद्विरोध इति भावः । ननु अपुत्रेणैव इति वचनं सामान्यमुखप्रवृत्ततया भ्रातृपुत्रातिरिक्तविषयकं वाच्यमित्यत आह—एकश्चेत् पुत्रवान् भवेदिति पुत्रपुत्रवतोरिति तेन पुत्रेणेत्यनेन पुत्रस्यैकत्वश्रुतिः एकश्चेत् पुत्रवान् भवेदित्यनेन पुत्रवत एकत्वश्रुतिः । तथाच विधानं विना सर्वेषां पुत्रत्वसिद्धौ एकश्चेदित्यादिकमवाच्यं भवेदिति भावः । तस्य बहुत्वस्य लौकिकसिद्धबहुत्वानुवादकार्थवादगतत्वेनाविवक्षितत्वादिति । लोकव्यवहारसिद्धबहुत्वस्य अनुवादको योऽर्थवादस्तद्गतत्वेनैव अविवक्षोचित्यात् लोकव्यवहारस्तु एकपुत्रः अपुत्र इत्यादि । एकेनैवेति पुत्रेणेति शेषः ।

पुत्रीकार्य इति स्थितम् । ततश्च कृतत्वेन प्रथमं धनपिण्डभागित्वमकृतत्वेन च स्वस्वस्थान इति । विष्णुवचनं तु पूर्वपूर्वपरिगणितपुत्रसद्भावविषयमिति न क्वापि विरोधः ।

नन्वेवं—

सर्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत् ।
सर्वास्तास्तेन पुत्रेण पुत्रिण्यो मनुरब्रवीत् ॥

इत्यत्राप्यकृतस्य पुत्रत्वं न स्यात् । न चेष्टापत्तिः । आचारविरोधात् । पितृपत्न्यः सर्वा मातर इति पितृपत्नीत्वमात्रनिमित्तकमातृत्वव्यपदेशविरोधाच्चेति चेत् । नैवम् । सपत्नीपुत्रस्य [1]साक्षाद्भर्त्रवयवारब्धतयाऽकृतस्यापि

प्रकृतनित्यविधौ अपत्यमुत्पादयेदित्यादिनित्यविधिसिद्धौ अशास्त्रीयत्वाच्च एकेनैव पुत्रेण अपत्यमुत्पादयेदिति विधिसिद्धौ तत्रापि बहुपुत्रापेक्षितत्वे तच्छास्त्रविरोधेन अशास्त्रीयत्वादित्यर्थः । उपसंहरति तस्मादिति । स्थितम् सिद्धम् । ततश्चेति यतो भ्रातृपुत्रस्यापि गृहीतस्यैव प्रतिनिधिपुत्रत्वं नान्यथा ततश्चेत्यर्थः । प्रथमं पत्न्यादेः पूर्वम् । स्वस्वस्थाने भ्रातुः परतः पत्नीदुहितरश्चेवेत्यातिवचनादिति शेषः । विष्णुवचनम्—अप्रशस्तास्तु कानीन इत्यादिवचनम् । नन्वेवमिति भ्रातृपुत्रस्यापि यथाविधिपरिगृहीतस्यैव पुत्रत्वे । पितृपत्नीत्वमात्रनिमित्तकमातृत्वव्यपदेशविरोधादिति यदि विधिपरिगृहीतस्यैव सपत्नीपुत्रस्य पुत्रत्वं तदा यया परिगृह्यते तस्याः एवपुत्रत्व सिद्धौ । मातृत्वस्य सुतरां सिद्धत्वेन सर्वाः पितृपत्न्य इत्यत्र सर्वपदवैयर्थ्यापातात् सर्वासां पितृपत्नीत्वेनैव मातृत्वव्यपदेशसद्भावोचित्यादिति भावः । कृतस्यैव पुत्रत्वं नाकृतस्येति पक्षं दूषयति नैवमिति । साक्षाद्भर्त्रवयवारब्धतया इति पुत्रत्वसम्भवादिति । तथा च स्त्रियाः पुत्रग्रहणनिषेधात् भर्त्रनुमत्यैव परं ग्रहणाधिकाराच्च सपत्न्यां भर्त्रा पुत्रे उत्पादिते अनुमतिप्रयोजनविरहेण अनुमत्यसम्भवे ग्रहणाधिकाराप्रसक्तेः । सुतरामेवाकृतस्य पुत्रत्वसिद्धिरिति भावः । वचनन्तु सर्वासां एकपत्नीनामितिवचनन्तु

१. मंजरीव्याख्या—साक्षाद्भर्त्रवयवेति—'आत्मा वै पुत्रनामाऽसि' इति, 'एतत् षाट् कौशिकं शरीरं त्रीणि पितृतस्त्रीणि मातृतोऽस्थिस्नायुमज्जा नस्त्वङ्मांसरुधिराणि' इति गर्भोपनिषदि श्रुतेश्च सपत्नीपुत्रशरीरस्य स्वभर्त्रवयवैर्निष्पन्नत्वेन यथा युक्तिसिद्धं

पुत्रत्वसंभवात् । वचनं तु नियमार्थमित्युक्तमेव । भ्रातृव्ये तु दम्पत्योरन्यतरस्याप्यवयवसंबन्धाभावान्नाकृतस्य पुत्रत्वमिति ॥२८॥

यत्तु बृहस्पतिना—

यद्येकजाता बहवो भ्रातरस्तु सहोदराः ।
एकस्यापि सुते जाते सर्वे ते पुत्रिणः स्मृताः ॥
बह्वीनामेकपत्नीनामेष एव विधिः स्मृतः ।
एका चेत्पुत्रीणी तासां सर्वासां पिण्डदस्तु सः ॥

इति भ्रातृव्यधर्मातिदेशः सापत्नेऽभिहितः सोऽपि प्रतिनिधित्वाभिप्रायेण न पुत्रीकरणाभिप्रायेण । भर्त्रवयवारब्धत्वेन पुत्रत्वस्य सिद्धत्वात् । विकला-

---

नियमार्थम् अकृतस्य सपत्नीपुत्रस्य गौणपुत्रत्वसिद्धौ । अन्यपुत्रग्रहणनिषेधज्ञापनार्थम् । एतेन यद्यज्ञातगर्भायां कस्याञ्चित् पत्न्यां स्थितायाम् अन्यस्यै अनुमतिं दत्वा भर्ता म्रियेत तदा अनुमतिसत्वेऽपि पत्न्यन्तरेण पुत्रान्तरं न ग्राह्यमिति सिद्धम् । भ्रातृव्ये भ्रातृपुत्रे ॥ २८ ॥

ननु यद्यकृतस्य सपत्नीपुत्रस्य प्रतिनिधिपुत्रत्वसिद्धिः स्यात् तदा एष एव विधिः स्मृत इत्यनेन भ्रातृपुत्रधर्मातिदेशो विफल इत्याशङ्कामपनेतुमुत्पादयति यस्त्विति य इत्यस्य भ्रातृव्यधर्मातिदेश इत्यनेन सम्बन्धः । सोऽपि भ्रातृव्यधर्मातिदेशोऽपि । प्रतिनिधित्वाभिप्रायेणेति, तथा च यथा भ्रातृव्यपुत्रसत्त्वे तत् ग्रहणसम्भवे अन्यपुत्रग्रहणं निषिध्यते तथा सपत्नीपुत्रसत्त्वे पुत्रान्तरग्रहणं निषिध्यते, एतदेव अतिदेशफलं न तु पुत्रीकरणम् । पुत्रीकरणाभावे हेतुं दर्शयति, भर्त्रवयवारब्धत्वेनेति सिद्धत्वादिति । तथाच सिद्धस्य कृतिसाध्यत्वाभावेन करणाधीनत्वाभावादितिभावः ।

---

स्वस्वभर्तृनिरूपितं पुत्रत्वं तथैव स्वभर्तृपत्न्यन्तरनिरूपितमपि पुत्रत्वं सपत्नीपुत्रे युक्तिसिद्धमित्यर्थः । अत्रोदाहाणम्—यथा कस्यचिदेकस्य पुरुषस्य द्वे भार्ये आस्ताम् । ते च भाय परस्परं सपत्न्यौ । तयोरेका सर्वथा संतानरहिता । अपरा तु ससंताना । पुत्रवतीत्यर्थः । अत्र स्वपदेन ससंताना सपत्नी गृह्यते । तथा च स्वभर्त्रवयवारब्धत्वेन हेतुना यथा सपुत्रे स्वनिरूपितं पुत्रत्वं भवति तथा तेनैव हेतुना स्वपुत्रे सपत्न्यन्तरनिरूपितमपि पुत्रत्वं युक्तिसिद्धं भवतीत्याशयः ।

वयवारब्धत्वेन प्रतिनिधित्वेऽपि सिद्धे वचनं नियमार्थमित्युक्तमेव। तदेतत्स्पष्टीकृतं देवस्वामिना—'उभयत्रापि नान्यः प्रतिनिधिः कार्यः' इत्यनेन ग्रन्थेन। विवृतं चैतच्चन्द्रिकायाम्—'उभयत्रापि यद्येकजाता इत्येवं वचनद्वयेऽपि भ्रातृसुते सपत्नीसुते सपत्नीसुते च पुत्रप्रतिनिधितया कथंचित्संभवत्यन्यो न प्रतिनिधिः कार्य इति। विज्ञानेश्वरोऽपि मानवं वचो व्याचष्टे—भ्रातृपुत्रस्य पुत्रीकरणसम्भवेऽन्येषां पुत्रीकरणनिषेधार्थं न पुनः पुत्रत्वप्रतिपादनाय। तत्सुतो गोत्रजो बन्धुरित्यनेन विरोधादिति (या० स्मृ० २।१३२ मिताक्षरा)।

भ्रातृव्याभावेऽन्योऽप्युक्तरीत्या प्रत्यासन्नः। तथा च शौनकः—

क्षत्रियाणां स्वजातौ वै गुरुगोत्रसमेऽपि वा।
वैश्यानां वैश्यजातेषु शूद्राणां शूद्रजातिषु॥
सर्वेषां चैव वर्णानां जातिष्वेव न चान्यतः।
दौहित्रो भागिनेयश्च शूद्रैस्तु क्रियते सुतः॥
ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित्। इति।

स्वजातौ क्षत्रियजातौ। जातिसामान्योपादानेऽपि प्रत्यासत्तिः पूर्ववदत्रापि नियामिका। अदूरबान्धवमित्यादिवसिष्ठस्मरणात्। सपिण्डाभावे

---

विकलावयवारब्धत्वेनेति अविकलोभयावयवारब्धत्वाभावेन स्वान्यस्वभर्तृपत्नीशरीरारब्धतया मुख्यपुत्रत्वाभावेन इति यावत् तदेतदिति। भ्रातृव्यस्य ग्रहणसम्भवे सपत्नीपुत्रस्य सद्भावे च अन्यस्याग्राह्यत्वमित्यर्थः। अतिप्रामाणिकत्वेन स्वमतपोषकतया च मिताक्षराक्तन्मतं दर्शयति विज्ञानेश्वरोपीति। तत्सुतः भ्रातृसुतः विरोधादिति भातृसुतस्य भ्रातृभ्यः। परतोऽधिकारात् दत्तकस्य सर्वप्रथमाधिकारात् दत्तके विद्यमाने भ्रातृसुतस्यानधिकाराच्च विरोधोऽव्यक्त एवेति हृदयम्। भ्रातृपुत्रस्याभावे अन्यस्य ग्राह्यतां स्पष्टमवगम्यते। प्रत्यासत्तिर्नैकट्यसम्बन्धः। अदूरबान्धवम् अदूरश्चासौ बान्धवश्चेति विग्रहात् प्रत्यासत्तिक्रमोऽव्यक्त एव। क्षत्रियाणां मूर्द्धावसिक्तभिन्नानामित्यादि। प्रातिस्विकगोत्राभावादिति तथा च स्मृतिः—

गुरुगोत्रसमेऽपि वा। क्षत्रियाणां प्रातिस्विकगोत्राभावाद् गुरुनिर्देशः। अतएव व्यवधानात्सपिण्डाभावे सगोत्रविधानम्। तत्रापि स्वजातावित्येव।

सर्वेषामपि वर्णानां जातिष्वेव न चान्यतः।

इति वाक्यशेषात्। तेन च भिन्नजातीयसपिण्डसगोत्रव्यावृत्तिः। वैश्यजा तेषु–वैश्यजातिष्वित्यर्थः। जातिर्जातं तु सामान्यमिति त्रिकाण्डी-स्मरणात्। अत्रापि सामान्योपादानेऽपि प्रत्यासत्तिः पूर्ववन्नियामिका। गुरु-गोत्रसमेऽपि वेत्यत्रापि प्रवर्तते। पौरोहित्यान् राजन्यविशामितिस्मरणात्। स्वगोत्रे संस्कृता ये स्युरित्यस्य त्रैवर्णिकसाधारण्याच्च। स पिण्डाभावे गुरुगोत्रसम इत्यत्रापि तुल्यं प्रत्यासत्तेर्नियामकत्वात्। शूद्रजातिष्विति। अत्रापि प्रत्यासत्तिः पूर्ववदेव। गुरुगोत्राश्रवणाच्च गुरुगोत्रसमेऽपि वेत्य-स्यात्राप्रवृत्तिः। तेन शूद्रजातिमात्र इति सिद्ध्यति ॥२९॥

---

जमदग्निर्भरद्वाजोविश्वामित्रोऽत्रिगौतमाः।
वशिष्ठकाश्यपागस्त्या मुनयो गोत्रकारिणः॥
एतेषां यान्यपत्यानि तानि गोत्राणि मन्वते।

गोत्राणि तत्तन्नामकगोत्रभागीनि इति स्मार्ताः।

अत्रापत्यरूपगोत्राभिधानात् ब्राह्मणव्यतिरिक्तानां प्रतिस्विकगोत्राभावः प्रतीयते। गुरुगोत्रसमे इति गुरूणां पुरोहितानां यद्गोत्रं तेन समे तत्तुल्यगोत्रभागीत्यर्थः। तथा चाश्वलायनगृह्यसूत्रं यजमानस्यार्षेयान् गोत्रप्रवरान् प्रवृणीतेत्युक्त्वा पौरोहित्यान् राजन्यविशां प्रवृणीत इति। अत्रापि शूद्रेऽपि प्रत्यासत्तिः सपिण्डप्रत्यासत्तिः। गुरुगोत्राश्रवणादिति पौरोहित्यान् राजन्यविशामिति आश्वलायनसूत्रे क्षत्रियवैश्यमात्रो-पादानात् शूद्रस्य गुरुगोत्रनियमो नास्तीति ग्रन्थकर्त्तुरभिप्रायः। वस्तुतः—

शूद्राणां मासिकं कार्यं वपनं न्यायवर्तिनाम्।
वैश्यवच्छौचकल्पश्च द्विजोच्छिष्टन्तु भोजनम्॥

इति मनुवचने चकारेण वैश्यधर्मातिदेशात् गुरुगोत्रप्राप्तौ न्यायवर्तिनां शूद्राणामपि गुरुगौत्रनियमोऽस्तीति युक्तमुत्पश्यामः॥ २९॥

तदाह ब्रह्मपुराणम्—

शूद्राणां दासवृत्तीनां परपिण्डोपजीविनाम् ।
परायत्तशरीराणां न क्वचित्पुत्र इत्यपि ॥
तस्माद्दासस्य दास्याश्च जायते दास एव हि ॥ इति ।

त्रैवर्णिकानां त्रैवर्णिकानुलोमजानां चोत्कृष्टत्वात्प्रतिलोमजानां चापकृष्टत्वान्न क्वचित्पुत्रः कर्तुं शक्य इति शूद्र एव पुत्रीकार्यो दासदास्युत्पन्नत्वादिति ।

ननु क्षत्रियादिवाक्यत्रयं नाऽऽरम्भणीयम् । न्यायसाम्येन पूर्ववाक्यादेव तदर्थसिद्धेः । आरम्भेऽपि वा सर्वेषामेव वर्णानामित्यनेन पौनरुक्त्याच्चेति

---

तदाह शूद्राणां शूद्रजातिमात्रमाह । दासवृत्तीनामिति शूद्राणां विशेषणं दासवृत्तित्वं विभजति परपिण्डोपजीविनां परपिण्डेन परान्नेन जीविनां भक्तदासानामिति यावत् । परायात्तशरीराणां पराधीनानां क्रीतदासानामिति यावत् । क्वचित् उत्कृष्टजातौ अपकृष्टजातौ च । दासस्य शूद्रस्य दास्याश्च शूद्रायाश्च दासः शूद्रः तथा च शूद्राणां स्वजातौ पुत्रकरणं सिद्धमिति भावः ।

त्रवणिकानां ब्राह्मणक्षत्रियवैश्यरूपवर्णत्रयेण सवर्णसंस्कृतायां स्वयमुत्पादितानां ब्राह्मणादिपुत्राणामिति यावत् । त्रैवर्णानुलोमजातानाञ्च ब्राह्मणादिभिः क्षत्रियादिषु स्त्रीषु अनुलोमक्रमेण जातानां मूर्द्धावसिक्तादीनाम् । उत्कृष्टत्वादिति तथा च उत्कृष्टजातीयासु नियोगनिषेधेन पुत्रीकरणं न सम्भवतीति भावः । प्रतिलोमजानां सूतमागधायोगवादीनाम् अपकृष्टत्वात् अत्यन्तापकृष्टत्वेनास्पृश्यत्वादित्यर्थः । शूद्र एव पुत्रीकार्य इति । यद्यपि जातिष्वेव न चान्यत इत्यादिवचनात् सर्वेषामेव वर्णानां सजातावेव पुत्रीकरणं लभ्यते । शूद्राणान्तु विशेषनियमो विफलस्तथापि ब्राह्मणादीनां नामसंकीर्तनाय अन्यजातीयदत्तकसम्भवात् शूद्राणां तन्नास्तीति ज्ञापनाय विशेषनियमो दर्शित इति तत्त्वम् । दासदास्युत्पन्नत्वादिति अत्रायम्भावः—"दासः शूद्रस्य वैभवेदिति" यमवचनात् 'शूद्रादासान्तकाः स्मृता' इति स्मार्त्तधृतवचनाच्च । शूद्रस्य दासान्तनामपुंयोगाच्जातेश्चेति ईट् प्रत्ययेन तत्पत्न्या दास्यन्तनाम तथा च दासान्तनामत्वेन दास्यन्तनामत्वेन च सर्वेषां शूद्राणां दासान्तता सर्वासां शूद्रपत्नीनां दास्यन्तता च तेन च येन केनचिच्छूद्रेण यस्य कस्यचिच्छूद्रस्य पुत्रग्रहणे दत्तकत्वं सिध्यतीति ग्रन्थकृदभि-

चेत्। मैवम्। क्षत्रियादिपदैः क्षत्रियादिसमानधर्मकमूर्धावसिक्तादीनामपि प्राप्त्यर्थत्वात्। ब्राह्मणेन क्षत्रियायामुत्पादितः क्षत्रिय एव भवति। क्षत्रियेण वैश्यायां वैश्य एव वैश्येन शूद्रायां शूद्र एवेति शङ्खस्मरणात्। स्वजाताविति क्षत्रियादिसमानधर्मत्वेऽपि मूर्धावसिक्तादीनां क्षत्रियादिपुत्रत्वाभाव-बोधनाय। तिस्रो वर्णानुपूर्व्येणेत्यानुपूर्व्यलिङ्गात्। न च सर्वेषामित्यनेन पौनरुक्त्यम्।

---

मतम्। वस्तुतस्तु यद्यपि शूद्रत्वेन सर्वेषां तुल्यता तथापि कायस्थ-गोप-नापित-कर्मकार-कुम्भकारादीनां सम्प्रदायभेददर्शनात् लोकव्यवहाराच्च तत्तत्सम्प्रदायपारतन्त्र्यं दत्तक-विधेरिति समीचीनम्। क्षत्रियादिवाक्यत्रयं क्षत्रियाणां सजातौ वै इत्यादिवाक्यत्रयं नारम्भणीयम् अवाच्यं भवेत्। न्यायसाम्येन पूर्ववाक्यादेवेति न्यायो युक्तिः सा च प्रयोजनसापेक्षा प्रयोजनञ्चात्र पिण्डोदकादिदानं तच्चासवर्णे असम्भवि। पूर्ववाक्यं शौनकीयपूर्ववचनं ब्राह्मणानां सपिण्डेषु कर्तव्यः। पुत्रसंग्रहस्तदभावेऽसपिण्डे वा अन्यत्र तु न कारयेदिति।

यद्यप्यत्र ब्राह्मणानामिति श्रुतेस्तद्विषयकं भवितुमर्हति। तथापि यथा असवर्ण-पिण्डोदकदानादिनिषेधात् तन्न्यायमूलकः पूर्ववचनस्थोऽन्यत्र तु न कारयेदिति निषेधः आक्षिप्यते तथा तथा तन्न्यायसाम्यादितरविषयेऽपि कल्प्यते। ननु यथा वचनं हि वाचनिकमिति न्यायात् कथं न्यायसाम्यादन्यत्र कल्पनमित्यत आह आरम्भेवापि। पौनरुक्त्याच्चेति क्षत्रियाणां सजातौ वै इति बहुवचनात् क्षत्रियादिसजातिप्राप्तौ सर्वे-षाञ्चैव वर्णानामित्यत्र वर्णपदेन तथैवाभिधानात् पौनरुक्तमितिभावः। पुनरुक्तिदोषं परिहरति क्षत्रियादिपदैरिति आदिशब्दात् वैश्यादिपरिग्रहः। क्षत्रिय एव भवति क्षत्रियसमानधर्मको भवति एवं वैश्यादावूहनीयम्। समानधर्मत्वेऽपि द्वादशरात्राद्य-शौचादिनेति शेषः। मूर्द्धावसिक्तादीनां आदिना अम्बष्ठादीनां परिग्रहः। ननु क्षत्रियादि-पुत्रत्वाभावे कथं क्षत्रियादिसमानधर्मत्वं तत्र प्रमाणं दर्शयति। तिस्रो वर्णानुपूर्वेणेति। तथा च तिस्रो वर्णानुपूर्वेण द्वे तथैका यथाक्रमं ब्राह्मणक्षत्रियविशां भार्या स्वा शूद्र-जन्मनः। अस्यार्थः सवर्णानुक्रमेण ब्राह्मणस्य तिस्रो वर्णा भार्या भवन्ति क्षत्रियस्य द्वेवर्णे वैश्यशूद्रयोः सवर्णैका इति। ब्राह्मणादीनां क्षत्रियादिभार्याविधानात् ब्राह्मणादिभिः क्षत्रियादिषु स्त्रीषु जातानां क्षत्रियादिपुत्रत्वाभावेऽपि पुत्रा येऽनन्तरस्त्रीजाः क्रमेणोक्ता

तस्य वर्णानामनुलोमानां च स्वजातिनियमानुवादेन प्रतिलोमानां तदभावबोधनार्थत्वात् । तदेवाऽऽह—सर्वेषामिति । वर्णपदोपादानसामर्थ्याद्वर्णानामेव स्वजातिनियमः स्यान्नानुलोमजानामिति तत्प्राप्त्यर्थं सर्वपदोपादानम् । प्राप्तिश्च वर्णसमानधर्मत्वात् । न च वर्णविशेषणं तत्, चकारानुपपत्तेः । ततश्च वर्णानामनुलोमजानां च जातिष्वेवेति नियमो नान्यतो नान्येषु प्रतिलोमेष्वित्यर्थः ॥ ३० ॥

---

द्विजन्मनां तानेवान्तरनाम्नस्तु मातृदोषात् प्रचक्षते इति मनुवचनात् । मातृदोषात् मातृजातिव्यपदेश्यानाचक्षते इति कुल्लूकभट्टः, मातृवद्वर्णशङ्करा इति वचनान्तराच्च मातृधर्मातिदेशेन क्षत्रियादिसमानधर्मकत्वममीषाम् । पौनरुक्तमिति वर्णानामिति बहुवचनेन सकलवर्णप्राप्तौ सर्वेषामिति पौनरुक्त- मितिभावः ।

तस्य सर्वशब्दस्य अनुलोमानां मूर्द्धावसिक्तादीनां सजातिनियमानुवादेन पिण्डदानाद्युपकारकत्वेन न्यायत एव सजातिप्राप्तौ जातिष्वेव इत्यभिधानस्यानुवादत्वमिपि भावः । वर्णानामेव वर्णा ब्राह्मणादयश्चत्वारः । तथा च मनुः—

ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः ।
चतुर्थ एकजातिस्तु शूद्रो नास्ति तु पञ्चमः ॥

वर्णविशेषणं तदिति सर्वेषामिति न वर्णानां विशोषणमित्यर्थः । चकारानुपपत्तेः सर्वेषाञ्चैव इति चकारवैयर्थ्यापत्तेरित्यर्थः । उपसंहरति ततश्चेति नात्यत इत्यस्य विवरणं नान्येष्वित्यादि प्रतिलोमेष्विति तेषां जघन्यजातित्वेन संस्कारहीनतया च सर्वेषां तुल्यता इति ग्रन्थकर्तुरभिप्रायः । अतएव मनुटीकायां कुल्लूकभट्टः प्रतिलोमास्तु धर्महीना इति गौतमेन संस्कारनिषेधादिति । वस्तुतस्तु प्रतिलोमजानां मध्येऽपि ब्राह्मणजातत्वशूद्रजातत्वभेदेनोत्कृष्टत्वापकृष्टत्वदर्शनात् तेषां सर्वेषां सर्वपुत्रग्रहणं न युक्तम् । अपि च सर्वेषाञ्चैव वर्णानां जातिष्वेव न चान्यत इत्यत्र अन्यादिपदार्थ एव स्वार्थांशे यद्विधेयतावच्छेदकं तद्धर्मावच्छिन्नस्य यस्य कस्यचिद् भेदबोधकत्वनियमात् प्रकरणोपस्थितायां सम्प्रदायसिद्धतत्तज्जातित्वावच्छिन्नयत्किञ्चिद्व्यक्तावेव प्रतियोगित्वकल्पनं न्याय्यं नत्वनुपस्थितप्रतिलोमजजातिमात्रे । न च जातिष्वेव इत्येवकारेणान्ययोगव्यवच्छेदबोधनात् न चान्यत इत्यस्य वैयर्थ्यादेव तथा कल्पनमिति वाच्यं तन्मात्रकल्पनेऽपि विनिगमनाविरहात् सम्भेदेनान्यतरवैयर्थमिति न्यायेनावैयर्थ्याच्च ॥ ३० ॥

नन्विदं पूर्ववाक्यप्राप्तप्रत्यासत्त्यपवादतयैव कुतो नेष्यते। अदूरबान्धवमिति वसिष्ठवाक्यविरोधादिति चेन्न। तस्य ब्राह्मणवाक्यैकवाक्यतयोपसंहारादिति चेत्। मैवम्। अपवादे लौकिकवैदिकप्रत्यासत्तिनियामकवृद्धव्यवहाररूपन्यायविरोधात्।

प्रयोजनाभावादतिप्रसङ्गात् अनेनैव प्रत्यासत्तिसामान्यापवादे दौहित्रो

---

नन्विदमिति पूर्ववाक्यादिति पूर्ववाक्यं ब्राह्मणानां सपिण्डेषु इत्यादि वचनं तेन प्राप्तप्रत्यासत्तिः सपिण्डादिक्रमः तदपवादकतया तत् सांदृष्टिकन्यायप्राप्तसपिण्डादिक्रमबाधकतया तथा च सजाताविति विशेषविधिमहिम्ना क्षत्रियादिषु न सपिण्डादिभेदेन प्रशस्तत्वाप्रशस्तत्वकल्पनमितिभावः। अदूरबान्धवमिति। तथा च वसिष्ठवचने ब्राह्मणादि पदाश्रवणात् समान्यविधितया क्षत्रियादिसाधारण्येन सपिण्डादिक्रमप्राप्तेः क्षत्रियादिषु सजातिमात्रविधाने सङ्कोचरूपविरोधादित्यर्थः। तस्य वसिष्ठवचनस्य ब्राह्मणवाक्यैकवाक्यतया प्राथम्यात् सम्भवत्येकवाक्यत्वे वाक्यभेदो न चेष्यते इति न्यायाच्च ब्राह्मणानां सपिण्डेषु इत्यादिवाक्यैकवाक्यस्वीकारेण। उपसंहारात् वशिष्ठवचनस्य ब्राह्मणमात्रपर्यावसानादित्यर्थः। अपवादलौकिकवैदिकेत्यादि। प्रत्यासत्यपवादकतयेत्युपक्रम्य लिखितेन अपवादलौकिकेत्यादिवाक्येन एषोऽर्थः द्योत्यते। अपवादेन सह लौकिकादिवाक्यस्य सप्तमीतत्पुरुषसमासः। तथा च अपवादे अपवादस्वीकारे लौकिकीन्यायप्राप्ता वैदिकी वाचनिकी या प्रत्यासत्तिः सपिण्डादिक्रमप्राप्तिः तस्या नियामकः व्यवस्थापकः वृद्धव्यवहाररूपः न्याय एव तद्विरोधादित्यर्थः। अत्र तु पूर्ववचनात् सांदृष्टिकन्यायप्राप्ता वसिष्ठवचनप्राप्ता च क्षत्रियादीनां सपिण्डक्रमप्रत्यासत्तिर्वृद्धव्यवहारानुगतैव क्षत्रियाणामित्यादिवाक्यस्य तदपवादकत्वे तद्विरोधापत्तेरिति तात्पर्यमवधेयम्। प्रयोजनाभावादतिप्रसङ्गादिति प्रयोजनञ्चात्र वृद्धव्यवहाररूपन्याय एव अतएव महानिर्वाणतन्त्रं बलवानलौकिको वेदाल्लोकाचारन्तु कस्त्यजेत् तथा च विनिगमकान्तराभावे वृद्धव्यवहार एव विनिगमक इति नियमः अत्र तु तद्रूपप्रयोजनविरहेणापवादस्वीकारे अतिप्रसङ्गादित्यर्थः। अत्र क्रमोपन्यस्तं हेतुत्रयं सापेक्षं चकारविरहेऽपि न क्षतिकरमिति विवेच्यम्। प्रतिबन्ध्यन्तरमाह—अनेनैवेत्यादि प्रत्यासत्तिसामान्यापवादे अपवादकत्वमङ्गीकृत्य क्षत्रियाणां सजातौ वै इति वचनेन सपिण्डादिक्रमप्रत्यासत्त्यपवादकत्वस्वीकारे। दौहित्रो भागिनियेश्चेत्यादि अस्य वचनस्य अप-

भागिनेयश्चेति प्रत्यासत्तिविशेषापवादासंगतेश्च। तस्माद्यथोक्तव्याख्यैव प्रयोजनवतीति ॥ ३१ ॥

प्रत्यासत्ति सामान्यात् प्राप्तयोर्दौहित्रभागिनेययोस्त्रैवर्णिकेष्वपवादमाह– दौहित्र इति। तुशब्दस्य चावधारणार्थतया शूद्रैरेवेति नियमात् त्रैवर्णिक-व्यावृत्तिः, तत्र हेतुमाह–ब्राह्मणादित्रय इति। क्वचिदपि शास्त्रे भागिनेयस्य

---

वादकत्वे प्राङ्निषेधस्यानुपस्थितेः दौहित्रो भागिनेयश्च इत्यनेन शूद्रविषयत्वेन विशेषा-पवादासंगतेरित्यर्थः। तस्मात् निरुक्तदोषात् यथोक्तव्याख्यैव क्षत्रियादिसाधारणेन सपिण्डप्रत्यासत्तिपरत्वव्याख्यैवेत्यर्थः ॥ ३१ ॥

प्रत्यासत्ति [1]सामान्यात् अवयवान्वयरूपसापिण्ड्यसम्बन्धसाधारण्यादित्यर्थः। त्रैवर्णिकेषु यदपवादकत्वमुक्तं तदेव व्यवस्थापयति तु शब्दस्येत्यादि शूद्रैस्तु क्रियते सुत इत्यत्र निर्दिष्टतुशब्दस्येत्यर्थः। अवधारणार्थकतया अवधारणार्थकत्वेनान्ययोगव्यव-च्छेदकतया नियमादिति शूद्रैरेव नान्यैरित्यन्ययोगव्यवच्छेदकनियमादित्यर्थः। अवि-वक्षितमिति दौहित्राद्युपलक्षकमित्यर्थः हेतौ ब्राह्मणादित्रये नास्तीत्यादि हेतुताबोधक-वाक्ये। व्यर्थविशेषणतापत्तेर्निषेधप्रतियोगितया भागिनेयविशेषणस्याव्यावर्त्तकतया वैयर्थापत्तेः। तथाच शूद्रैरेव नान्यैरित्यन्ययोगव्यवच्छेदकनियमेन त्रैवर्णिकविषयतया

---

१. मञ्जरीव्याख्या—'दौहित्रो भागिनेयश्च' इत्यस्य प्रत्यासत्ति विशेषापवाद-त्वासंगतेरितियोजना। सापिण्ड्यादिप्रत्यासत्तेरपवादभूतो यो जातिमात्रप्रत्यासत्ति-रूपो विशेषस्तन्निरूपितापवादकत्वासंगतेश्चापि वैपरीत्येनापवाद्यापवादकत्वकल्पनमनु-चितमित्यर्थः।

'ब्राह्मणानां सपिण्डेषु अदूरबान्धवम्'

इत्यादि वचनाभ्यां पुत्रीकरणसाधनत्वेनोक्तायाः सापिण्ड्यादिप्रत्यासत्तेः परिच्छेदकत्वेन जातिप्रत्यासत्तिरादृता। यदि चानिष्टपुत्रसंग्रहव्यवच्छित्त्यै केवलजाति-प्रत्यासत्तिराश्रीयेत तदा स्वजातावेव भिन्नगोत्रीयस्य भिन्नशाखिनो भिन्नावान्तरजाती-यस्यापि पुत्रत्वेन ग्रहणं प्रसज्यते। यथा कौंकणस्थेन कौशिकगोत्रीयेण बह्वृचेन देशस्थस्यात्रिगोत्रोद्भवस्य वाजसनेयिनोऽपि पुत्रत्वेन ग्रहणं क्रियते। अतो जातिप्रत्या-सत्तावपि सापिण्ड्यादि प्रत्यासत्तिरादरणीयैव। ततश्च निरुक्ते उभे अपि प्रत्यासत्ती परस्परसहकारेण पुत्रप्रतिनिधिनिर्वर्तयतो नापवाद्यापवादकभावेनेति स्पष्टमेवावगम्यते।

त्रैवर्णिकसुतत्वादर्शनाच्छूद्रविषयत्वमेवेति समुदायार्थः। भागिनेय इत्य-विवक्षितम्। हेतौ व्यर्थविशेषणतापत्तेः। विवक्षायां भागासिद्धेश्च। दौहित्र-भागिनेयौ शूद्रविषयौ शास्त्रान्तरे त्रैवर्णिकविषयत्वाभावात्। यथा सुरापाना-दाविति प्रयोगात्। तेनोभयोस्त्रैवर्णिकविषयत्वासिद्धिः ॥३२॥

अथेदं वाक्यद्वयं शब्दविधयैव स्वस्वविषये प्रमाणं नानुमानविधया। तेन भागिनेयमात्रस्यैव त्रैवर्णिकविषयत्वाभावो न दौहित्रस्येति वाच्यम्। तदपि

---

दौहित्रभागिनेययोर्निषेधसिद्धेरितिभावः। भागासिद्धेश्चेति आंशिकस्वरूपासिद्धेश्चे-त्यर्थः। स्वरूपसिद्धिस्तु हेत्वभाववत् पक्षत्वम। तथा च भागिनेयमात्रस्य त्रैवर्णिकग्रहण-निषेधविषयत्वे तत्र निषेधभावेन दौहित्रस्य त्रैवर्णिकग्रहणविषयत्वे सिद्धे ब्राह्मणादित्रये नास्तीति वाक्यप्राप्तभागिनेयमात्रनिषेधरूपहेतोः दौहित्रभागिनेयौ शूद्रविषयौ नान्य-विषयौ इत्यन्ययोगव्यवच्छेदकनियमप्राप्तदौहित्रभागिनेयोभयांभावरूपसाध्यवति। त्रैवर्णिके पक्षे दौहित्रनिषेधरूपहेतोरगमनेन आंशिकस्वरूपासिद्धेरितिभावः। शास्त्रा-न्तरे स्पष्टनिषेधदर्शनात् दौहित्रभागिनेययोः शूद्रमात्रविषयत्वं साधयति। दौहित्रभागि-नेयाविति शूद्रविषयौ शूद्रमात्रविषयौ नान्यविषयावित्यर्थः। शास्त्रान्तरे दौहित्रं भागिने-यञ्च मातृस्वसृसुतं विना इति वक्ष्यमाणशाकलवचने त्रैवर्णिककर्तृकग्रहणविषयत्वा-भावात् दौहित्रभागिनेययोरिति शेषः।

अत्र दृष्टान्तं दर्शयति यथा—सुरापानादौ सुरापानादिनिषेधो। यथा त्रैवर्णिक-मात्रविषयो नान्यविषयः। तथा अत्रापि यथा मनुः—

सुरा वै मलमूत्राणां पाप्मा च मलमुच्यते।
तस्मात् ब्राह्मणराजन्यो वैश्यश्च न सुरां पिबेत्॥ इति।

एतेन दोषाश्रितं कर्मद्विजातीनामेव निषिद्धमितिसिद्धम्। शूद्रस्य निकृष्टजाति-त्वेन सगोत्रपरिणयनवत् विरुद्धसम्बन्धग्रहणं न दोषावहमिति तात्पर्यं तेन निरुक्तदोषेण उभयोः दौहित्रभागिनेययोः॥ ३२॥

विचारमवतारयति। अथेतिवाक्यद्वयमिति 'दौहित्रो भागिनेयश्च शूद्रैस्तु क्रियते सुत' इत्येकं वाक्यं ब्राह्मणादित्रये नास्तीत्यपरं वाक्यं शब्दविधया स्वार्थद्वारा स्वस्व-विषये इति वचनबलात् दौहित्रभागिनेययोः शूद्रविषयेऽभ्यनुज्ञानं भागिनेयमात्र-निषेधस्य ब्राह्मणादित्रयविषये। नानुमानविधया इति अनुमानविधा च दौहित्रभागिनेयौ

न। वाक्यभेदापत्तेः। दौहित्रस्य त्रैवर्णिकेषु विकल्पापत्तेश्च। अदूरबान्धवत्वेन प्राप्तत्वाच्छूद्राणामेवेति नियमेन निषिद्धत्वात् ॥ ३३ ॥

यद्वा शूद्राणामेवेति नियमेन दौहित्रस्य त्रैवर्णिकेषु निषेधः सिध्यति। त्रैवर्णिकानां भागिनेय एव न भवतीति नियमेन दौहित्रस्य प्राप्तिश्च सिध्यतीति विकल्पः। किंच शब्दविधया प्रामाण्ये पूर्ववाक्ये किं नियमः परिसंख्या वा स्यात्। कथं नियमः। कथं च परिसंख्या। दौहित्रभागिनेयावेव शूद्राणामिति नियमः। पक्षे दौहित्रादेः पक्षे च भ्रातृव्यादेः प्राप्तत्वात्।

---

शूद्रमात्रविषयौ न तु ब्राह्मणादि वर्णत्रयविषयौ अतिशयविरुद्धसम्बन्धदौहित्रमपहाय न्यूनविरुद्धसम्बन्धभागिनेयमात्रनिषेधानौचित्याददण्डापूपायितदौहित्रस्याप्यावश्यकत्वादित्यनुमानविधा। निषेधयति नेति वाक्यभेदापत्तेरिति शूद्राणां भागिनेयस्य विहितत्वात् ब्राह्मणादित्रयाणां निषिद्धत्वाच्च एकवाक्यत्वासम्भवेन शूद्रो भागिनेयसहितं गृह्णीयात् ब्राह्मणादयः भागिनेयातिरिक्तं गृह्णीयुरिति वाक्यद्वयापत्तेरित्यर्थः। विकल्पापत्तेश्चेति अदूरबान्धवमिति वशिष्ठवचने त्रैवर्णिकविषये दौहित्रस्य पुत्रीकरणं विहितं शूद्रैरेव क्रियते। नान्यैरित्यन्ययोगनियमेन निषिद्धञ्च तथा च दौहित्रं गृह्णीयात् न गृह्णीयादिति विधिनिषेधयोः पक्षतो बाधेन विकल्पापत्तेश्चेत्यर्थः। एतदेव दर्शितम् अदूरबान्धवत्वेनेत्यादिना ॥ ३३ ॥

ननु अदूरबान्धव इत्यनेन सामान्यतः प्राप्तस्य दौहित्रादेः शूद्रैरेव नियमविधिस्वरसलभ्यनिषेधेन पर्य्युदाससम्भवात् ब्राह्मणादिभिर्दौहित्रभागिनेयातिरिक्तः पुत्रः कार्य इति। विधिसम्भवे कथं विकल्पापत्तिरित्यतः स्वयमेवान्यथा विकल्पमुपपादयति। यद्वेति नियमेन अन्ययोगव्यवच्छेदकनियमेन इत्यर्थः। भागिनेय एव न भवतीति नियमेन ब्राह्मणादित्रये नास्ति भागिनेयसुतः क्वचिदिति वचनादिति शेषः। शब्दविधया प्रामाण्ये यथाश्रुतशब्दस्यैव प्रामाण्यस्वीकारे। पूर्ववाक्ये दौहित्रो भागिनेयश्च इत्यादि प्रागुक्तशौनकवाक्ये। किं नियमः नियमविधिस्वीकारः। रागतः प्राप्तो रागाभावादप्राप्तिः तत्र प्रापको नियमः। तथा च विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति तत्र चान्यत्र च प्राप्तौ परिसंख्या तु गीयते इति। नियमाकार दर्शयति दौहित्रभागिनेयावेवेति एवकारेण भ्रातृव्यादेर्निरासः। दौहित्रादेः आदिना भागिनेयपरिग्रहः। पक्षे च रागपक्षे चेत्यर्थः प्राप्तत्वादिति तथा च अदूरबान्धवमित्यादिवशिष्ठवचनेन सामान्यतो

शूद्राणामेव दौहित्रभागिनेयाविति च परिसंख्या। दौहित्रादेश्चतुर्ष्वपि वर्णेषु युगपत्प्राप्तत्वात्।

तत्राऽऽद्ये भ्रातृव्यादिविधायकसामान्यशास्त्रस्य बाधः।

'सर्वेषामेव वर्णानां जातिष्वेव न चान्यतः'

इत्यत्र जातिपदस्य दौहित्रादिपरतया संकोचः। दौहित्रभागिनेययोरभावे पुत्रीकरणाभावप्रसङ्गश्चेति। परिसंख्यापक्षे तु शूद्राणामेवेत्यनेनैव त्रैवर्णिकेषु तन्निषेधसिद्धौ ब्राह्मणादित्रये नास्तीति पुनस्तन्निषेधकवाक्यवैयर्थ्यापत्तिरिति। तस्मादनुमानविधयैव वाक्यद्वयव्याख्या साधीयसीति। किञ्च न्यायमूलिकाया

---

विहिततया रागतः प्राप्तावपि दौहित्रभागिनेयावेवेति अन्ययोगव्यवच्छेदकनियमविधिमहिम्ना शूद्रविषये भ्रातृव्यादिव्यावृत्त्या दौहित्रभागिनेयमात्रस्य विधेयतासूचनाय हेतुनिर्देश इति भावः। परिसंख्यां दर्शयति शूद्राणामेवेति एवकारस्वरसलभ्यानां नान्येषामित्यर्थमादायैव परिसंख्यासङ्गतिः। नियमपक्षे दोषं दर्शयति। तत्राद्ये इति बाध इति। शूद्रविषये इति शेषः। तथा च विनिगमनाविरहात् एवकारस्येतरव्यावृत्तिकत्वस्वभावाच्च।

त्रिभागन्त्वर्द्धमेव वा इतिवत् स्वयोगान्ययोगव्यवच्छेदकनियमेन दौहित्रभागिनेयातिरिक्तव्यावर्त्तनात् अदूरबान्धव इति। सामान्यशास्त्रस्य बाध इतिभावः। ननु सामान्यशास्त्रस्य विशेषपरतया न्यायसिद्धत्वात् बाधः संकोचो वा न दूषणावह इत्यत आह दौहित्रभागिनेययोरभावे इति पुत्रीकरणभावप्रसङ्गाश्चेति। तथा च द्विजानामिव शूद्रस्यापि पिण्डोदकहेतोः पुत्रीकरणे नित्यविधिरस्ति। तत्र दौहित्रभागिनेयमात्रस्य ग्राह्यत्वे अप्रचुरविषयत्वात् पुत्रीकरणाभावे नित्यविधिबाधप्रसङ्गः स्यादिति भावः। एव इत्यनेन अन्ययोगव्यवच्छेदकार्थैवकारेणेत्यर्थः। तन्निषेधसिद्धौ दौहित्रभागिनेययोर्निषेधसिद्धौ तस्मात् निरुक्तदोषात्। दोषान्तरमुपन्यस्यति किञ्चेति न्यायमूलिकाया दण्डापूपन्यायमूलिकाया इत्यर्थः। अनुमानविधायाः अतिशयविरुद्धसम्बन्धकदौहित्रमपहाय न्यूनविरुद्धसम्बन्धकभागिनेयमात्रनिषेधस्य त्रैवर्णिकविषयत्वानौचित्येन दण्डापूपायितदौहित्रनिषेधस्यावश्यकत्वादित्यादिरूपाया इत्यर्थः, अपेक्ष्यत्वे पञ्चमी तामपेक्ष्येत्यर्थः, श्रुतिमूलाया श्रुतिकल्पनमूलाया इत्यर्थः। शब्दविधाया वाचनिकाया गुरुत्वादिति तथा च न्यायमूलकत्वमपेक्ष्य वाचनिकत्वस्वीकारे गौरवा-

अनुमानविधायाः श्रुतिमूलिकायाः शब्दविधायां गुरुत्वाच्च। श्रुतिकल्पने श्रुतिद्वयकल्पनाच्च न्यायमूलकत्वे च नास्तीतिवर्तमानोपदेशो लिङ्गम् ॥३४॥

यदा तु—'दौहित्रो भागिनेयो वा शूद्राणां विहितः सुतः'।

इति पाठस्तदाऽपि शूद्राणामपीति वेत्यन्वयसंशयव्युदासाय नियमपरतामेव स्पष्टीकर्तुं ब्राह्मणादित्रय इत्यस्य प्रवृत्तेरेकवाक्यतैव। नियमपरता चेत्थम्—दौहित्रभागिनेयकर्मकपुत्रीकरणभावनायामनियमेन चतुर्णामपि वर्णानां कर्तृत्वेन प्राप्तौ शूद्रनियमेन शूद्राणामेवेत्यन्वयः सिध्यति। तथा च भागिनेयपदं दौहित्रस्याप्युपलक्षणमेव।

अन्यथा दौहित्रभागिनेययोः शूद्रविषयत्वनियमा सिद्धेः। सिद्धौ वा

---

दित्यर्थः श्रुतिद्वयकल्पनाच्च विधिद्वयकल्पनाच्चेत्यर्थः। तथा च शूद्रैः दौहित्रभागिनेयौ पुत्रीकर्तव्यौ ब्राह्मणादिभिर्भागिनेयो न पुत्रो कर्त्तव्य इति।

विधिद्वयं न्यायमूलत्वे च यतो ब्राह्मणादित्रयाणां दौहित्रो भागिनेयश्च सुतो नास्ति अतो दौहित्रभागिनेयौ शूद्रैरेव कर्तव्यौ इत्येक एव विधिः तदेवोपपादयति न्यायमूलत्वे चेत्यादि नास्तीति ब्राह्मणादित्रये नास्ति इति वर्तमानोपदेशः वर्तमानविभक्तिघटितवाक्यं लिङ्गं हेतुः हेतुहेतुवन्निगदवाक्यमित्यर्थः। अतो न विधिद्वयकल्पनागौरवमिति भावः ॥ ३४ ॥

षष्ठ्यन्तपाठे तुकारविरहात् नियमपरत्वे संशये तदुच्छेदाय विशेषेण द्रढयति यदात्वित्यादि। शूद्राणामेवेति सावधारणोऽयं निर्देश इति न्यायादिति शेषः। शूद्राणामेवेति शूद्राणामपीति इत्यादि बहुवचनान्ता गणस्य संसूचका इति नियमात् बहुवचनान्तशूद्रपदात् तथा प्रतीतेरिति भावः।

नियमपरतां शूद्रमात्रपरताम्। ननु नियमः पाक्षिके सति इत्यनेन रागप्राप्तस्थल एव नियमः सिद्ध्यति। अत्र तु विरुद्धसम्बन्धत्वेन चतुर्णामपि वर्णानां दौहित्रभागिनेयनिषेधे रागतः प्रवृत्तेरभावात् कथं नियमपरता इत्यत आह—एकवाक्यतैवेत्यादि नियमपरताचेयं एकवाक्यतैव इत्यन्वयः तथा च यतः ब्राह्मणदित्रयाणामेव विरुद्धसम्बन्धत्वेन दौहित्रादेर्निषेधः। अतो दौहित्रभागिनेयौ शूद्रैरेव पुत्रीक्रियते इति नियमपरता चेयम् एकवाक्यतैव एकवाक्यतया प्रतिप्रसवपरतैवेत्यर्थः। एतदेवोपपादयति दौहित्रभागिनेयकर्मक इत्यादि तथा चायमन्वयोर्थश्च।

दौहित्रस्य त्रैवर्णिकविषये विकल्पापत्तिरित्युक्तमेव। यद्येवं तर्हि भागिनेयस्य त्रैवर्णिकविषयत्वाभाव एव दौहित्रभागिनेययोः शूद्रविषयत्वेन साध्यतामिति चेन्न। शूद्रविषयत्वादित्यनेनैव सिद्धौ दौहित्रभागिनेयपदोपादानवैयर्थ्यात्। अविवक्षायामुभयाविवक्षातो भागिनेयमात्रा विवक्षाया लघुत्वात् तस्माद्यथोक्तमेव साधीय इति॥ ३५॥

तदेतत्स्पष्टमाचष्ट शाकलः—

[1]सपिण्डापत्यकं चैव सगोत्रजमथापि वा।
अपुत्रको द्विजो यस्मात्पुत्रत्वे परिकल्पयेत्॥

---

अनियमेन सामान्यविधेर्व्यक्तिविशेषनियन्त्रिततया नियमाभावात् चतुर्णां वर्णानां कर्तृत्वेन प्राप्तौ अपुत्रतया अपुत्रेणैव कर्त्तव्य इति सामान्यतः कर्त्तत्वप्राप्तावपि शूद्रनियमेन ब्राह्मणादित्रयाणां निषिद्धत्वात् शूद्रमात्रप्रतिप्रसवेन। दौहित्रभागिनेयकर्मकपुत्रीकरणभावनायां दौहित्रं भागिनेयञ्च पुत्रीकुर्य्यादिति विधौ शूद्राणामेवान्वयः सिद्ध्यतीत्यर्थः। अन्यथा उपलक्षणत्वास्वीकारे। शूद्रविषयत्वनियमसिद्धेरिति शूद्रमात्रविषयत्वेन प्रतिप्रसवावश्यकत्वासिद्धेरित्यर्थः। तथा च ब्राह्मणादित्रये नास्ति भागिनेयसुतः क्वचिदिति भागिनेयमात्रनिषेधस्वरसात् दौहित्रस्य त्रैवर्णिकप्रतिप्रसवविषयत्वसम्भवादिति भावः। सिद्धौ वेति तथापि शूद्रविषयत्वेन तादृशनियमेन स्वीकारे इत्यर्थः उक्तमेव यद्वाकल्पे इति शेषः।

दौहित्रभागिनेयकर्मकशूद्रकर्तृकनियमेन हेतुना भागिनेयस्य त्रैवर्णिकविषयत्वाभावं साधयितुं वैपरीत्येन योजयति यद्येवमिति भागिनेयत्रैवर्णिकविषयत्वाभाववान् दौहित्रभागिनेययोः शूद्रविषयत्वेन नियमादित्यनुमानमप्रमाणयति चेन्नेति दौहित्रभागिनेयपदोपादानवैयर्थ्यादिति दौहित्रभागिनेयमुभयपदवैयर्थ्यादित्यर्थः। तथा च त्रैवर्णिकविषयत्वाभावस्य साध्यत्वे भागिनेयकर्मकशूद्रकर्तृकत्वनियमस्य सम्यक्त्वेन दौहित्रपदवैयर्थ्यादितिभावः। ननु यथा शूद्रविषयकनियमरक्षार्थं भागिनेयपदस्याविवक्षा तथा भागिनेयत्रैवर्णिकविषयत्वाभावरूपनियमरक्षार्थं दौहित्रभागिनेयोभयपदस्या विवक्षास्तु इत्यत आह अविवक्षाया इति लघुत्वादिति उभयपदाविवक्षामपेक्ष्य एकपदाविवक्षायां लघुताया आनुभविकत्वादिति भावः। यस्मात् निरुक्तदोषात् यथोक्तमेव भागिनेयपदस्याविवक्षा एव॥ ३५॥

समानगोत्रजाभावे पालयेदन्यगोत्रजम् ।
दौहित्रं भागिनेयं च मातृष्वसृसुतं विना[1] ॥ इति ।

एतेन भागिनेयपदं दौहित्रमातृष्वस्रेययोरुपलक्षणमिति स्पष्टमेव सिद्धम् । युक्तं चैतत् विरुद्धसंबन्धस्य त्रिष्वपि समानत्वादित्यलं बहुना ।

नान्यजातीयः पुत्रीकार्य इत्युक्तं तदतिक्रमे कथमित्यत आह शौनकः—

यदि स्यादन्यजातीयो गृहीतोऽपि सुतः क्वचित् ।
अंशभाजं न तं कुर्याच्छौनकस्य मतं हि तत् ॥ इति ।

---

विचार कौशलेन भागिनेयपदस्याविवक्षां साधयित्वा स्पष्टवचनेन तत् साधयति । स्पष्टमाचष्ट इति । विरुद्धसम्बन्धस्य त्रिष्वपि समानत्वादिति एतेन यद्यपि

---

१. मञ्जरीव्याख्यायां टिप्पण्यः—( १७ ) तदेतत्स्पष्टमाचष्ट शाकलः–सपिण्डापत्यकं चैव......सुतं विना । य इमे चत्वारो नियमा निर्दिष्टा स्तेषां मध्ये द्वौ नियमौ न्यायालयैरपि मान्यौ कृतौ स्तः । (१) असमानवर्णीयः पुत्रो दत्तकत्वेनाग्रहणीयः । अत्र नन्दपण्डिताः—'असमानजातीयः पुत्रो दत्तकत्वेनाग्राह्यः' इति वदन्ति । वैदिकसमाजरचना मनसि गृहीता चेद् वर्णव्यवस्थावदेव जातिव्यवस्थायां शास्त्रकारैर्दृष्टिर्दत्ता । यावती वर्णरक्षणस्याऽऽवश्यकता तावत्येव जातिरक्षणस्याप्यावश्यकता शास्त्रकाराणां भासते । अतएव ग्राह्यपुत्रस्तत्प्रतिग्राही चेति द्वावपि ब्राह्मणवर्णीयौ स्त इति कृत्वा द्राविडजातीयस्य कान्यकुब्जजातियो मैथिलजातीयो वा पुत्रो ग्राह्यो न भवेत् । द्राविडजातीयेन द्राविडजातीय एव ग्राह्यः । नैतावदेवापि तु ग्राह्यग्राहकयोः शाखोपशाखे अपि समाने एवापेक्षिते भवतः । अतएव दत्तकमीमांसाकारः स्पष्टं प्रतिपादयन्ति—सर्वेषामेव वर्णानां जातिष्वेव न चान्यतः, इति वाक्यशेषेण सपिण्डासपिण्डानां सजातीयत्वेन विशेषणादसमानजातीयाः सपिण्डा असपिण्डाश्च व्यावर्त्यन्ते । अप्रतिषिद्धमनुमतं भवतीति न्यायेनानुकल्पतया तत्प्राप्तिसम्भवात् । अर्थादियं दृष्टि र्न्यायालयानां नास्ति । तस्मात् सवर्णो दत्तकपुत्रो भिन्नावान्तरजातीयः सन्नपि स राजनियमानुसारी भवेत् । ( २ ) शूद्रं वर्जयित्वाऽन्यस्य कस्यापि तादृशी रूढ़ि र्न स्याच्चेद्दौहित्रभागिनेयमातृष्वसृसुता ग्राह्या न भवेयुः । इतरौ द्वौ नियमौ केवलं प्रशस्तिपरावित्याधुनिकराजकीयनियममतमित्युपरि कथितमेव ।

अन्या ग्रहीत्रपेक्षयोत्कृष्टाऽपकृष्टा वा जातिर्यस्येत्यसौ गृहीतो विधिनाऽपीत्यर्थः । अंशो धनस्य । अंशपदसामर्थ्यात्कृत्स्नधनव्युदासोऽर्थसिद्ध एव । असवर्णास्तु ग्रासाच्छादनभाजना इति कात्यायनस्मरणात् । पिण्डदोंऽशहरश्चैषामित्युपक्रम्य 'सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः' इति यौगीश्वरस्मरणाच्च ॥ ३६ ॥

इदानीं कीदृशः पुत्रीकार्य इत्याह शौनकः—

नैकपुत्रेण कर्तव्यं पुत्रदानं कदाचन ।
बहुपुत्रेण कर्तव्यं पुत्रदानं प्रयत्नतः ॥ इति

एक एव पुत्रो यस्येत्येकपुत्रस्तेन तत्पुत्रदानं न कार्यम् । न त्वेवैकं पुत्रं दद्यादिति वसिष्ठस्मरणात् । अत्र स्वस्वत्वानिवृत्तिपूर्वकपरस्वत्वापादनस्य

---

त्रितयमात्रं न विवक्षितं यत्र यत्र विरुद्धसम्बन्धः सम्भवति तस्य तस्य त्रैवर्णिकविषये निषेधः शूद्रविषये प्रतिप्रसवश्च दर्शितस्तथापि दौहित्रादपि गुरुतरविरुद्धसम्बन्धकस्य भ्रात्रादेः शूद्रविषयेऽपि निषेधोऽर्थात् सिद्ध्यति इति तत्त्वम् । पिण्डोदकाद्यर्थं अन्यजातीयग्रहणं निषिद्धं नामसंकीर्तनाद्यर्थन्तु कर्तुं शक्यते एवेति । भङ्ग्यन्तरेणाह यदि स्यादित्यादि उत्कृष्टा शूद्रादेर्वैश्यादिपुत्राः अपकृष्टा ब्राह्मणादेः क्षत्रियादिपुत्राः कृत्स्नधनव्युदास इति । असवर्णकर्तृकपिण्डोदकदानविषेधात् उत्कृष्टस्य अपकृष्टस्य वा उपकाराभावेन कृत्स्नधनसम्बन्धाप्रसक्तेः ग्रासाच्छादनमात्रं विदधाति ॥ ३६ ॥

केन कीदृक्कदा इत्यनेन प्रतिज्ञातत्वात् केन इत्यपेक्षितनिरूपणानन्तरं क्रमप्राप्तं कीदृशं निरुपयति, कीदृशः पुत्रीकार्य इति । ननु संख्याया अपेक्षाबुद्धिविशेषत्वेन बहुपुत्रेष्वपि अयमेकोऽयमेक एव रीत्या प्रत्येकमेकत्वमस्ति । इत्यत आह—एक एवेति एवकारेण सजातीयद्वितीयनिराकरणात् एकमात्र पुत्रविशिष्टस्यैव दाननिषेधसङ्गतिः । परप्रतिग्रहंविना इति स्वीकारस्वत्ववादिमतमङ्गीकृत्यैतदभिहितं अनुपपत्तेरिति शब्दानुपात्तत्वेऽपि अनुपपत्तिवशात् स्वीकर्तव्यमिति भावः । तं प्रतिग्रहं आक्षिपति बोधयति । तेन एक पुत्रदानप्रतिषेधेन प्रतिग्रहनिषेधोऽपि इति अर्थापत्त्या उपस्थितस्य एकपुत्रप्रतिग्रहस्यापि निषेध इत्यर्थः । अ अत्र तु न प्रतिगृह्णीयादिति वशिष्ठादिवचने साक्षान्निषेधश्रुतेः—सहि सन्तानाय इत्यनेन सन्तानविच्छित्तिजन्यप्रत्यवायप्रतीतेश्च

दानपदार्थत्वात्परस्वत्वापादनस्य च परप्रतिग्रहं विनाऽनुपपत्तेस्तमप्याक्षिपति। तेन प्रतिग्रहनिषेधोऽप्यनेनैव सिद्ध्यति।

अतएव वसिष्ठः—

न त्वेवैकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वेति।

तत्र हेतुमाह—

सहि संतानाय पूर्वेषामिति।

संतानार्थत्वाभिधानेनैकस्य दाने संतानविच्छित्तिः प्रत्यवायो बोधितः। स च दातृप्रतिग्रहीत्रोरुभयोरप्युभयशेषत्वात्।

यत्तु स्मृत्यन्तरम्—

सुतस्यापि च दाराणां वशित्वमनुशासने।
विक्रये चैव दाने च वशित्वं न सुते पितुः॥ इति।

यच्च योगीश्वरस्मरणम्—"देयं दारसुताद्दृत" इति। तदेकपुत्रविषयम्। कदाचन—आपदि।

तथा च नारदः—

निक्षेपः पुत्रदारं च सर्वस्वं चान्वये सति।
आपत्स्वपि हि कष्टासु वर्तमानेन देहिना॥
अदेयान्याहुराचार्या यच्च साधारणं धनम्। इति

इदमप्येकपुत्रविषयमेव। वसिष्ठशौनकैकवाक्यत्वात्। तर्हि केन पुत्रो

---

पर्युदासता प्रसह्यता चेति बहवः। हेत्वपेक्षितनिषेधवाक्येन प्रत्यवायप्रतीतेः प्रसह्यतामात्रमितितत्त्वम्। अनेनैवेति शौनकवचनेनैव नतु वचनान्तरसहायेनेत्यर्थः। सन्तानाय वंशाय। सच सन्तानविच्छित्तिजन्यप्रत्यवायः। उभयशेषत्वात् उभयविध्युल्लङ्घनजन्यत्वेन कल्पनात्। सामान्यप्राप्तनिषेधस्य विशेषव्यवस्थापनाय आशङ्क्यते। यत्त्विति वशित्वं कर्तृत्वम् अनुशासने अपराधानुरूपदण्डविधाने इत्यस्य पितुरित्यनुषङ्गे नान्वयः। विरोधं परिहरति तदेकपुत्रविषयमिति। तथा च शौनकवसिष्ठवचनाभ्यामेकवाक्यतया स्मृत्यन्तरोक्तस्य सामान्यनिषेधस्य एकपुत्रपरत्वेन सङ्कोच इति-

देय इत्यत आह—"बहु पुत्रेणेति"। बहवः पुत्रा यस्येति स बहुपुत्रः। नैक-पुत्रेणेति निषेधाद् द्विपुत्रस्यैव दानप्राप्तौ यद्बहुपुत्रेणेत्युच्यते तद् द्विपुत्रस्यापि तत्प्रतिषेधाय।

एक पुत्रो ह्यपुत्रो मे मतः कौरवनन्दन।
एकचक्षुर्यथाऽचक्षुर्नाशे तस्यान्ध एव हि॥

इत्यादि भीष्मं प्रति शंतनूक्तेः। बहुपुत्रेणेति पुंस्त्वश्रवणात् स्त्रियाः पुत्रदानप्रतिषेधः। अतएव वसिष्ठः—न स्त्री पुत्रं दद्यादिति नैरपेक्ष्यश्रवणात्। भर्त्रनुज्ञाने तस्या अप्यधिकारः। तथा च वसिष्ठः—

अन्यत्रानुज्ञानाद्भर्तुरिति। यत्तु दद्यान् माता पिता यं वेति, यच्च माता पिता वा दद्यातामिति मातुः पितृसमकक्षतयाऽभिधानं तदपि भर्त्रनुज्ञान-विषयमेव॥ ३७॥

न चैवं विधवाया आपद्यपि पुत्रदानं न स्यात् तस्या भर्त्रनुज्ञानासंभ-वात्परिग्रहवदिति वाच्यम्। मानवीयलिङ्गदर्शनेन तथा कल्पनात्। नैर-पेक्ष्यैकत्वश्रवणाच्च। स्त्री निरपेक्षस्यैकस्यापि भर्तुः पुत्रदानाधिकारः।

---

भावः। आपदि आपद्यपीत्यर्थः अत एव नारदेन आपत्स्वपि इत्युक्तम्। अनेकत्व-बहुत्वयोः पर्यायदर्शनात् एकभिन्नत्वं बहुत्वमित्याशङ्काभपनेतुमाह बहव इत्यादि। तत्प्रतिषेधाय द्विपुत्रस्यापि पुत्रदाननिषेधाय तदेवोपपादयति। एकपुत्रो ह्यपुत्रो मे इत्यादि। तथा च एकपुत्रस्यापुत्रत्वकथनात् द्विपुत्रकस्यापि एकपुत्रदाने एकपुत्रपर्य-वसानात् पुत्रद्वयवतोऽपि पुत्रदानप्रतिषेधः सूचितः। नैरपेक्ष्यश्रवणाच्चेति। स्त्रीमात्र-कर्तृकतया पुत्रदाननिषेधश्रवणाच्चेत्यर्थः। भर्त्रनुज्ञानविषयमेवेति एवकारेण निरपेक्ष-दानप्रतिषेधः। इदन्तु न मिताक्षरा चन्द्रिकाकारादिसम्मतं तैरपि भर्तुर्विदेशगमनादौ सधवाया अपि निरपेक्षदानकर्तृत्वं व्यवस्थापितम्॥ ३७॥

एवमिति भर्तुरनुज्ञाया अपेक्षितत्वे इत्यर्थः। मानवीयलिङ्गदर्शनेनेति, माता-पिता वा दद्यातां यमद्भिः पुत्रमापदि इत्यादि। मनुवचनस्थपृथक्विभक्त्यन्तमाता-पितृपदसमभिव्याहृतप्राकारनिर्देशेन तथा कल्पनात् विधवाया मातुरपि प्राधान्य-

दद्यान्माता पिता यं वा, माता पिता वा दद्यातामिति मातृनिरपेक्षैकपितृनिर्देशात्। बीजस्य प्राधान्यादयोनिजा अपि पुत्रा दृश्यन्त इति बौधायनीयहेतुदर्शनाच्च।

भारतेऽपि—

'माता भस्त्रा पितुः पुत्रो येन जातः स एव सः'। इति।

श्रुतिरपि—"आत्मा वै जायते पुत्र इति"। मानवे दद्यातामित्युभयकर्तृकताश्रवणाच्चोभयाधिकारो मुख्यः। अतएव वसिष्ठः—शुक्रशोणितसंभवः पुरुषो मातापितृनिमित्तकस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवत इति। बौधायनोऽपि—मातापित्रोरेव संसर्गसाम्यादिति।

अतएव माता पिता वा दद्यातामिति मनुना मातुर्भर्त्रनुज्ञानसापेक्षत्वाज्जघन्यत्वं, स्त्र्यनुज्ञाननैरपेक्ष्यात्पितुर्मध्यमत्वं, जनकतासामान्यादुभयोर्मुख्यत्वमभिप्रेत्य पूर्वपूर्वास्वरसादुत्तरोत्तरमभिहितम्। न चेदमेकमेव वाक्यं

---

कल्पनात् नैरपेक्षत्वश्रवणाच्चेति तद्वचनस्थविकल्पवाचिवाकारेण समुच्चया योगादिति शेषः। दानाधिकारः सर्वदेति शेषः बीजस्य प्राधान्यादिति।

बीजस्य चैव योन्याश्च बीजमुत्कृष्टमुच्यते।

इत्यादि मनुवचनादिति शेषः। लौकिकप्रमाणेनापि बीजस्य औत्कर्षं दर्शयति। अयोनिजा अपि दृश्यन्ते इति पुराणप्रसिद्धा अगस्त्यादय इति शेषः। महाभारतेनापदि साधयति माता भस्त्रेतिभस्त्रा अग्न्युपद्दीपकचर्मनिर्मितयन्त्रविशेषः। माता तद्वत् तचा च माता बीजपतनोपायमात्र येन हेतुना स एव पिता एव बीजरूपतया जातः। श्रुतिरपि आत्मा एव बोजरूपतया जायते। यत्तु षष्ठे मासि जीवसञ्चार इति श्रूयते। तस्येदं तात्पर्यम्। षष्ठे मासि अङ्गप्रत्यङ्गसम्पन्नत्वेन जीवस्य कार्यं श्वासादिकं जायते। कथमन्यथा शरीरोपचयः सम्भवति। दद्यातामित्युभयकर्तृकताश्रवणात् दाधातूत्तरवर्त्तिद्विवचनविभक्त्या मातापित्रो र्मिलितयोरेव दानकर्तृत्वश्रवणादित्यर्थः।

उभयाधिकारो मुख्यः मिलिताधिकारिकदानमेव मुख्यमित्यर्थः। अतएव उभयोर्मिलितयोर्दानं मुख्यम् अतएवेत्यर्थः। प्रभवतः प्रभू भवतः। संसर्गसाम्यात् जननकर्तृत्वतौल्यात्। उभयोर्दानस्य मुख्यत्वे प्राधान्यात् मनोः स्वरसं दर्शयति अत-

द्विवचनान्तैकक्रियाश्रवणादिति वाच्यम्। मध्ये विकल्पासंगतेः। तस्मादत्र वाक्यत्रयमेव।

अतएव योगीश्वरः–दद्यान्माता पिता यं वेति प्रत्येकमेकवचनान्तमेव क्रियापदमुदाजहार। तत्रापि निमित्तमाह–प्रयत्नत इति। प्रकृष्टो यत्नो-यस्मिन्कालेऽसौ प्रयत्न आपत्कालः। तेन चाऽऽपत्काल एव पुत्रदानं नान्यथेत्यर्थः।

यथाऽऽह कात्यायनः—

"आपत्काले तु कर्तव्यं दानं विक्रय एव वा।
अन्यथा न प्रवर्तेत इति शास्त्रविनिश्चयः॥ इति।

प्रक्रमात्पुत्रदाराणाम्। मनुरपि—

माता पिता वा दद्यातां यमद्भिः पुत्रमापदि। इति।

आपदि दुर्भिक्षादौ। अनापदि दाने दातुर्दोषः। अन्यथा न प्रवर्तेत इति निषेधाद्। यद्वा प्रयत्नत इति प्रतिग्रहीतुः प्रयत्नात्। आपद्यपुत्रत्व इति।

---

एवेति उभयोर्दानस्य मुख्यत्वादेवेत्यर्थः। दद्यातामिति अत्र धातुपदोत्तरवर्त्तिद्विवचनविभक्त्या मातापित्रोर्मिलितयोः कर्तृत्वं प्रतीयते। अत्र कल्पे माता पिता वेति वाकारः समुच्चये मनोरभिहितस्य उभयकर्तृकदानस्य मुख्यत्वे हेतुं दर्शयति। मात्रेनुज्ञा वेत्यादि। पूर्वपूर्वस्वरसात् जघन्यत्वमध्यमत्वापातात् उत्तरोत्तरं उत्तरात् उत्तरम् उभयकर्तृकदानरूपतृतीयकल्प इत्यर्थः। तथा चायं तात्पर्यार्थः। माता पिता वा दद्यातां यमद्भिरिति वचनेन मनुना कल्पत्रयं दर्शितं तथाहि-मातेत्येकवचननिर्देशात् विभक्तिविपारणामेनान्वये वाशब्दवचनैकवाक्यत्वात् भर्त्रनुज्ञया माता यं दद्यादित्येको विधिः अस्मिन् कल्पे अनुज्ञासापेक्षत्वात् दानस्य जघन्यत्वम्। पिता दद्यादित्यन्वये निरपेक्षत्वात् दानस्य मध्यमत्वम्। अत्र कल्पद्वये वाकारस्य विकल्पार्थः। दद्यातामिति द्विवचनस्वरसात् उभौ दद्यातामित्यन्वयो वाच्यः। अस्मिन् कल्पे शुक्रशोणितसम्भव इत्याद्यनेकवाक्यस्वरसात् दानस्य मुख्यत्वञ्च सूचितम्। अस्मिन् कल्पे वाकारस्य समुच्चयार्थः। कल्पत्रयनिरासाय पूर्वपक्षयति न चेति एकमेव वाक्यम् उभयकर्तृकं

अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिः सदा ।

इत्यत्रिस्मरणात् । व्याख्यातं चैव मेवापरार्कचन्द्रिकाभ्याम्—आपदि प्रतिग्रहीतुरपुत्रत्व इति ॥३८॥

विशेषान्तरमपि कालिकापुराणे—

दत्ताद्या अपि तनया निजगोत्रेण संस्कृताः ।
आयान्ति पुत्रतां सम्यगन्यबीजसमुद्भवाः ॥
पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते ।
आचूडान्तं न पुत्रः स पुत्रतां याति चान्यतः ॥ इति ।

---

समुच्चयरूपमेकवाक्यमित्यर्थः । मध्ये कर्त्तृपदक्रियापदयोर्मध्ये विकल्पासङ्गतेः विकल्पवाचिवाकारोपादानासङ्गतेरित्यर्थः तस्मात् कल्पत्रयमेवेति । तथा चोक्तहेतोरुपस्थितविकल्पार्थासङ्गत्या विभक्तिविपरिणामेन माता दद्यादेको विधिः पितादद्यादित्यपरो विधिः, द्विवचस्वार्थक्याय समुच्चयार्थमङ्गीकृत्य उभौ दद्यातामिति तृतीयो विधिरिति ग्रन्थकर्त्तुराशय इति हृदयम् । अतएव विधित्रयम् अतएवेत्यर्थः । प्रयत्नत इति बहुपुत्रेण कर्तव्यं पुत्रदानं प्रयत्नत इत्यत्र वचने इति शेषः । कात्यायनेन आपदि दानविधानात् अन्यत्र प्रतिषेधाच्च प्रयत्नपदस्य यथा श्रुतार्थासङ्गत्या तदेकवाक्याभिप्रायेण आपदर्थमाविष्करोति प्रकृष्टो यत्नो यस्मिन्निति बहुव्रीह्या श्रवणेन । ननु वचने दानविक्रयमात्रं श्रुतं कथं पुत्रदानं लभ्यते इत्यत आह—प्रक्रमादिति तथा च तद्वचनानुपात्तत्वेऽपि प्रकरणादेव तस्य लाभः ।

बहुव्रीहेर्जघन्यत्वात् प्रयत्नपदस्य प्रकृतार्थं व्याचष्टे प्रतिग्रहीतुः प्रयत्नादिति । अत्र प्राचीनस्वरसं दर्शयति अपरार्केत्यादि । आपदीति तथा च यद्यपि सम्बन्धिशब्दस्य स्वसम्बन्ध्युपस्थापकत्वनियमात् उपस्थितदातुरेवापल्लभ्यते तथापि प्रयत्नपदवैयर्थ्यापातात् बहुव्रीहेजघन्यत्वाच्च प्रतिग्रहीतुरपि आपद्गृह्यते इति भावः । अपुत्रत्व इति पुत्रेण लोकान् जयति इत्यादि स्मृत्या पुत्राभावे लोकाभावात् अपुत्रत्वमपि आपदित्यर्थः ॥३८॥

विशेषान्तरमपीत्यादि अभिहितमित्यध्याहारेणान्वयः । वचनोक्तास्पष्टभागान् क्रमेण धृत्वा व्याचष्टे दत्तेत्यादि । स्वसूत्रोक्तविधिना स्वगृह्योक्तविधिना इत्यर्थः । तथा च—

चूडाद्या यदि संस्कारा निजगोत्रेण वै कृताः ।
दत्ताद्यास्तनयास्ते स्युरन्यथा दासतोच्यते ॥
ऊर्ध्वं तु पञ्चमाद्वर्षान्न दत्ताद्याः सुता नृप ।
गृहीत्वा पञ्चवर्षीयं पुत्रेष्टिं प्रथमं चरेत् ॥
पौनर्भवं तु तनयं जातमात्रं समानयेत् ।
कृत्वा पौनर्भवस्तोमं जातमात्रस्य तस्य वै ॥
सर्वास्तु कुर्यात्संस्कारान्जातकर्मादिकान्नरः ।
कृते पौनर्भवस्तोमे सुतः पौनर्भवः स्मृतः ॥ इति ॥

दत्ताद्या इति । अन्यबीजसमुद्भवा अपि दत्ताद्यास्तनया निजगोत्रेण प्रतिग्रहीत्रा स्वगोत्रेण सम्यक् स्वसूत्रोक्तविधिना जातकर्मादिभिः संकृताश्चेत्तदैव प्रतिग्रहीतुः पुत्रतां प्राप्नुवन्ति नान्यथेत्यर्थः ।

---

अक्रियात्रिविधाः प्रोक्ता विद्वद्भिः कर्मकारिणाम् ।
अक्रिया च परोक्ता च तृतीया चायथाक्रिया (?)
स्वशाखाश्रयमुत्सृज्य परशाखाश्रयञ्च यः ।
कर्तुमिच्छति दुर्मेधा मोघं तत्तस्य चेष्टितम् ॥ इति ।

छान्दोग्यपरिशिष्टेन परोक्तकर्मनिषेधादिति शेषः । जातकर्मादिभिः संकृता जातकर्मप्रभृतिसंस्काराणामन्यतमेन संस्कृता इत्यर्थः । तदाह संस्कारसाध्यतामाह । अन्यशाखोद्भवः अन्या ग्रहीतृशाखाभिन्ना शाखा यस्य तस्मादुद्भवः शाखा तु आश्वलायनपारस्करगोभिलादीनामन्यतमकृतगृह्यशाखोक्तकर्म्माङ्गीभूतमन्त्रात्मकवेद-भाग । उपनायितः उपनयनसंस्कारेण संस्कृतः । पुत्रपांसला अपकृष्टा पांसलो दूषके त्रिषु इति त्रिकाण्डशेषात् । पूर्वोपक्रमादिति अव्यवहितपूर्ववर्त्तिरूपोपक्रमादित्यर्थः । अयन्तु दत्ताद्या इत्यादिपदेन कृत्रिमादीनां ग्रहणे हेतुः । तथा हि औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च इत्यादि वचनमुपक्रम्य कालिकापुराणे दत्ताद्या इति वचनारम्भात् औरसादिवचने च दत्तकानन्तरं कृत्रिमादेरुपादानाच्च पूर्वक्रमो लभ्यते । कश्चित्तु पूर्वोपक्रमादिति तथा च औरसः क्षेत्रजश्चैव इत्यादिवचनानन्तरम् । अन्य-शाखोद्भवो दत्त इति वचनस्य संहितायां वसिष्ठेन लिखित्वात् । तत् प्रकरणा-

तदाह वसिष्ठः—

अन्यशाखोद्भवो दत्तः पुत्रश्चैवोपनायितः ।
स्वगोत्रेण स्वशाखोक्तविधिना स स्वशाखभाक् ॥ इति ।

दत्ताद्या इत्याद्यपदेन कृत्रिमादीनां ग्रहणम् ।

औरसः क्षेत्रगश्चैव दत्तः कृत्रिम एव च ।
गूढोत्पन्नोऽपविद्धश्च भागार्हास्तनया इमे ॥
कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा ।
स्वयंदत्तश्च दासश्च षडिमे पुत्रपांसनाः ॥
अभावे पूर्वपूर्वेषां परान्समभिषेचयेत् ।
पौनर्भवं स्वयंदत्तं दासं राज्ये न योजयेत् ॥

इति पूर्वोपक्रमात् । योऽयं पौनर्भवादीनां राज्यनियोजनाभावः, स औरसव्यतिरिक्ताभाव एव । अभावे पूर्वपूर्वेषामित्यस्यैवानेनापवादात् । सत्यौरसे तु राज्याभावस्य ।

---

दित्यर्थः इति प्रलपति तन्न यतो वसिष्ठसंहितायाम् औरसः क्षेत्रजश्चैव इदृग्वचनं नास्ति, प्रत्युत विरुद्धवचनमपि दृश्यते । यथा स्वयमुत्पादितः स्वक्षेत्रे संस्कृतायां प्रथमः तदलभिनियुक्तायां द्वितीयः क्षेत्रजः तृतीयः पुत्रिका पौनर्भवश्चतुर्थः कालीनः पञ्चमः गूढोत्पन्नः षष्ठः एते दायादबान्धवा इत्यादि ।

अथादायादास्तत्र महोढ़ः प्रथमः दत्तकः द्वितीयः क्रीतस्तृतीयः स्वयमुपागतश्चतुर्थः अपविद्धः पञ्चमः शूद्रापुत्र एव षष्ठो भवतीत्याहुरेते अदायबान्धवा इत्यादि । अतएव उद्वाहतत्वे रघुनन्दनेन कालिकापुराणम्—"औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव चे"त्यादिकमभिधाय, पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते इत्यादि लिखितम् । स राज्यनियोगनिषेधः औरसव्यतिरिक्ताभाव एव औरसव्यतिरिक्तानां क्षेत्रजादीनामभाव एव न तु औरसाभावमात्रे क्षेत्रजादिसत्वे एतेन पौनर्भवादीनां कदापि राज्यसम्बन्धो नास्तीति सूचितम् । अत्र हेतुमाह, अभावे पूर्वपूर्वेषामित्यादि इत्यस्य पूर्वपूर्वेषामभावे प्राप्तस्य उत्तरोत्तराणां राज्यसम्बन्धस्य अनेनापवादात् अनेन पौनर्भवः स्वयं दत्तमित्यादिविशेषाभिधानेन अपवादात् निषेधात् पौनर्भवादीनामिति

न क्षेत्रजादींस्तनयान् राजा राज्येऽभिषेचयेत् ।
पितॄणां साधयेन्नित्यमौरसे तनये सति ॥

इत्यनेन प्रागेवाभिधानात् । सत्यौरसे क्षेत्रजादीन् राज्ये नाभिषेचयेत् । पितॄणां नित्यं श्राद्धादि च न साधयेन्न कारयेदित्यर्थः । गोत्रेणेति । यद्यपि जातकर्मादिषु साक्षाद् गोत्रस्य करणता न श्रूयते तथाऽपि तदङ्गभूते वृद्धिश्राद्धे तत्संबन्धावश्यंभावात्प्रधानेऽपि तत्संबन्ध इति । चूडादिषु तु साक्षादेव तत्संबन्धः ।

"शिखा अपि च कर्तव्याः कुमारस्याऽऽर्षसंख्यया ।"

---

शेषः । ननु भागार्हास्तनया इमेत्यनेन औरसादीनां षण्णां राज्यसहितसर्वधने युगपदधिकारः । पुत्रपांसलात्यनेन कनीनादीनामेव पूर्वपूर्वस्याभावे परपरस्याधिकारः । पौनर्भवादीनान्तु राज्ये कदापि नाधिकारः' इत्येवं कुतो न स्यादित्याशङ्कामपनेतुमाह । सत्यौरसे तु राज्याभावस्येति अस्य प्रागेवान्वयः । तथा च औरसः क्षेत्रजश्चैव एतद्वचनस्य प्रागेव न क्षेत्रजादींस्तनयान् राजा राज्येऽभिषेचयेदिति वचनेनैव औरससत्वे क्षेत्रजादीनां सम्बन्धभावो निरूपित इति वर्तुलार्थः । गोत्रेणेति पितुर्गोत्रे यः पुत्र इत्यत्रेति शेषः । तत्सम्बन्धावश्यम्भावात् गोत्रसम्बन्धावश्यम्भावात् तथाचाश्वलायनस्मृतिः—

उक्त्वा पित्रादिसम्बन्धं नामगोत्रं स्वधानमः ।
बह्वृचस्तत् क्रमेणैव तर्पयामीति तर्पयेत् ॥

श्राद्धेऽपि विधिरेष स्यात् आश्वलायनशाखिनाम् । ब्रह्मपुराणञ्च । अमुकामुकगोत्रैतत्तुभ्यमन्नं स्वधानम इति । प्रधानेपि तत्सम्बन्ध इति । इति अङ्गानां प्रधानसम्पादकत्वेन सुतरामेव तत् सम्बन्धप्रतीतिरिति भावः । चूडादिषु आदिना उपनयनविवाहयोः परिग्रहः । आर्षसंख्यया प्रवरसंख्यया तथा च प्रवरस्य तत् संख्यायाश्च गोत्रव्याप्यत्वात् गोत्रज्ञानं विना प्रवरसंख्ययोर्ज्ञानाप्रसक्तेरिति भावः । तथा च प्रवरविवरणे आश्वलायनश्रौतसूत्रम् । जामदग्नावत्सास्तेषां पञ्चार्षेयो भार्गवच्यावनाप्नुवानौर्वजामदग्नेति । नारायणीवृत्तिः । द्विविधा यत् सा जामदग्ना अजामदग्नाश्च । अत्र ये जामदग्ना वत्साः वयमिति स्मरन्ति तेषां पञ्चार्षेयः प्रवरो भवति भार्गवच्यावनाप्नुवानौर्वजामदग्नेति ।

इतिस्मरणात संस्कारैः पुत्रत्वमित्युक्तम् । तानेवान्वयव्यतिरेकाभ्यामाह पितुर्गोत्रेणेति । यः पुत्र आचूडान्तं चूडान्तैः संस्कारैः पितुर्जनकस्य गोत्रेण संस्कृतः सोऽन्यतोऽन्यस्य पुत्रतां न याति । अयमत्राभिसंधिः–कृतचूडस्य प्रतिग्रहीतृपुत्रताभावप्रतिपादनमसाधारणपुत्रतां विषयीकरोतीत्यवश्यं वाच्यम् । अन्यथा गृहीत्वा पञ्चवर्षीयमित्यनेन कृतचूडस्यापि परिग्रहीतृपुत्रताप्रतिपादनविरोधात् ।

---

अथ अजामदग्नानां भार्गवच्यावनाप्नुवानेति ॥७॥

नारायणीवृत्तिः । येतु वयमजामदग्ना वत्सा इति स्मरन्ति तेषां आर्षेयः प्रवरो भवति । भार्गवच्यावनाप्नुवानेति । एतेषामजामदग्नादौर्वजामदग्नशब्दौ न भवतः । अतएव तौ शब्दौ जामदग्नप्रयुक्तौ द्विप्रकाराणां वत्सानां परस्परमविवाहः आर्षेयसन्निपातात् । एतदुक्तं भागवता बौधायनेन आर्षेयानामविवाहः इति ।

आर्ष्टिषेणानां भार्गवच्यावनाप्नुवानार्ष्टिषेणानुपेति ॥८॥

नारायणीवृत्तिः । अयमपि पञ्चार्षेयः प्रवरः ।

विदानाम् भार्गवच्यावनाप्नुवानौर्व वैवेदेति ॥९॥

नारायणीवृत्तिः । अयमपि पञ्चार्षेय एव । विदानामौर्वशब्दसमन्वयाज्जमदग्नगोत्रत्वमप्यस्ति वत्सानां विदानाम् आर्ष्टिषेणानाञ्च क्वचिदृषिसन्निपातात् क्वचित् सगोत्रत्वाच्च परस्परविवाहः । सर्वेषु च समानप्रवरादविवाहः । सर्वत्र चैवं समानधर्मेषु ।

संस्कारैरिति प्रतिग्रहीतृगोत्रोल्लिखितसंस्कारैरित्यर्थः तानेव संस्कारानेव अन्वयव्यतिरेकाभ्यां अन्वयव्यतिरेकनियमाभ्याम् अन्वयनियमत्वं तत्सत्वे तत् सत्ताकत्वं व्यतिरेकनियमत्वं तदसत्वे तदसत्ताकत्वम् । आहेति तथा च ग्रहीत्रा निजगोत्रेण चूडादिना संस्कृतस्य ग्रहीतृपुत्रत्वं सिद्ध्यति इत्यन्वयनियमं दर्शयिष्यमानः तदभावे न सिद्ध्यति इति व्यतिरेकनियमं भङ्ग्यन्तरेण दर्शयति । पितुर्गोत्रेणेत्यादिना परिग्रहीतृपुत्रताभावाप्रतिपादनम् । अन्यतः पुत्रतां न याति इत्यादिनेति शेषः । असाधारणपुत्रतां जनकस्येति शेषः असाधारणत्वन्तु प्रतिग्रहीतारमुद्दिश्य दत्तेऽपि स्वपुत्रत्वसम्बन्धाभावाप्रयोजकत्वं विषयीकरोति ज्ञापयति । अस्य कर्तृपदं पुत्रताभावप्रतिपादनम् । अन्यथा कृतचूडस्यासाधारणपुत्रत्वास्वीकारे । गृहीत्वा पञ्चवर्षीयमित्यनेन गणवाच-

गृहीत्वेत्यस्य च कृतचूडविषयत्वावश्यंभावः स्पष्टमिष्यते। ततश्च चूडान्तसंस्कारसंस्कृतस्य परिग्रहे द्व्यामुष्यायणता भवति। गोत्रद्वयेन संस्कृतत्वात्। तस्य च फलं गोत्रद्वयसंबन्ध इत्यग्रे वक्ष्यते। अनेन जातकर्मादीनां चूडान्तानां संस्काराणां पुत्रताहेतुत्वमुक्तम्। आचूडमिति वक्तव्ये यदन्त-

---

केतिना पुत्रेष्टिं प्रथमं चरेदित्युत्तरप्रतीकपरिग्रहः पञ्चवर्षीयग्रहणोत्तरपुत्रेष्टिविधानेनेत्यर्थः। कृतचूडस्यापि न केवलम् अकृतचूडस्य विरोधादिति ग्रहणानन्तरं पुत्रेष्टेरुपदेशात् पुत्रत्वसिद्धिः प्रतीयते अन्यथा तद्विशेषाभिधानवैयर्थ्यरूपविरोधापत्तिर्भवेदिति भावः। गृहीत्वेत्यस्य गृहीत्वा पञ्चवर्षीयमित्याद्यन्तस्य कृतचूडविषयत्वावश्यम्भाव इति। अकृतचूडस्य प्रतिषेधाभावेन प्रतिप्रसवपरतयैव पुत्रेष्टिविधेः सार्थक्यादितिभावः। जनकगोत्रेण कृतचूडस्य दासत्वोक्तेस्तद्विरोधपरिहाराय विषयभेदेन व्यवस्थापयति ततश्चेति द्व्यामुष्यायणता इति सावधारणो यं निर्देशः तेन द्व्यामुष्यायणता एव भवति न तु शुद्धदत्तकता। तथा च ग्रहणानन्तरं पुत्रेष्टया दासत्वविमोचनपूर्वकप्रतिग्रहीतृपुत्रत्वेऽपि न तादृश द्व्यायामुष्यायणे जनकस्यासाधारणपुत्रत्वव्याघात इति भावः। चूडान्तानां संस्काराणां निजगोत्रेण कृतानामित्यर्थः। पुत्रता हेतुत्वं ग्रहीतुः शुद्धदत्तकपुत्रता हेतुत्वम्। प्रधानानिष्पत्त्या इति प्रधानं केशच्छेदनम्। तथा च गोभिलः तत्रैव तान्युपक्लृप्तानि भवन्ति। गर्गश्च—जन्मर्क्षे जन्ममासे च युग्मे मासि च वत्सरे न कुर्यात् प्रथमं क्षौरं विशेषाच्चैत्रपौषयोरिति। न च चूडाया अन्त इति षष्ठीसमासात् चूडान्तसंस्कार उपनयनं तेन जनकगोत्रेण संकृते न ग्रहीतुः पुत्रत्वसिद्धिः।

अतएव अन्यशाखोद्भवोदत्तः पुत्रश्चैवोपनायित इत्यादिना उपनयनेनैव दत्तकत्वसिद्धिरुक्ता इति वाच्यम् अन्यशाखोद्भवो दत्त इत्यादेः शाखा भागित्वमात्रप्रयोजकतया पुत्रत्वसिद्धेरप्रयोजकत्वात् 'ऊर्ध्वन्तु पञ्चमाद्वर्षान्न दत्ताद्याः सुता नृप' इति विशेषवचनवैयर्थ्यापाताच्च। न च पञ्चाब्दे मनुना उपनयनविधानात् ऊर्ध्वन्तु पञ्चमादित्यस्य पञ्चाब्दकृतोपनयनस्य इत्यर्थोवाच्यः तथात्वे सङ्कोचलक्षणापत्तेः अतएव रघुनन्दनेन तद्वचनमुक्त्वा न कश्चिद्विशेषोऽभितः।

हरिनाथोपाध्यायस्तु कृतचूडस्य शुद्धदत्तकत्वं विदधाति यथा ततश्च प्रञ्चमवर्षपर्यन्तं मुख्यकालस्तदुत्तरम् उपनयनपर्यन्तं गौणकालः एतच्च ब्राह्मणादित्रयाणां शूद्रस्य विवाहपर्यन्तम्। यदाह वशिष्ठः—

ग्रहणं तदकृतार्थसमसंख्यशिखस्य पुत्रीकरणाभ्यनुज्ञानार्थम्। प्रधानानिष्पत्त्या पुत्रताऽर्हत्वात्। चुडाद्या इति वक्ष्यमाणत्वाच्च॥ ३९॥

अकृतजातकर्माद्यसंभवे कथमित्यत आह—चूडाद्या इति। चूडाद्याः संस्कारा निजगोत्रेण प्रतिग्रहीतृगोत्रेण कृताः, वै शब्दोऽवधारणे, तदैव दत्ताद्यास्तनयाः स्युरन्यथा तेषां दासतोच्यत, इति। चूडा आद्या येषां ते तथेति। न तु चूडाया आद्या इति पूर्वेण पौनरुक्त्यापातात्।

अनेन जातकर्माद्यन्नप्राशनान्तानां जनकगोत्रेणानुष्ठानेऽपि न विरोधः। तथा चाकृतजातकर्मादिर्मुख्योऽकृतचूडोऽनुकल्प इति सिध्यति। दत्ताद्या

---

ग्राह्यस्तूपनयात् पूर्वं षष्ठादावपि हायने।
तत्परं पञ्चमेवापि ग्राह्यो दासो भवेदिति॥

तत्परम् उपनयनात् परम्।

अन्यशाखोद्भवोदत्तो ग्रहीत्रैवोपनायितः।
स्वशाखोक्तेन विधिना स भवेत् स्वस्य गोत्रभाक्॥ इति।

चन्द्रिकाकारेणापि उपनयनस्य मुख्यकालपर्यन्तं दत्तको ग्राह्य इत्युक्तम्॥ ३९॥

ननु निजगोत्रेण संस्कृता इत्यादिना ग्रहीतृगोत्रसंस्कृतस्यैव दत्तकत्वसिद्ध्युक्तेः प्रथमोपस्थितत्वात् जातकर्मसंस्कारेणैव तत्सिद्धिः स्यादित्यत आह अकृतजातकर्माद्यसम्भवे इत्यादि। चूडाद्या यदीति चूडाद्या इति विशेषोपादानात्। चूडापर्यन्तसंस्काराणामन्यतमेन संस्कृतस्य दत्तकत्वासिद्धिरितिभावः। चूडा आद्या येषामिति तद्गुणसंविज्ञानबहुव्रीहिणा चूडोपनयनयोर्ग्रहणं पूर्वेण पौनरुक्त्यापातादिति। ननु बहुव्रीहेर्जघन्यत्वात् चूडाया आद्या इति षष्ठीसमासाश्रयणे अन्नप्राशनान्तसंस्कारपर्यवसाने आचूडान्त न पुत्रः स इत्यत्र प्रसक्त्यभावात्।

निषेधानुपपत्त्या चूडान्तमित्यत्र चूडा अन्ते यस्य इति बहुव्रीहिणा अन्नप्राशनान्तसंस्कारो वाच्यः। ततश्च निजगोत्रेण संस्कृता इति। अत्रापि संस्कारस्य तत्पर्यन्ततासिद्ध्या पौनरुक्त्यापत्तिः स्यादिति भावः। अनेन चूडाद्या इति बहुव्रीहिसमासाश्रयणात् चूडाप्रभृतिसंस्कारलाभेन। न विरोध इति न दत्तकत्वहानिरित्यर्थः। निजगोत्रेण संस्कृता इति सामान्योक्तेः प्रयोजनं दर्शयति तथाचेति मुख्य इति। तथा च आचूडान्तं चूडाद्या इत्युभयप्रतिकेनैव दत्तकत्वसिद्ध्यसिद्धिकथनात् निजगोत्रेण

इत्याद्यपदेन कृत्रिमादिग्रहणमित्युक्तमेव। तेषामपि संस्कारैरेव पुत्रत्वं न परिग्रहणमात्रेण। अन्यथा दासतोच्यत इति विपक्षबाधकात्। अन्यथा चूडाद्यकरणे कृतचूडादिपरिग्रहे वा दासता भवति। न तु पुत्रत्वमित्यर्थः।

अस्य पुत्रत्वस्य यूपत्वादिवत्संस्कारजन्यत्वात्। असंस्कृतः पुत्रीकार्य-इति स्थितं तत्रावध्यपेक्षायामाह—ऊर्ध्वमिति। असंस्कृतोऽपि पञ्चमादूर्ध्वं न ग्राह्यः। कालाभावेन पुत्रत्वानुपपत्तेः। अनेन पञ्चैव वर्षाणि पुत्रपरिग्रह-काल इत्युक्तं भवति। तद्व्यतिरेकेणाभिधानं तु पञ्चमानन्तरं गौणोऽपि कालो नास्तीति प्रतिपादनाय। अन्यथा—

'स्वकालादुत्तरः कालो गौणः सर्वः प्रकीर्तितः।'

---

संस्कृता इति। सामान्योक्त्या जातकर्मादिसकलसंस्कारसंस्कृतस्य मुख्यत्वकथनैक-प्रयोजनत्वादितिभावः। अकृतचूडोऽनुकल्प इति। अकृतचूडः अकृतचूडामात्र-संस्कार इत्यर्थः। ननु अकृतचूडामात्रस्यानुकल्पत्वे गृहीत्वा पञ्चवर्षीयमित्यनेन विरुध्येत। अतः चूडा आद्या येषामिति बहुव्रीहिणः उपनयनस्यापि ग्रहणं वाच्यम्। तथात्वे अकृतोपनयनस्यापि अनुकल्पत्वे वक्तव्ये कथम् अकृतचूडामात्रनिर्देशः। इति चेन्न चूडाद्या यदि संस्कारा इत्यत्र अन्यथा दास उच्यते इति उपसंहारात् शुद्धद्व्या-मुष्यायणोभयदत्तकाभिप्रायकत्वात्। तथा च कृतचूडस्य द्व्यामुष्यायणदत्तकत्वविधानात् तत्पक्ष एव उपनयनेन द्व्यामुष्यायणदत्तकत्वसिद्धिः अन्यथा तस्यापि दासता स्यात्। विपक्षबाधकादिति पुत्रत्वबाधानुकूलदासत्वापत्तिरूपतर्कसद्भावादित्यर्थः। अन्यथेति अन्यथाशब्दार्थं परिष्करोति चूडाद्यकरणे इत्यादि।

यूपत्वादिवत् मंत्रादिना संस्कारे यथा काष्ठादीनां यूपत्वादिसंज्ञा तद्वत्। संस्कारजन्यत्वात् अलौकिकमन्त्रहोमाद्यङ्गकसंस्कारजन्यत्वात्। तथा च नत्वादान-प्रदानमात्रेण दत्तकत्वसिद्धिरितिभावः असंस्कृतः अकृतचूडः इति स्थितं व्यवस्थितम्। अवध्यपेक्षायामाह अकृतचूडस्य परिग्रहे कालनियममाह इत्यर्थः। असंस्कृतोऽपि अकृतचूडोऽपि कालाभावेनेति 'ऊर्ध्वन्तु पञ्चमात् वर्षान्न दत्ताद्याः सुता नृप' इति निषेधादितिशेषः। पुत्रत्वानुपपत्तेरिति कालस्याकृतिसाध्यत्वेन स्वरूपनिर्वाहकाङ्गत्वात् अकालगृहीतस्य पुत्रत्वसिद्धेरित्यर्थः। तथा च—

इति न्यायेन पञ्चमानन्तरस्य गौणकालतापत्तेः। ततश्च जननमारभ्याऽऽतृतीयवर्षं तत्रापि तृतीयवर्षस्य मुख्यकालतया 'ऊर्ध्वं तु पञ्चमाद्वर्षात्' इत्युपसंहारे वर्षश्रवणाच्चात्रापि चूडाशब्दस्य तृतीयवर्षपरतैवाभिप्रेतेति गम्यते।

अन्यथोपनीतिसहभावपक्षेऽष्टमवर्षमकृतचूडस्य परिग्रहापत्तेः। न चेष्टापत्तिः। ऊर्ध्वं तु पञ्चमाद्वर्षादित्यनेन विरोधाद्। तस्मादाचूडान्तमित्यत्र चूडाशब्दस्तृतीयवर्षपर एव युक्तः। तृतीयानन्तरमापञ्चमं गौणः। ऊर्ध्वं तु

---

अकाले चेत् कृतं कर्म काले तस्य पुनः क्रिया।
कालातीतञ्च यत्कर्म अकृतं तद्विनिर्दिशेत्॥

अकाले स्वकालनात् पूर्वकाले इत्यर्थः। पञ्चैव वर्षाणि पञ्चमवर्षपर्यन्तमेव न तु तदूर्ध्वम्। व्यतिरेकेण निषेधमुखेन। प्रतिपादनाय ज्ञापनाय। ननु चूडाद्या यदि संस्कारा इत्यनेन अकृतचूडस्य दत्तकत्वविधानात् चूडाकालस्य तृतीयाब्दविधानाच्च पञ्चमादूर्ध्वकालस्य प्रसक्त्यभावात् निषेधानुपपत्तिरित्याशङ्कामपनेतुमाह अन्यथेत्यादि अन्यथा अन्यप्रकारेण। गौणकालत्वापत्तिः गौणकालत्वापादनमित्यर्थः। तथा च न्यायादेव प्रसक्तौ निषेधः सार्थक इति भावः। उपसंहरति ततश्चेति तृतीयवर्षमिति तृतीये वर्षे चूडाकरणं यथाकुलं वा इत्याश्वलायनगृह्यात्।

अथातस्तृतीये चूडाकरणमिति गोभिलगृह्यात् प्रथमाब्दे तृतीये वा चूडाकार्या यथा कुलमिति मनुवचनाच्च। मुख्यतयेति तथा च आश्वलायनेन तृतीयवर्षे चूडाकरणमभिधाय यथाकुलं वेत्युक्तेः। गोभिलेन तृतीयवर्षमात्रोक्तेश्च तृतीयवर्षस्यैव मुख्यता युक्तेति भावः। चूडाशब्दस्य चूडा शब्द्यते कथ्यते यस्मिन् काले इति व्युत्पत्त्या चूडाकालस्य इत्यर्थः। तृतीयवर्षपरता मुख्यत्वेनेति शेषः एतेन तृतीयवर्षादूर्ध्वम् पञ्चमवर्षपर्यन्तमत्र गौणकालत्वं ध्वनितम्। अन्यथा सामान्यतोऽकृतचूडस्य प्राह्यत्वे। उपनीति सहभावपक्षे उपनयनकाले चूडायाः करणपक्षे। विरोधादिति अन्यथा निषेधोऽव्यर्थः स्यादिति भावः।

विशेषाभिधानाय पुनरुपसंहरति तस्मादिति चूडाशब्दः चूडाया मुख्यकालः। ततश्च तृतीयवर्षमध्ये अकृतचूडग्रहणस्य प्रशस्तताबोधनाय इति उक्तं न तु कालप्रतीत्युभयज्ञापनार्थं निष्प्रयोजनत्वात्। गौणोऽपि नेतीति। तथा च—

गौणोऽपि नेति स्थितम्। सुता इत्यनेन पुत्रतानुत्पत्तावपि चूडादिसंस्कारा उत्पद्यन्त एव तत्तत्कालसद्भावादित्युक्तम्। तथाऽपि दासतैव पुत्रत्वाभावात्। इदं च तृतीयं दासतानिमित्तम्॥ ४०॥

यत्तु कात्यायनस्मरणम्—

विक्रयं चैव दानं च न नेयाः स्युरनिच्छवः।
दाराः पुत्राश्च सर्वस्वमात्मन्येव तु योजयेत्॥

इत्यनिच्छतां दानादिनिषेधः। सोऽपि पञ्चवार्षिकस्यैव नाधिकस्येति

---

आद्याब्दे कुर्वते केचित् पञ्चमाब्दे तृतीयके।
उपनीति सहैवेति विकल्पः कुलधर्मतः॥

इति निर्णयसिन्धुधृतवचनस्य स्वकालादुत्तरो गौण इत्यादिवचनस्य चात्र बाध इति भावः।

ननु संस्कुर्यात् स्वसुतान् पिता इति स्मरणात् पञ्चमाब्दादूर्ध्वं गृहीतस्य सुतत्वाभावे चूडादिसंस्कारो न स्यादित्याशङ्कामपनेतुमाह सुता इत्यनेन—

'ऊर्ध्वन्तु पञ्चमात् वर्षान्न दत्ताद्याः सुता नृप'

इत्यनेनेत्यर्थः। पुत्रत्वानुत्पत्तावपि पुत्रत्वासिद्धावपि। तत्तत्कालसद्भावादिति संस्कारा अतिपत्येरन् स्वकालाच्चेत् कथञ्चन हुत्वा तदेव कुर्वीत। ये तूपनयनादध इति, वचनादिति शेषः। तथ च कालसद्भावात् अष्टौ संस्कारकर्माणि गर्भाधानमिव स्वयं पिता कुर्यात्। तदन्यो वेति वचनेनान्यकर्तृककरणोक्तेः पितापुत्रसम्बन्धाभावेऽपि न संस्कारबाध इति ग्रन्थकर्तुराशय इति तत्त्वम्। तथापि संस्कारसम्पत्तावपि। इदञ्चेति पञ्चाब्दादूर्ध्वं ग्रहणे पुत्रत्वाभावप्रतिपादनञ्चेत्यर्थः तृतीयमिति दासतानिमित्त दासत्वप्रयोजकं तथा च। जनकेन कृतचूडस्य ग्रहणं साक्षाद्वचनोपात्तत्वात् प्रथमं निमित्तं, विधानं विना ग्रहणं द्वितीयनिमित्तं, पञ्चमादूर्ध्वं यथाविधि ग्रहणमपि तृतीय॰ निमित्तमिति वर्त्तुलार्थः॥ ४०॥

यद्यपि विक्रयञ्चैव दानञ्च इत्यादिवचनमभिधाय

आपत्काले तु कर्तव्यं दानं विक्रय एव च।
अन्यथा न प्रवर्त्तेत इति शास्त्रविनिश्चयः॥

व्याख्येयम् । यच्च सदृशं तु प्रकुर्याद्यमिति वाक्ये गुणदोषविचक्षणमिति पाठमभिप्रेत्य विचक्षणं न तु बालमिति सर्वज्ञेन व्याख्यानं तदपि पंचवार्षिकमेव । विचक्षणं चातुर्यविशेषेण न तु बालम् । बाल आ षोडशाद्वर्षादिति लक्षणविशिष्टं न कुर्यादित्यर्थः इति व्याख्येयम् । तर्ह्यसंस्कृताभावे कथमित्यत आह—गृहीत्वेति । पञ्चवर्षीयं चूडान्तसंस्कारसंस्कृतमित्यर्थः । ननु कथं

---

इत्यनेन अनिच्छूना आपदि दानस्य प्रतिप्रसूतत्वात् ग्रहीतुरपुत्रतावस्थकालस्य आपत्त्वेनाङ्गीकृतत्वाच्च । अपुत्रेण ग्रहीत्रा परिगृहीतस्यानिच्छोरपि पञ्चवार्षिकस्य दाननिषेधाप्रसक्त्या आशङ्का न घटते । तथापि पञ्चवर्षन्यूनस्य इच्छानिच्छयोरवधारणासम्भवात् पञ्चवर्षादूर्ध्वन्तु दत्तकाद्यर्थदानादिनिषेधस्य वाचनिकत्वेन प्रसङ्गासङ्गतेश्च तुष्यतु न्यायेन दत्तकस्थलेऽपि पञ्चवार्षिकस्यैव कथञ्चित् प्रसक्तिसम्भवं दर्शयितुं आशङ्क्यते यत्त्विति । अतएव मूलकारेण प्रागेव आपत्काले तु कर्तव्यं दानं विक्रय एव च इत्यादि । कात्यायनवचनमुदाहृत्य ग्रहीतुरपुत्रत्वे नापदमवधार्य च दानादेः कर्तव्यत्वमुक्तम् । अन्यथा स्ववाक्ययोर्विरोधः स्यात् । नाधिकस्येति दत्तकादिस्थले इति शेषः तथा च पञ्चवर्षादूर्ध्वमनिच्छुत्वसम्भवेऽपि दत्तकादिकरणनिषेधेन तदर्थदानाद्यभावस्य स्वतः सिद्धतया दत्तकाद्यर्थदानादेरप्रसक्त्या तन्निषेधस्यापि वाचनिकत्वासङ्गतेः, पञ्चवार्षिकस्यैव नाधिकस्येत्यनेन एवकारस्य व्यावृत्तिः समर्थिता इति भावः । एतेन प्रयोजनान्तरकृतस्य दानादेः पञ्चवर्षादूर्ध्वमपि अनिच्छूनां वाचनिकनिषेधः सिद्ध्यतीति मन्तव्यम् ।

पञ्चवार्षिकपर्यन्तस्य ग्राह्यत्वे तन्मध्ये अज्ञतया वैचक्षण्यबाधात् विरोधमाशङ्क्यते यच्चेति व्याख्यातमित्यग्रिमेणास्यान्वयः । पञ्चवार्षिकमेव पञ्चवार्षिकपर्यन्तमेव । ननु पञ्चवार्षिकपर्यन्तेषु अज्ञतया विचक्षणत्वं न सम्भवति । इत्याशङ्कामपनेतुमाह—चातुर्यविशेषेणेति बुद्धिमत्तासूचकचाञ्चल्यादि लक्षणचातुर्यविशेषेणैव न तु शास्त्रज्ञत्वेन अन्यथा नाना वचनविरोधः स्यात् । तथा च इदृग्विचक्षणत्वं तत्पर्यन्तेषु सुलभमिति भावः । न तु बालम् इत्यस्य विवरणं बाल आषोडशाद्वर्षादिति लक्षणं विशिष्टम् । आषोडशादिति वचनान्तरसम्वादितया मर्यादार्थे आङ् पञ्चदशापर्यन्तमित्यर्थः । तथा च—

कौमारं पञ्चमाब्दान्तं पौगण्डोदशमावधि ।
कैशोरमापञ्चदशात् यौवनन्तु ततः परम् ॥

तस्य ग्रहणं दासताभिधानादित्यत आह—पुत्रेष्टिमिति। अयमत्राभिसन्धिः। अग्नये पुत्रवते पुरोडाशमष्टाकपालं निर्वपेदिन्द्राय पुत्रिणे पुरोडाशमेकादशकपालं प्रजाकामोऽग्निरेवास्मै प्रजां प्रजनयति वृद्धामिन्द्रः प्रयच्छतीति वाक्ये प्रजाफलकत्वमिष्टेः श्रूयते। तद्यत्रानुत्पन्ना प्रजा तत्र तदुत्पत्तिरेव भाव्या। यत्र तूत्पन्ना परिगृह्यते तत्रोत्पत्तेरभावात्तस्याः प्रजात्वमेव भाव्यमिति कल्प्यते। प्रकृतविध्यन्यथानुपपत्तेः। तच्च दासत्वापनोदनमृते न संभवतीति

---

न कुर्यादिति तथा चोक्तलक्षणविचक्षणबालस्य पञ्चवार्षिकस्यैव ग्राह्यत्वात् पञ्चदशवर्षपर्यन्तस्य बालकसामान्यस्य ग्रहणं न कुर्यादिति भावः।

असंस्कृताभावे अकृतचूडकाभावे। चूडान्तसंस्कारसंस्कृतमित्यर्थ इति। ननु अकृतचूडकग्रहणं पञ्चाब्दमध्ये सम्भवति कथं कृतचूडग्रहणमवश्यं वाच्यमिति चेन्मैवं तथात्वे चूडाद्या यदि संस्कारा इति प्रतीकेन ऊर्ध्वन्तु पञ्चमाद्वर्षादित्यादि प्रतीकेन च। अकृतचूडपञ्चवार्षिकग्रहणप्राप्तौ गृहीत्वा पञ्चवर्षीयमित्यत्र पञ्चवर्षीयपदवैयर्थ्यापत्त्या कृतचूडत्वेन विशेषकथनस्यौचित्यात्। तदुत्पत्तिरेव प्रजोत्पत्तिरेव भाव्या फलम्। तथा च श्रुतिः—'पुत्रकामः तुत्रेष्टिं कुर्यादिति'।

प्रजात्वमेव भाव्यं पुत्रत्वमेव फलम्। प्रकृतविध्यन्यथानुपपत्तेः पुत्रफलिकपुत्रेष्टिविधेरन्यथानुपपत्तेः। तथा च प्रजाकामकर्तव्यविधेः कामनाविषयकफलं विना प्रवर्तकताशक्तिबाधात् विधिरूपासिद्धेरिति भावः। तच्च प्रजात्वमेव न सम्भवतीति दासे प्रजात्वबाधादितिभावः, तदपनोदः दासत्वापनोदः। अन्यथा प्रजात्वमात्रसम्पादकत्वे दासत्वापनोदनं विना केवलं प्रजात्वसम्पादकतास्वीकारे इष्टेरिति शेषः। पुत्रपरिग्रहमात्रे स्यात् अकृतजातकर्मादिकृतचूडसाधारणपुत्रपरिग्रहे स्यात् इष्टिरिति शेषः। इष्टापत्तौ वृद्धव्यवहारविरोध इति भावः। संस्कारैरेव पुत्रत्वमुत्पद्यते न इष्ट्या इत्याशङ्क्यते। यदि च इत्यादि तत्रेति अकृतजातकर्मादि पुत्रपरिग्रहे न तदपेक्षा न इष्टेरपेक्षा प्रकृतेऽपि कृतचूडस्य पञ्चवर्षीयस्य ग्रहणेऽपि। तुल्यमिति यथा अकृतजातकर्मादिग्रहणे संस्कारेण पुत्रत्वमुत्पद्यते तथा कृतचूडस्यापि उपनयनादि संस्कारेण स्यात, तथा च इष्टिविधानं विफलमिति भावः। ननु अकृतसंस्कारस्यैव संस्कारापेक्षा कृतसंस्कारस्य पुत्रेष्टिविधानात् विशेषविधिमहिम्ना पश्चात् भाविसंस्कारस्य बाधः कल्प्यः। अतः संस्काराभावात् कुतस्तुल्यता इत्यत्र आह प्रथमपदेनेति

तदपनोदोऽप्यवश्यमभ्युपेयः। अन्यथा प्रजात्वमात्रसम्पादकत्वे पुत्रपरिग्रहमात्रे स्यात्। यदि च संस्कारैरेव तत्र पुत्रतोत्पत्तेर्न तदपेक्षेति तर्हि प्रकृतेऽपि तुल्यं प्रथमपदेनात्र तत्सूचनात्।

'सर्वांस्तु कुर्यात्संस्काराञ्जातकर्मादिकान्नरः'

इत्यन्तेऽभिधानाच्च। तस्मात्पुत्रेष्ट्या पूर्वसंस्कारप्रयुक्तदासत्वापनोदपूर्वकप्रजात्वसंपादनात्संस्कृतोऽपि परिग्राह्य इति स्थितम्। यद्येवं तर्हि संस्कृत-

---

तत्सूचनात् संस्कारसूचनात्। तथा च गृहीत्वेति आनन्तर्यबोधकत्वानिर्देशात् ग्रहणप्राथम्या सम्भवादगत्या संस्कारप्राथम्यमेव वाच्यं ततश्च संस्कारप्राप्त्या न तुल्यत्वव्याघात इति भावः। ननु प्रथमं चरेत् संस्कारप्राक् आचरेदित्यर्थस्वीकारेऽपि संस्कारस्य कर्तव्यता नायाति कुतः संस्कारसूचनमित्यत आह सर्वांश्चेति। तथा च सङ्कोचे हेत्वभावात् सर्वपदवैयर्थ्यापाताच्च सकलसंस्काराणां कर्त्तव्यत्वे इष्टि ऊर्ध्वमपि कृतचूडस्योपनयनादिसंस्कारप्राप्त्या न तुल्यता व्याघात इति हृदयम्। ननु आचूडान्तं न पुत्रः स इति चूडाद्या यदि संस्कारा इत्यादिभिश्चूडाया एव पुत्रत्वसम्पादकत्वं नान्येषां। ततश्च प्रकृते कृतचूडस्य ग्रहणात् संस्कारस्य सकृत कर्तव्यत्वोक्तेः ग्रहणानन्तरमपि चूडाया असम्भवाच्च। पुत्रत्वानुत्पत्तौ दासत्वोत्पत्तौ च दासत्वोच्छेदपूर्वकपुत्रत्वसम्पादनाय। पुत्रेष्टिविधानस्यैव सार्थक्यं मनसि प्रस्तुत्य उपसंहारच्छलेन तदेवाविष्करोति। तस्मादितिपूर्वसंस्कारप्रयुक्तेति जनकगोत्रोल्लिखितचूडासंस्कारप्रयुक्तेत्यर्थः।

अक्षरग्रहणपूर्वकेति अक्षरग्रहणात्मकप्रथमविद्यारम्भपूर्वकेत्यर्थः। तथा च विष्णुधर्मोत्तरे—

सम्प्राप्ते पञ्चमे वर्षे अप्रसुप्ते जनार्दने।
षष्ठीं प्रतिपदञ्चैव वर्जयित्वा तथाष्टमीम्॥
रिक्तां पञ्चदशीञ्चैव सौरिभौमदिनन्तथा।
एवं सुनिश्चिते काले विद्यारम्भन्तु कारयेत्॥ इति।

ब्रह्मवर्च्चसफलकोपनयनप्राप्त्यर्थः इति।

"ब्रह्मवर्च्चसकामस्य कुर्याद् विप्रस्य पञ्चमे"

इति मनुना ब्रह्मवर्च्चसफलार्थिनः पञ्चाब्दोपनयनोक्तेः ततश्च पञ्चाब्दोपनीतस्यापि

मित्येव वाच्यम्। किं पञ्चवर्षीयपदोपादानेनेति चेत्। मैवम्। पञ्चवर्षीयस्यैवेति नियमार्थत्वात्। नियमश्चाक्षरग्रहणपूर्वकब्रह्मवर्चसफलकोपनयनप्राप्त्यर्थः। न चायं नियमः पूर्ववाक्येनैव सिद्ध इति वाच्यम्। तस्याकृतसंस्कारावधिसम्पर्कत्वेन प्रकृतार्थत्वाभावे परिगृहीतत्वात्। प्रथममिति। संस्कारेभ्यः प्रागित्यर्थः॥ ४१॥

ननु परिग्रहहोमादेव प्रागिति कुतो नेष्यते। गृहीत्वेति साङ्गाया ग्रहणभावनायाः क्त्वाप्रत्ययेन पूर्वकालतावगमात्। पुत्रेष्ट्या पूर्वसंस्कारापनोदेन

---

तद्वर्षमध्ये परिग्रहपूर्वकेष्टग्राह्याद्व्यामुष्यायणदत्तकत्वं सिद्ध्यतीति प्रतीयते। एतेन "अन्यशाखोद्भवोदत्तः पुत्रश्चैवोपनायित" इत्यादिवचनबोधितोपनयनस्यापि ग्रहीतृपुत्रत्वसम्पादकत्वमप्यत्र परिगृहीतम्।

विवाहस्य तु कन्यालाभाद्यधीनत्वेन कदाचित्कत्वात् पञ्चवर्षीयपरिग्रहे पुत्रेष्टेरवदासत्वोच्छेदपूर्वकपुत्रत्वसम्पादकता न तु संस्कारस्येति स्फुटतया प्रतिभाति। पूर्ववाक्येन ऊर्ध्वन्तु पञ्चमाद्वर्षान्न दत्ताद्याः सुता नृप इति निषेधघटितवाक्येन सिद्ध इति। तथा च षष्ठादिनिषेधादेव पञ्चमवर्षप्राप्तौ पुनः पञ्चवर्षीयग्रहणं सिद्धे सति आरम्भो नियमाय नियमः पाक्षिके सति इति तल्लक्षणादिति भावः। नियमत्वाभावे हेतुमाह तस्येति कृतचूडपञ्चवर्षीयस्य।

अकृतसंस्कारावधिसम्पर्कत्वेन अकृतसंस्कारमारभ्य मुख्यगौणभावेन विधायकत्वेन कालिकापुराणवचनस्येति शेषः। प्रकृतत्वाभावे दासत्वनिन्दावादात्, कृतचूडस्य ग्राह्यत्वाभावे परिगृहीतत्वात् गृहीत्वा पञ्चवर्षीयमित्यनेन पुनर्विधिपरिगृहीतत्वात् प्रतिप्रसूतत्वादित्यर्थः। तथा चाप्राप्तत्वाद्विधिरेव न नियम इति भावः॥ ४१॥

ननु परिग्रहहोमात् प्रागेव इष्टिर्वाच्या तेनैव प्रथमपदस्य सार्थक्यसम्भवे किमितिसंस्कारेभ्यः। प्रागित्यस्यावश्यवक्तव्यत्वमित्याशङ्क्य विनिगमकं दर्शयति। नन्वित्यादि साङ्गाया ग्रहणभावनाया होमपूर्विकाया ग्रहणभावनाया फलोत्पादिकाप्रवृत्तिर्भावना तथा च व्याहृतिभिर्हुत्वा प्रतिगृह्णीयादिति। वसिष्ठस्मरणात् होमस्य ग्रहणाङ्गतासिद्धेति भ.व.।

क्त्वाप्रत्ययेन गृहीत्वा पञ्चवर्षीयमित्यत्रानन्तर्यार्थकक्त्वाप्रत्ययेनेत्यर्थः। पूर्वकालता अव्यवहितपूर्वकालता साङ्गाया ग्रहणभावनायाः अस्या अन्वयः। ततश्च

संस्कारान्तरावश्यापेक्षणाच्चेति। यदुक्तमूर्ध्वं तु पञ्चमाद्वर्षान्न दत्ताद्याः सुता इति। तस्यापवादमाह—पौनर्भवं त्विति।

'अक्षतायां क्षतायां वा जातः पौनर्भवः स्मृतः'

इत्यनेन सप्तविधायामपि पुनर्भ्वां जातः संगृहीतः। जातमात्रमुत्पन्नमात्रम्। तेनोत्पत्तिकाल एव न कालान्तर इत्यर्थः। समानयेत्–परिग्रहविधिना परि-

---

'गृहीत्वा पञ्चवर्षीयं पुत्रेष्टिं प्रथमं चरेदि'त्यत्र होमाङ्गपरिग्रहाव्यवहितोत्तरत्वविशिष्ट-पुत्रेष्ट्याचरणविषयकं कार्यमिति महावाक्यार्थबोधात् होमात् प्राक् कर्तव्यत्वमिष्टे-र्बाधितमेव। पुत्रेष्ट्या प्रथमप्रदसमभिव्याहृतपुत्रेष्टिविधानेनेत्यर्थः।

पूर्वसंस्कारापनोदेन इष्टेः प्राक् कृतानां संस्कारजनकीभूतक्रियाणां नाशेनेत्यर्थः। तथा च संस्काराणां संस्कृतकरणोक्ते. कृतसंस्काराणां आवर्तनीयत्वासम्भवात् न संस्कारसामान्यानां प्रथमं इष्टेः कर्तव्यत्वमिति सूचितं कथनप्रयोजनन्तु संस्कारेभ्यः प्रागिति स्वोक्तन्यूनतापरिहाराय। संस्कारान्तरावश्यापेक्षणाच्च इष्ट्युत्तरसम्भाव्य-मानापरसंस्कारावश्यापेक्षणाच्चेत्यर्थः। तथा च सम्भाव्यमानसंस्कारस्यैव प्राक् कर्तव्यत्वेन प्रथमपदस्य चरितार्थता न तु होमादेरिति भावः। अपवादमाह पौन-र्भवस्तोमेति तथा च समानयेदित्यनेन पौनर्भवेऽपि परिग्रहविधानात् प्राक्रान्तदत्तक-विध्युक्तसमग्रधर्मप्रसक्तौ विशेषोक्तेरपवादकत्वमितिभावः। सप्तविधायामपि पुनर्भ्वां काश्यपबौधायनाभ्यामुक्तायामित्यर्थः। तथा च काश्यपः—

सप्तपौनर्भवा कन्या वर्जनीया कुलाधमा।
वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला॥
अग्नि परिगता या च पुनर्भूप्रभवा च या॥
इत्येताः काश्यपेनोक्ता दहन्ति कुलमग्निवत्।

बौधायनः—

'वाग् दत्ता मनोदत्ता अग्नि परिगता सप्तपदं नीता अभुक्ता भुक्ता गृहीतगर्भा-श्चेति। सप्तविधा पुनर्भूस्तां गृहीत्वा न प्रजान्तधर्मं विन्देदिति। याज्ञवल्क्यदीपकलिकायां शूलपाणिस्तु—'अक्षता वा क्षता वापि पुनर्भूः संस्कृता पुनरि'ति। पुनः संस्कृता-पुनरूढेत्यर्थः कामत श्रयेत न तु विवाहविधिना। एतच्च ज्ञानार्थमुच्यते न प्रवृत्त्यर्थः प्रतिलोमवत्। 'वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला सप्तमपदन्नीता अभुक्तभुक्ता

गृह्णीयात्। ननु जातमात्रस्य जातकर्मैवोचितं कुमारं जातं पुराऽन्यैरालम्भादिति सूत्रात्। तत्कथमुच्यते जातमात्रं समानयेदिति। सत्यम्। अपरिगृहीतस्य स्वसुतत्वाभावे संस्कारानुपपत्तेः। संस्कुर्यात् स्वसुतान् पितेति स्मरणात्। न च बीजसम्बन्धादेव स्वत्वम्। बीजाद्योनिर्बलीयसीत्यपवादात्। समयादन्यस्येति गौतमस्मरणाच्च। अन्यस्य जनयितुः पुत्रः समयादेवे-

---

गृहीतगर्भा चेति। सप्तविधा पुनर्भूस्तां न विन्देदि'ति वचनात्। अनयोर्भेदमाह नारदः—

परपूर्वास्त्रियस्त्वन्याः सप्तप्रोक्ता यथाक्रम्।
पुनर्भूस्त्रिविधा तासां स्वैरिणी तु चतुर्विधा॥

इत्यन्तेनाह। उत्पत्तिकाल एव उत्पत्त्यनन्तरकाल एव जातमात्रमिति अतीतार्थकक्तवानिर्देशादिति शेषः। न कालान्तरे इति एतेन दत्तकग्रहणकालवत् नात्र कालान्तरमपेक्षणीयमिति सूचितम्। समानमेतदित्यर्थस्य विधिविवरणं करोति प्रतिग्रहणविधिनेत्यादि। जातकर्म प्रमाणयति पुराण्येरालम्भात्। पुरा पूर्वं अन्यैरालम्भात् अन्यकर्तृकस्पर्शनात्। तथा च शौनकः—'जातं कुमारं जननादन्यसंस्पर्शनात् पुरा' इत्यादि। इति श्रुतादिति आश्वलायनस्येति शेषः। अनुपपत्तौ हेतुमाह संस्कुर्यादित्यादि। स्वसुतान् पिता इति श्रुतेः। स्वसुतत्वाभावे जनकस्य संस्कर्तृत्वाभावः प्रतीयते। न च नहीत्यर्थः अपवादादिति तथा च बीजस्य चैव योन्याश्च बीजमुत्कृष्टमुच्यते। इति मनुनोक्तं—

'क्वचिच्च बीजाद् योनिर्गरीयसी' इति उक्तं अनयोर्विरोधपरिहाराय यत्र स्वभार्यायां पुत्र उत्पाद्यते तत्र ऋतुगमननियमेन पुत्रस्य वैधतया बीजस्य प्राधान्यात् पुत्रत्वं स्वतो जायते। यत्र परभार्यायां पुत्र उत्पाद्यते तत्र पुत्रस्यावैधतया योनेः प्रधान्यात् न बीजिनः पुत्रत्वसिद्धिः अतएव मनुः 'विशिष्टं कुत्रचिद्बीजं स्त्रीयोनिश्चैव कुत्रचिदि'ति। अपरमपि—"न निष्क्रयविसर्गाभ्यां भर्तुर्भार्या वियुज्यते। एवं धर्मं विजानीम प्राक् प्रजापतिनिर्मितम्॥" अत्र कुल्लूकभट्टः— यतो दम्पत्त्योरैक्यं अतो नेति निष्क्रयो विक्रयः विसर्गस्त्यागः न ताभ्यां स्त्रीभर्तुर्भार्यात्वादपैति एवं पूर्वं प्रजापतिना स्मृतं नित्यं धर्मं मन्यामहे एवञ्च क्रियादिना आत्मसात्कृत्वा तदुत्पादितापत्यं क्षेत्रिण एव न बीजिन इति। ततश्च क्षेत्रिकाद्यनुमतिं विनापि पुनर्भ्वामुत्पादितस्य क्षेत्रिपुत्रत्वेन बीजिनः पुनर्भवपुत्रत्वासिद्धौ कालिकापुराणेन जातमात्रस्य परिग्रहविधिना पौनर्भव-

त्यर्थः। तस्मादत्र जातकर्मणः प्राक् परिग्रह इति। परिग्रहानन्तरं संस्कार-प्राप्तावपवादमाह—कृत्वेति। जातमात्रस्य परिग्रहानन्तरं पौनर्भवष्टोमं[1] विधाय पश्चाज्जातकर्मादिसंस्कारान् कुर्यादित्यर्थः॥ ४२॥

नन्विदमनुपपन्नं जातेष्टिन्यायविरोधात्। तथा हि-यथा जातेष्टिर्विधीयते तथाऽत्र पौनर्भवस्तोमो विहितः। स च जातकर्मणः प्राक्क्रियमाणः प्रधानं विरुणद्ध्येव। पश्चाहसाध्यत्वात्तस्येति चेत्। उच्यते—नात्र पौनर्भवस्तोमो जातेष्टिवदपूर्वो विधीयते। किंत्वन्यत्रोत्पन्नस्य तस्य जातकर्मादीनां च क्रम-

पुत्रत्वं साधितमिति भावः। ननु स्मृतौ—

"या पत्या वा परित्यक्ता विधवा वा स्वयेच्छया।
उत्पादयेत् पुनर्भूत्वा स पौनर्भव उच्यते॥"

इति श्रुतेः। पतिपरित्यक्तायां स्वेच्छाचारिण्याम्वा परनार्यामुत्पादितस्य पौनर्भवत्वं, तद्व्यतिरिक्तायां क्षेत्रिकानुमतेरुत्पादितस्य क्षेत्रजत्वमित्यस्ति विषयविभागः। कथं स्मृतितोर्दुर्बलेन पुराणवचनेन स्मृतेः सङ्कोच इत्यत आह—गौतमस्मरणादिति। तथा च गोतमस्य स्मृतिकारत्वेन स्मृत्योर्विरोधे न्यायस्य वचनवत्त्वेन च गौतमवचन-वैयर्थ्यापत्त्या पौनर्भवत्वसिद्धौ परिग्रहविधेरवश्यापेक्षेतिभावः। समयादेव परिग्रहादि-नियमादेव नान्यथेति भावः तस्मात् जातमात्रस्य परिग्रहनियमात्। परिग्रहानन्तरं परिग्रहाव्यवहितोत्तरम्। अपवादमाह कृत्वेति तथा च दत्तकवत् परिग्रहोत्तरमेव संस्कारप्राप्तौ विशेषविधिरयं तदेव स्पष्टयति जातमात्रस्येत्यादि॥ ४२॥

नन्विदमिति इदं प्राग् व्यवस्थापित पौनर्भवष्टोमानन्तरं जातकर्मादिकं अनुपपत्तौ हेतुमाह जातेष्टिन्यायविरोधादिति जातेष्टिपूर्वकजातकर्मकरणयुक्तिविरोधा-दित्यर्थः : विरोधमुपपादयति तथाहीति तथा अत्रेति तत्स्थाने इष्टिस्थाने इत्यर्थः पौन-र्भवष्टोमो विहित इति तथा च यथा गोदोहेनापः। प्रणयेदिति विशेषविधिमहिम्ना सामान्यप्राप्तं चमसं बाधित्वा तत्स्थाने गोदोहो विधीयते तथात्रापि जातेष्टिं बाधित्वा तत्स्थाने पौनर्भवष्टोमो विहित इति पूर्वपक्षयितुराशयः। स च पौनर्भवष्टोमः प्राक्क्रियमाणः कृत्वेति अनन्तरार्थकक्त्वाबलेन जातकर्मादिसंस्काराव्यवहितपूर्वक्रियमाणः प्रधानं जातकर्मसंस्कारं विरुद्ध्येव इष्टिपूर्वकत्वजातदिनक्रियामाणत्वबाधादिति भावः।

१. आनन्दाश्रमपाठे—पौनर्भवस्तोमम्।

मात्रम्, यथा दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति। तेन न कोऽपि विरोधः। वैशब्दोऽवधारणे। जातमात्रस्यैव न कालान्तर इत्यर्थः। तेनास्य जातेष्टिवदेव पूर्वकालतादिनियमोऽपि न सिध्यतीति। सर्वपदेनैव सिद्धौ जातकर्माद्युपादानं तत्पूर्वभाविनां गर्भसंस्काराणां निवृत्त्यर्थम्।

जातकर्माद्युपादानेऽपि यत्सर्वपदोपादानं तद्यस्य यावन्तः संस्कारास्तस्य तावत्प्राप्त्यर्थम्। ततश्च शूद्रादीनामुपनयनाद्यभावेऽपि चौलादिभिरेव पुत्रत्वं

---

इष्टेर्बाधः प्राग्दर्शितः अधुना जातदिनक्रियमाणत्वबाधं दर्शयति पञ्चाह साध्यत्वात्तस्येति तथाहि पौनर्भवष्टोमस्य पञ्चाहसाध्यतया।

'प्राङ्नाभिवर्द्धनात् पुंसो जातकर्म विधीयते' इति मनुना।

'जातं कुमारं पुरान्यैरालम्भा'दित्याश्वलायनेन। 'जन्मनोऽनन्तरं कार्यं जातकर्म यथाविधि' इति मैत्रवापेन च जन्मदिनकर्तव्यत्वोपदेशात् तद्बाधेन पूर्वपक्षो दृढ़तर इति भावः। सिद्धान्तयति उच्यते इति। जातेष्टिवदिति अन्यत्राप्राप्ततया यथा अप्राप्तप्रापकरूपो जातेष्टिविधिः तथा च श्रुतिः। वैश्वानरं द्वादशकपालं चरुं निर्वपेत् पुत्रो जाते इति तद्वन्नात्र अप्राप्तप्रापकरूपः पौनर्भवष्टोमविधिः लिङ्गादिपदाभावादिति शेषः। अन्यत्रोत्पन्नस्य विधेयतया श्रुतस्य तस्य पौनर्भवष्टोमस्य क्रममात्रं पौर्वापर्य्यक्रममात्रं मात्रपदेन जातेष्टिवदेकदिनकर्तव्यत्वव्यवच्छेदः। तथा च क्रममात्रविधानमुखेन विधेयत्वप्रतिषेधात् गोदोहेनापः प्रणयेदित्यत्रेव नात्र स्थानीयत्वेन जातकर्मणो जातेष्टिपूर्वकत्वव्याघात इति भावः। ननु इष्टिपूर्वकत्वव्याघाताभावेऽपि पौनर्भवष्टोमस्य पञ्चाह साध्यताया जन्मदिने जातकर्मणो बाधेन विरोधोऽस्त्येव कथं सिद्धान्तोपपत्तिरिति चेदत्र ब्रूमः —

अष्टौ संस्कारकर्माणि गर्भाधानमिव स्वयं पिता।
कुर्यात्तदन्यो वा इति संस्कुर्यात् स्वसुतान् पिता॥

इत्यादिवचने सुतसंस्कारकर्मणि पितुरधिकारश्रुतेः जातमात्रस्य पौनर्भवस्य परिग्रहानन्तरं पौनर्भवष्टोममन्तरेण पुत्रत्वासम्पत्त्या पितापुत्रसम्बन्धभावेन पितुरनधिकार एव सिद्ध्यति अतः जन्मदिन एव जातमात्रस्य पौनर्भवस्य परिग्रहानन्तरं पौनर्भवष्टोमे आरब्धे तस्य पञ्चाहसाध्यतया पञ्चाहात् परतः पुत्रत्वसम्पत्तौ पितापुत्रसम्बन्धात् पितुरधिकारसिद्धौ अधिकारसमये मुख्यकालस्यातीतत्वात् अशौचादूर्ध्व-

भवतीति कल्प्यम् । नर इति सामान्योपादानेऽपि पौनर्भवस्तोमे त्रैवर्णिक-स्यैवाधिकारादन्येषां तु संस्कारमात्रेणैव पुत्रत्वमिति । पौनर्भवस्तोमसंस्कार-योर्मिलितयोः पुत्रत्वहेतुतामुपसंहरति—कृत इति । पौनर्भवस्तोमे कृते ततस्तैः संस्कारैः पौनर्भवः सुतो भवतीत्यर्थः ॥ ४३ ॥

---

रूपगौणकाले इष्टिपूर्वकजातकर्मणः कर्तव्यत्वेऽपि क्षतिविरहात् । अतएव हेमाद्रौ बैजवापः—

जन्मनोऽनन्तरं कार्यं जातकर्म यथाविधि ।
दैवादतीतकालश्चेदतीते सूतके भवेत् ॥ इति दिक् ।

एकत्र विधेयस्य कर्मणोऽन्यत्र श्रुतौ आनन्तर्यविधाने दृष्टान्तमाह—यथा पौर्नमासाभ्यामिति तथा च 'अमावस्यया अमावस्यायां यजेत, पौर्णमास्या पौर्णमास्यां यजेत' इति श्रुत्या यावज्जीविकतया विहितयोर्दर्शपौर्णमासयोर्नात्रविधिः परन्तु इष्ट्वा इति आनन्तरार्थकक्त्वा-निर्देशात् यथा पौर्वापर्यक्रममात्रं विधीयते तद्वत् प्रकृतेऽपीत्यर्थः । वैशब्दस्य कालिका-पुराणवचनस्य वैशब्द इत्यर्थ अवधारणे इति अव्ययानामनेकार्थत्वादिति शेषः । अव-धारणार्थकवैशब्दलभ्यस्यैवकारस्येतरव्यावृत्तिफलकत्वादाह न कालान्तर इत्यर्थः तथा च जन्मदिन एव पौनर्भवं परिगृह्य पौनर्भवष्टोम आरम्भणीयः न तु दत्तकग्रहणवत् कालान्तरमपेक्षणीयमिति भावः । तेन कालान्तरप्रतिषेधेन अस्य पौनर्भवष्टोमस्य । जातेष्टिवदेवेति वैश्वानरं द्वादशकपालं चरुं निर्वपेत् पुत्रे जात इति श्रुतिविहिताया जातेष्टेः यथा समानदिनकर्तव्यतया नैयत्येन पूर्वकालकर्तव्यत्वनियमः आदिना एक-दिनकर्तव्यत्वलाभः तथाऽस्य पौनर्भवष्टोमस्य न सिद्ध्यतीति व्यतिरेकिदृष्टान्तः । जातकर्माद्युपादानमित्यादि तथा च विवाहितायाः पुरुषान्तरसम्पर्कात् पौनर्भवो भवति । यथा मनुः—

या पत्या वा परित्यक्ता विधवा वा स्वेच्छया ।
उत्पादयेत् पुनर्भूत्वा स पौनर्भव उच्यते ॥ इति ।

ततश्च पतिपरित्यक्तसधवाया विधवाया वा अन्यपुरुषकर्तृकगर्भाधानादि-संस्काराणामवैधतया प्रसक्त्यभावात् न्यायप्राप्तानुवादमात्रमिति भावः । कपिञ्जल-न्यायात् बहुवचनस्य त्रित्वपर्यवसानादाह सर्वपदोपादानं । ननु कृत्वा पौनर्भवष्टोम-मित्यनेन पौनर्भवष्टोमानन्तरं नरमात्रकर्तव्यतया संस्काराणां विधेयत्वेऽपि पौनर्भव-ष्टोमस्य वैदिककर्मतया स्मार्तं शूद्रः समाचरेदित्यनेन —

प्रासङ्गिकं पौनर्भवधर्ममाह—

एकोद्दिष्टं पितुः कुर्यान्न श्राद्धे पार्वणादिकम् ।

पौनर्भवः पुत्रः पितुः श्राद्धे क्षयाह एकोद्दिष्टमेव कुर्यान्न पार्वणादिकम् । आदि-शब्दात्पार्वणविकृतीनामपि निषेधः ।

प्रत्यब्दं पार्वणेनैव विधिना क्षेत्रजौरसौ ।
कुर्यातामितरे कुर्युरेकोद्दिष्टं सुता दश ॥

इति जातूकर्ण्यस्मरणात् ।

पितुर्गतस्य देवत्वमौरसस्य त्रिपौरुषम् ।
सर्वत्रानेकगोत्राणामेकोद्दिष्टं क्षयेऽहनि ॥

---

इष्टापूर्तं द्विजातीनां धर्मं सामान्यमिष्यते ।
अधिकारी भवेच्छूद्रः स्मार्ते धर्मे न वैदिके ॥

इत्यनेन च वैदिकप्रतिषेधात् पुत्रेष्टिवत् पौनर्भवहोमानन्तर्यं विनापि केवलसंस्कारादेव पौनर्भवपुत्रत्वसिद्धिं व्यवस्थापयति सामान्योपादानेत्यादि अन्येषां शूद्रतत्सामान-धर्मिणां । संस्कारमात्रेण जातमात्रस्य परिग्रहपूर्वकसंस्कारमात्रेणैवेत्यर्थः । मिलितयो-रिति द्विजातीनामिति शेषः ॥ ४३ ॥

साक्षाद्वचनोपात्तान् पौनर्भवहोमादिकान् पौनर्भवधर्मान् उक्त्वा पौनर्भव-निरूपणप्रसङ्गे उक्तानपरधर्मान् कथयति प्रासङ्गिकान् पौनर्भवधर्मानाह इति एतेन एकोद्दिष्टमिति वक्ष्यमाणवचनं पौनर्भवनिरूपणप्रसङ्गे उक्तमिति सूचितम् । श्राद्धे श्राद्धे कर्तव्ये इत्यर्थः न पार्वणादिकमिति तथा च स्त्र्यादिवत् पौनर्भवपुत्रविषये अमावस्यादि-पार्वणस्य सपिण्डीकरणव्यतिरिक्तपार्वणविधिकस्य वाचनिकप्रतिषेधः । पार्वणादीनां निषेधेन एकोद्दिष्टस्य विधानेन च औचित्यादाह क्षयाह इति क्षयाहपदं एकोद्दिष्टकरण-योगप्राह परं तेनाद्यैकोद्दिष्टषाण्मासिककालस्य गौणैकादश्यादिकालस्य च संग्रहः तन्मात्राविवक्षितत्वे आद्यैकोद्दिष्टादिबाधापत्त्यामहाविप्लवापत्तेः । एकोद्दिष्टमेवेति तद्धर्म-ग्राहित्वात् सपिण्डीकरणं साम्वत्सरिकमित्युभयमपि परिगृह्यते प्रत्यक्षमिति साग्नि-कर्तव्यपरं अमावस्यादिक्षयनिमित्तनिरग्निपरमपि । तथा च—

यत्र यत्र प्रदातव्यं सपिण्डीकरणात् परम् ।
पार्वणेन विधानेन देयमग्निता सदा ॥

इति पराशरस्मरणाच्च । पुत्रोद्देशे स्वयंदत्तश्च दासश्चेत्युक्तं तत्र दास-लक्षणमाह—

क्रीता या रमिता मूल्यैः सा दासीति निगद्यते ।
तस्यां यो जायते पुत्रो दासपुत्रस्तु स स्मृतः ॥

या सवर्णाऽपि मूल्यैः क्रीता सती रमितोपभुक्ता सा दासीत्युच्यते पूर्वैः ।

क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते ।
न सा दैवे न सा पित्र्ये दासीं तां कवयो विदुः ॥

इति स्मरणात् ।

तस्यां जातो दासपुत्रः दास्याः पुत्रो दासपुत्रः । छान्दसः पुंवद्भावः । यद्वा दासश्चासौ पुत्रश्चेति । यद्वा दासाभिधः पुत्रो दासपुत्र इति ।

---

अमावस्यां क्षयो यस्य प्रेतपक्षेऽथवा पुनः ।
सपिण्डीकरणादूर्ध्वं तस्योक्तः पार्वणो विधिः ॥ इति ।

औरसस्येति क्षेत्रजस्याप्युपलक्षणं त्रिपौरुषं दैवत्वं पित्रादित्रैपुरुषिकपार्वण-विधिकश्राद्धमुक्तमिति कालिकापुराणेनेति शेषः । मूल्यैः क्रीता इति ग्राम्यधर्मार्थं न तु विवाहार्थं तेन रमिता इत्युत्पद्यते । तथा च आसुरविवाहेन विवाहितायां जातस्य न दासपुत्रत्वं अतएव—

चतुरो ब्राह्मणस्याद्यान् प्रशस्त्यान् करयो विदुः ।
राक्षसं क्षत्रियस्यैकं आसुरं वैश्यशूद्रयोः ॥

इत्यनेन मनुना आसुरविवाहस्य प्रशस्त्यमुक्तं सङ्गच्छते । ननु विशेष्यविशेषणयोः परस्परव्यभिचारे कर्मधारयसमासविधानात् दासीजातत्वाभाववति पुत्रत्वसत्वेऽपि पुत्रत्वसामान्यभाववति दासीजातत्वाभावेन परस्परव्यभिचाराभावात् कर्मधारयो-समासो न घटते अतश्छान्दसत्वमङ्गीकृत्य षष्ठीसमासमाश्रयति दास्याः पुत्र इत्यादि ।

ननु चन्दनतरुर्मलयपर्वतो वसन्तसमय इत्यादि प्रयोगदर्शनात् विशेषणव्यभिचार-एव नियामको न तु विशेष्यस्य न हि तरुत्वाद्यभाववति चन्दनत्वादिर्वर्तते इत्यत आह यद्वेति । ननु दासश्चासौ पुत्रश्चेति कर्मधारयसमासाङ्गीकारे पुत्रेण पितुर्दास्यकर्मकरण-पक्षे दासपुत्रता स्यादित्यत आह दासाभिधः पुत्र इति दाससंज्ञकपुत्र इत्यर्थः । तथा च

१५

तद्धर्मानाह—

न राज्ञो राज्यभाक् स स्याद्विप्राणां श्राद्धकृन्न च।
अधमः सर्वपुत्रेभ्यस्तस्मात्तं परिवर्जयेत् ॥

स राज्ञो राज्यभाग् न विप्राणां श्राद्धकृच्च न स्यात्। यस्मात्सर्वपुत्रेभ्योऽधमः स इत्यर्थः ॥ ४४ ॥

कीदृश इति निरूपितम्। इदानीं[1] कथमिति निरूप्यते। तत्र शौनकः—

शौनकोऽहं प्रवक्ष्यामि पुत्रसंग्रहमुत्तमम्।
अपुत्रो मृतपुत्रो वा पुत्रार्थं समुपोष्य च ॥

संग्रहं संग्रहणविधिम्। उपोष्य संग्रहदिनात्पूर्वेद्युः। वन्ध्यो मृतप्रजो वाऽपीति वृद्धगौतमः—

---

मध्यपदलोपिसमासाश्रयणात् दासपुत्र इति साधुपितुर्दासस्य करणेऽपि दाससंज्ञाविरहान्न तदापत्तिरितितत्त्वम्। न राज्ञो राज्यभागिति अत्र राजशब्दो नृपतिमात्रपरः न तु क्षत्रियनृपतिपरः तदपरिणीताजातस्य अवैधपुत्रतया राज्यातिरिक्तधनेष्यधिकाराभावः। तथाहि अपरिणीतायां सवर्णायामपि दास्यां शूद्रेणोत्पादितस्यावैधपुत्रत्वेऽपि शास्त्रे धनाधिकारप्रतिपादनात् राज्यप्रसक्तौ निषेधोऽयम्। तथा च मनुः—

दास्याम्वा दासदास्याम्वा यः शुद्रस्य सुतो भवेत्।
सोऽनुज्ञातो हरेदंशमिति धर्मो व्यवस्थित ॥ इति।

याज्ञवल्क्योऽपि—

जातोऽपि दास्यां शूद्रेण कामतोंऽशहरो भवेत्।
मृते पितरि कुर्युस्तं भ्रातरस्त्वर्द्धभागिनम् ॥ इति।

विप्राणामिति बहुवचनात् ब्राह्मणक्षत्रियवैश्यानामित्यर्थः। श्राद्धकृन्न स्यादिति अपरिणीता जातत्वेन अवैधपुत्रतया श्राद्धकर्त्ता न भवति तेनोपकाराभावादेव धनाधिकारो नास्तीति सूचितं अतोऽस्याधमत्वमुपपद्यते ॥ ४४ ॥

कथमिति इति कर्त्तव्यताख्याज्ञानीत्यर्थः। शौनक इति तथा च शौनकस्य बह्वृच

---

१, कीदृश इति निरूपितम्। इदानीं कथमिति निरूप्यत इति।

वाससी कुण्डले दत्त्वा उष्णीषं चाङ्गुलीयकम् ।
आचार्यं धर्मसंयुक्तं वैष्णवं वेदपारगम् ॥
मधुपर्केण संपूज्य राजानं च द्विजान् शुचीन् ॥

[1]राजाऽत्र ग्रामस्वामी—

बन्धूनाहूय सर्वांस्तु ग्रामस्वामिनमेव च ।

इति वृद्धगौतमस्मरणात् । यद्यपि तत्रैवाग्रे—

मधुपर्कं ततो दद्यात्पृथिवीशाय शासिने ।

इति पृथिवीशपदं तदपि ग्रामस्वामिपरमेव । तस्योपक्रमस्थत्वेन बलवत्त्वात् । द्विजान् त्रीन् याचनार्थतया मधुपर्कादिना संपूज्येत्यर्थः ।

बर्हिः कुशमयं चैव पालाशं चेध्ममेव च ।
एतानाहृत्य बन्धूंश्च ज्ञातीनाहूय यत्नतः ॥

बन्धूनात्मपितृमातृबन्धून् । ज्ञातीन्सपिण्डान् । बान्धवाद्याह्वानं दृष्टार्थं राजाह्वानवत् । बध्नन्ति जानन्त्यात्मीयतया परिगृहीतं नरमित्यर्थः । शब्दद्वयसामर्थ्यात् ।

---

गृह्यकर्तृत्वात् तदुक्तेति कर्त्तव्यतया दत्तकग्रहणमृग्वेदिनामावश्यकं बोध्यम् । साधारणानां राजाह्वानासम्भवादाह राजात्र ग्रामस्वामीति तदाह्वानन्तु व्यवहारसौकर्य्यार्थं अतस्तद्विनापि दत्तकग्रहणं भवत्यवधेयम् । उपक्रमस्थत्वेन बृहद्गौतमेन ग्रामस्वामिनमिति वचनमभिधाय निर्दिष्टत्वेन । समस्तद्विजार्चनासम्भवे कपिञ्जलस्थलोक्तयुक्त्या आह-द्विजान् त्रीनिति । याचनार्थतयेति एतेन ब्राह्मणद्वारा याचनं कर्तव्यमिति सूचितम् । कुशमयं कुशनिर्मितं बर्हिः उपवेशनोपयोगि आस्तृतकुशमिति यावत् । पालाशं पालाशवृक्षसम्बन्धि इध्मं काष्ठं एतद् होमार्थं दृष्टार्थं । दृष्टमात्रप्रयोजनार्थं नादृष्टार्थमिति यावत् । शब्दद्वयसामर्थ्यादिति बन्धुज्ञातिपदद्वयनिर्देशात् सार्थक्या । येत्यर्थः तथाच बन्धुपदस्य ज्ञात्यर्थत्वे पौनरुक्तमिति भावः ।

---

१. राजाऽत्र ग्रामस्वामीति ।

बन्धूनन्नेन संभोज्य ब्राह्मणांश्च विशेषतः ।

बन्धूनाहूतान् । ब्राह्मणान्पूर्ववृतान् । चकारादाहूताञ्ज्ञातींश्च संभोज्येत्यर्थः ।

अग्न्याधानादिकं तन्त्रं कृत्वाऽऽज्योत्पवनान्तकम् ।
दातुः समक्षं गत्वा तु पुत्रं देहीति याचयेत् ॥

याचनं कारयेत्पूर्वं वृतैर्ब्राह्मणैरित्यर्थः ।

दाने समर्थो दाताऽस्मै ये यज्ञेनेति पञ्चभिः ।

दानसामर्थ्यं बहुपुत्रत्वं पत्न्यनुमतिश्चेत्यादि । पञ्चभिर्दद्यादिति शेषः । प्रतिगृह्णीत मानवं सुमेधस इति मन्त्रलिङ्गात् ।

---

अग्निप्राधानादिकं स्वस्वगृह्योक्तविधिना अग्निस्थापनप्रभृत्याज्योत्पवनान्तं कर्म आज्यन्तु चतुर्भिः पूतं घृतं तथाच गृह्यासंग्रहे—

वह्निना चैव मन्त्रेण पवित्रेण च चक्षुषा ।
चतुर्भिरेव यत् पूतं तदाज्यमितरद् घृतम् ॥ इति ।

पवित्रेण कुशेन । पूर्ववृतब्राह्मणैरिति पाठितमन्त्रैरिति शेषः । ये यज्ञेनेति यो यज्ञेनेति पाठस्तु प्रामादिकः । मन्त्रो यथा ऋग्वेदसंहितायाम्—

ये यज्ञेन दक्षिणया समक्ताइन्द्रस्य सख्यममृतत्वमानश ।
तेभ्यो भद्रमङ्गिरसा वोऽस्तु प्रतिगृह्णाति मानवं सुमेधः ॥१॥
य उदाजल्पितरो गोमयं वस्वृते नाभिं दल्परिवत्सरे वलम् ।
दीर्घायुष्टमङ्गिरसो वो अस्तु प्रतिगृह्णाति मानवं सुमेधः ॥२॥
य ऋतेन सूर्यमारोहयन् पृथिवीं मातरम्बि ।
सुप्रजास्त्वमङ्गिरसो वो अस्तु प्रतिगृह्णात मानवं सुमेधः ॥३॥
अयं नाभा वदति वल्गुवो गृहे देवपुत्रा तच्छृणोतन् ।
सुब्राह्मण्यमङ्गिरसो वो अस्तु प्रतिगृह्णीत मानवं सुमेधः ॥४॥
विरुपास ईदूषयस्त इद्गीम्भीववेपसः
ते अङ्गिरस सूमवस्ते अग्नेः परियज्ञिरे ॥५॥

( ऋ० मं० १०, अंशे ५ सूक्त ६२ )

देवस्य त्वेति मन्त्रेण हस्ताभ्यां परिगृह्य च ।
अङ्गादङ्गेत्यृचं जप्त्वा आघ्राय शिशुमूर्धनि ।
वस्त्रादिभिरलङ्कृत्य पुत्रच्छायावहं सुतम् ॥

पुत्रच्छाया पुत्रसादृश्यम् । तच्च नियोगादिना स्वयमुत्पादनयोग्यत्वम् । यथा भ्रातृसपिण्डसगोत्रादिपुत्रस्य । न चासंबन्धिनि नियोगासंभवः ।

बीजार्थं ब्राह्मणः कश्चिद्धनेनोपनिमन्त्र्यताम् ।

इति स्मरणात् । ततश्च भ्रातृपितृव्यमातुलदौहित्रभागिनेयादीनां निरासः । पुत्रसादृश्याभावात् । एतदेवाभिप्रेत्योक्तमग्रे तेनैव—

---

दान सामर्थ्यं दानप्रयोजकम् । बहुपुत्रत्वमिति एकपुत्रदानादि निषेधादिति शेषः । पत्न्यनुमतिश्चेति पत्न्यै अनुमतिरिति चतुर्थी तत्पुरुषः । तेन भर्तृकर्तृकपत्न्युद्देश्यकदानार्थानुमतिर्लभ्यते तथा च वशिष्ठः—

न स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वा अन्यत्रानुज्ञानात् भर्तुरिति । न तु पत्न्या अनुमतिरिति षष्ठीसमासः तथात्वे पुरुषस्य प्राधान्यानुपपत्तेः । पञ्चभिः ये यज्ञेनेति पञ्चभिर्मन्त्रैरित्यर्थः । मन्त्रलिङ्गादिति प्रतिग्रहानुमतिप्रकाशकलिङ्गयुक्तधातुपदार्थसामर्थ्यादित्यर्थः । देवस्य त्वेति मन्त्रस्तु—

देवस्य त्वा प्रसवेऽश्विनोर्बाहुभ्यां पुष्णो हस्ताभ्यां गृह्णन्नसाविति ।

अङ्गादङ्गेति मन्त्रमस्तु—

अङ्गादङ्गे सम्भवसि हृदयादभिजायसे ।
आत्मा वै पुत्रनामासि सजाव शरदः शतम् ॥ १ ॥

नियोगादिनेति नियोगः स्वसम्बन्धिन्यां स्त्रियामपत्योत्पादने सन्तोषवाक्येन धनदानादिना वा पुरुषान्तरप्रवर्तनायानुमतिः आदिना विवाहपरिग्रहः तथा च यस्यां स्त्रियां नियोगेन विवाहेन वा अपत्यमुत्पादयितु युज्यते सा यदि विरुद्धसम्बन्धा असति विशेषवचने मातृदुहित्रादिस्थानीया न भवति तदा तादृशस्त्रीजातः सन्ततिरेव पुत्रच्छायावहः सुतो भवति इति निष्कर्षार्थः ।

कश्चित्तु यथा नियोगादिनेति आदिना वेतनदानपरिग्रहः बीजार्थं ब्राह्मणः कश्चिद् धनेनोपनिमन्त्र्यतामिति वचनादिति प्रलपति तन्न धनदानस्यादि पदग्राह्यत्वे न

दौहित्रो भागिनेयश्च शूद्राणां विहितः सुतः ।
ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित् ॥ इति ।

अत्रापि भागिनेयपदं पुत्रासदृशानां सर्वेषामुपलक्षणं विरुद्धसम्बन्धस्य समानत्वात् । विरुद्धसम्बन्धश्च[1] नियोगादिना स्वयमुत्पादनायोग्यत्वम् । यथा विरुद्धसम्बन्धो विवाहे गृह्यपरिशिष्टे पठितः—

चासम्बन्धिनि नियोगासम्भवः बीजार्थं ब्राह्मणः कश्चिद्धनेनोपनिमन्त्र्यतामिति स्मरणेन निमन्त्रणसम्भवादिति मूलोक्तिविरोधापत्तेः उत्पादनयोग्यत्वं उत्पादकतया शास्त्रविहितत्त्वं तदेवोपहरति यथेत्यादि "द्वन्द्वात् परश्रूयमाणः प्रत्येकेन सम्बध्यते" इति न्यायात् भ्रातृ-पुत्रसपिण्डपुत्रगोत्रपुत्रा ग्राह्याः । तथा चाह मनुः—

१. अत्रापि भागिनेयपदं पुत्रासदृशानां सर्वेषामुपलक्षणं विरुद्धसंबन्धस्य समानत्वात् । शौनकवचनस्थ–'पुत्रच्छायावहं'–इति पदसंबन्धिनन्दपण्डितकृतव्याख्यानमुपर्युक्तग्रन्थे दृत्तं दृश्यते । शौनकमतमीदृशम्–ग्राह्यः पुत्र ईदृशो भाव्यः । यत्पश्यतामौरसपुत्रप्रतिमैवायमिति-भासेतेति । अर्थात् यस्मिन्नौरसपुत्रोऽयमितिबुद्धिरनायासेनोत्पद्येत । नन्दपण्डिता ब्रूवन्ति—'पुत्रछाया पुत्रसादृश्यम् । तच्च नियोगादिना स्वयमुत्पादनयोग्यत्वम्' इति । यया स्त्रिया सह शास्त्रीयमार्गेण नियोगः संभवेत्तादृशस्त्रियि उत्पन्नः पुत्रो दत्तको ग्राह्यः एतन्नियमानुसारेणापि भ्रातृ-पुत्रोऽयं सर्वेषु मुख्यो भवति । सोदरभ्राता, पितृव्यः, मातुलः, दौहित्रः, भागिनेयश्चेत्येते च व्यावर्त्यन्ते । यतस्तेषां मातृषु ग्राहकाणां भ्रातृपितृव्यपुत्रभागिनेयमातामहादीनां नियोगस्य कदाऽपि शक्यत्वाभावात्तेषां पुत्रसादृश्यप्राप्तेः सुतरामसंभवः । विवाहेऽप्ययं विरुद्धसवन्धः परित्यक्तव्यो भवति । उदाहरणम्—स्वपत्नीभगिन्याः कन्या स्वस्य दुहितृस्थानीयेति कृत्वा सापिञ्याभावेऽपि स्वस्य भार्या भवितुं नार्हति । तथा पितृव्यपत्न्या भगिनी, पितृव्यपुत्रस्य भातृस्थानापन्नेति सा तस्य भार्या भवितुं सर्वथैवानुचिता । तथैव यया स्त्रिया सह तद्विवाहात्पूर्वं स्वविवाहः संभवति, अथवा विवाहानन्तरं स्वनियोगस्तया सह शक्यः स्यात्तादृशस्त्रियाः सकाशाज्जात एव पुत्रः स्वेन दत्तकत्वेन ग्रहीतुं निर्वर्तनीयः ( निवडावा ) इत्येवं दत्तकमीमांसा-काराणामभिप्रायो वर्त्तते । 'पुत्रच्छायावह सुतम्' इति शौनकोक्तेस्तस्याऽयारोऽस्ति । एतत्संबन्धेन न्यायालयानां कीदृशोऽभिप्राय इतिषट्चत्वारिंशत्पृष्ठे टिप्पण्यां द्रष्टव्यम् । पत्न्या यद्दत्तकग्रहणं क्रियते तन्न स्वार्थं, किंतु मृतस्वीयभर्तर्थमेव । ततश्च तस्याः स्त्रियाः शैशवावस्थायां येन पुरुषेण सह स्वविवाहो घटयितुमशक्योऽथवा विवाहानन्तरं येन सह स्वनियोगः सर्वथाऽशक्यसंभवस्तादृश-

दम्पत्योर्मिथः पितृमातृसाम्ये विरुद्धसम्बन्धो भार्यास्वसुर्दुहिता पितृव्य-पत्नीस्वसा चेति ।

अस्यार्थः—यत्र दम्पत्योर्वधूवरयोः पितृमातृसाम्यं वध्वा वरः पितृ-स्थानीयो भवति, वरस्य वा वधूर्मातृस्थानीया भवति, तादृशो विवाहो विरुद्ध-सम्बन्धः । तत्र यथाक्रममुदाहरणद्वयम्—भार्यास्वसुर्दुहिता श्यालिकापुत्री ।

---

देवराद्वा सपिण्डाद्वा स्त्रियः सम्यङ्नियुक्तया ।
प्रजेप्सिताधिगन्तव्या सन्तानस्य परिक्षये ॥ इति ।

पुत्रसादृश्याभावादिति । तथा च यद्यपि विवाहप्रकरण एव विरुद्धसम्बन्धो दर्शितः तथापि एकत्र दृष्टन्यायात् नियोगस्थलेऽपि पितृमातृस्थानीयत्वे विरुद्धसम्बन्धोवर्जनीय इति कल्प्यम् । ततश्च प्रायश्चित्तविवेके देवलः—

आचार्यश्च पिता जेष्ठभ्राता चैव महीपतिः ।
मातुलः श्वसुरस्त्राता मातामहपितामहो ॥
वर्णजेष्ठः पितृव्यश्च पुंस्येते गुरवो माता ॥ इति ।

एतेषां गुरुत्वकीर्त्तनात् तत्पत्नीनां मातृस्थानीयता सिद्धैव । ततश्च भ्रातृ-पितृव्यमातुलानां निषेधः सङ्गच्छते । दौहित्रभागिनेययोस्तु साक्षात् वचनादपि निषेधः । प्राधान्यादमीषां निर्देशः कृतः, परन्तु बहुवचनाद् यावद्विरुद्धसम्बन्धानां निषेधः सूचितः । ज्येष्ठभ्रातृपत्न्या मातृस्थानीयत्वेऽपि 'देवराद्वा सपिण्डाद्वा' इति विशेषवचनबलाददोष इति व्यवस्थानिष्कर्षः । अत्रापि ब्राह्मणादित्रयविषयेऽपि ।

पुत्रासदृशानां स्वयमुत्पादनायोग्यत्वरूपविरुद्धसम्बन्धयुक्तानामित्यर्थः । विवाहात् दम्पतित्वनिष्पतेराह दम्पत्योर्वधूवरयोः । श्यालिकापुत्रीति । तथा च श्यालिका-पुत्र्याः मातृष्वसा स्वभार्य्या । बृहस्पतिना तु—

---

पुरुषस्य पुत्रतया स्त्रिया दत्तकत्वेन नैवग्राह्य इत्येवं नियमो निर्मातुमशक्यः । यं पुत्रं ग्रहीतुं तद्भर्तुर्न कोऽपि प्रतिबन्ध आसीत्तं पुत्रं भर्तृमरणानन्तरं ग्रहीतुं तस्याः स्त्रियाः कोऽपि प्रतिबन्धो भवितुं नार्हत् । अतएव मृतभर्तृकया कयाचित् स्त्रिया स्वभ्रातुष्पुत्रो दत्तकत्वेन गृहीतश्चेत्तर्हि स राजनियमानुसार्येव ( कायदेशीर ) स्यात ( जयसिगं वि० विजयपाल २७ अलाहाबाद ४१७ ) ।

पितृव्यपत्नीस्वसा—पितृव्यपत्न्या भगिनी चेति। तथा प्रकृते विरुद्धसम्बन्धपुत्रो वर्जनीय इति, यतो रतियोगः सम्भवति, तादृशः कार्य इति यावत्।

नृत्यगीतैश्च वाद्यैश्च स्वस्तिशब्दैश्च संयुतम्।
गृहमध्ये तमाधाय चरुं हुत्वा विधानतः॥
यस्त्वा हृदेत्यृचैनैव तुभ्यमग्नेत्यृचैकया।
सोमो दददित्येताभिः प्रत्यृचं पञ्चभिस्तथा॥

एवं सप्तभिर्मन्त्रैः सप्त चर्वाहुतीर्हुत्वेत्यर्थः।

वृद्धगौतमस्तु विशेषमाह—

पायसं तत्र साज्यं च शतसंख्यं तु हावयेत्।
प्रजापते नत्वेतामित्युद्दिश्य प्रजापतिम्॥ इति।

एतदनन्तरं ब्राह्मणानां सपिण्डेष्वित्यादयः पुत्रदानं प्रयत्नत इत्येतदन्ताः श्लोकाः पूर्वमेव व्याख्याताः। तदनन्तरम्—

---

मातृष्वसा मातुलानी पितृव्यस्त्री पितृष्वसा।
श्वश्रुः पूर्वजपत्नी च मातृतुल्याः प्रकीर्त्तिता॥

इत्यनेन मातृस्वसुर्मातृतुल्यत्वकीर्त्तनात् तत्पतिः सुतरामेव कन्यायाः पितृस्थानीयः। एवं पितृव्यपत्न्या उक्तवचनेन मातृतुल्यत्वकीर्त्तनात् तद्भगिनीत्वेन कन्यापि वरस्य मातृस्थानीया भवति। यतो यत्र इत्यर्थः। सप्तम्यां तमि। स्वस्तिशब्दैः स्वस्तिवाचनमन्त्रैः। तं पुत्रम्। चरुं हुत्वा प्रधानचरुहोमं कृत्वा। चरुहोमे कृते यस्त्वाहृदादिसप्तमन्त्रकरणकसप्ताहुतिमाह यस्त्वाहृदा इति ऋचेन एकवचननिर्देशात् एक एव मन्त्रः। मन्त्रस्तु—यस्त्वाहृदा कीरिणा मन्यमानो मार्त्त्यियं मात्रिर्यं यो वहसि जातवेदो यशोऽस्मासु धेहि प्रजाभिरग्ने अमृतत्वमस्याः॥ १॥

तुभ्यमग्ने इति एकया ऋचा एकेन मन्त्रेण। मन्त्रस्तु—तुभ्यमग्ने पर्य्यवहञ्च रायं वहतु नः सहपुनः पतिभ्यो या आनन्दा अग्ने प्रजया सह॥ १॥

सोमोऽददत् इत्यादिभिः पञ्चमन्त्रैः। मन्त्रा यथा—

सोमोऽददद् गन्धर्वाय गन्धर्वोऽदददग्नये रैञ्च पुत्रञ्चाददग्निर्मह्यमथो इमाम्॥ १॥

दक्षिणां गुरवे दद्याद्यथाशक्ति द्विजोत्तमः ।

द्विजोत्तमो ब्राह्मणः ।

नृपो राज्यार्धमेवाथ वैश्यो वित्तशतत्रयम् ।

राज्यार्धमर्धराज्योत्पन्नमेकवर्षीयं द्रव्यम् ।

प्रदद्यादर्द्धराज्योत्थमेकवर्षाहृतं धनम् ।

इति वृद्धगौतमस्मरणात् । इदञ्च महाराजाभिप्रायेण । वित्तानां नाणकानां शतत्रयम् । तच्च सौवर्णराजतताम्राणामुत्तममध्यमाधमकल्पनया ज्ञेयम् ।

शतत्रयं नाणकानां सौवर्णमथ राजतम् ।

प्रदद्यात्ताम्रमथवा उत्तमादिव्यवस्थया ॥

इति वृद्धगौतमस्मरणात् ।

शूद्रः सर्वस्वमेवापि अशक्तश्चेद्यथाबलम् ।

---

प्रमे पतियानः पन्थाः कल्पिता शिवा अरिष्टा पतिलोकं गमेयम् ॥ २ ॥

अग्निरेतु प्रथमो देवताभ्यः सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् तदयं राजा वरुणोऽनुमन्यतां यथेयं स्त्री पौत्रमघन्नरोदात् स्वाहा ॥ ३ ॥

इमा अग्निस्त्रायतां गार्हपत्यः प्रजामस्यै जरदष्टिं कृणोतु अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिबुध्यतामियं स्वाहा ॥ ४ ॥

द्यौस्ते पृष्ठौ रक्षतु वायुरुरु अश्विनौ च तनयञ्च ते पुत्राः सविताभिरक्षत्वावाससः परिधानात् बृहस्पतिर्विश्वेदेवा अभिरक्षन्तु पश्चात् स्वाहा ॥ ५ ॥

वचनस्थतथाशब्दस्वरसादाह एवमित्यादि ॥ ४५, ४६, ४७ ॥

विशेषमाह इति। शौनकेन यो होमविधिरुक्तः तदतिरिक्तं वृद्धगौतममाह इत्यर्थः। एतेन शौनकोक्तकल्पेन ग्रहणपक्षेऽपि तद्विध्युक्तहोमानन्तरं वृद्धगौतमोक्तप्रजापतिदेवताकशतसंख्यकसाज्यपायसहोमः शक्तेन कर्तव्य इति ग्रन्थकर्त्तुराशयः। प्रजापते न त्वदेतामन्त्रस्तु—प्रजापते न त्वदेतान्यन्यो विश्वा जाता निपरिता बभूव यत्कामास्तेजुहुमस्तन्नोऽस्तु वयं स्याम पयोरैणा इति। पूर्वमेव शौनकवचनव्याख्योपक्रमे इति शेषः। एतेन वृद्धगौतमोक्तानां प्रयत्नत इत्यन्तप्रतीकानां शौनकसमानत्वं सूचितम्। शौनकोक्तवचनं धृत्वा व्याचष्टे तदनन्तरं बहुपुत्रेण कर्त्तव्यं पुत्रदानं

सर्वस्वमेकवर्षीयभृतिलब्धं द्रव्यम् । एकवर्षाहृतमिति स्मरणस्यात्राप्यविशेषात् । सर्वस्वं चान्वये सतीति निषेधाच्च ॥ ४८ ॥

वसिष्ठस्तु प्रकारान्तरमाह—शुक्रशोणितसम्भवः[1] पुरुषो मातापितृनिमित्तकस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतो न त्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा स हि सन्तानाय पूर्वेषां न तु[2] स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्तुः पुत्रं परिग्रहीष्यन्बन्धूनाहूय राजनि चाऽऽवेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वाऽदूरबान्धवं बन्धुसन्निकृष्टमेव प्रतिगृह्णीयात् ।

सन्देहे चोत्पन्ने दूरबान्धवं शूद्रमिव स्थापयेद्विज्ञायते ह्येकेन बहूंस्त्रायत

---

प्रयत्नत इति प्रतीकान्तरम् । गुरवे मन्त्रोपदेष्ट्रे क्षत्रियाणां सजातौ इत्युपक्रमात् द्विजोत्तमपदस्य उपलक्षणत्वप्रसक्तिं निराकरोति—द्विजोत्तमो ब्राह्मण इति । तथा च क्षत्रियादीनां प्रातिस्विकरूपेण विधानात् नोपलक्षणत्वमिति भावः । महाराजाभिप्रायेण इति । अन्येषां क्षत्रियाणान्तु वर्षोपार्जितधनानामर्द्धं कल्प्यम् । नाणकानां मुद्राचिह्नितनिष्कादीनाम् । तथा च मिताक्षरायां साहसप्रकरणीय याज्ञवल्क्यवचनम्—

तुलाशासनमानानां कूटकृन्नाणकस्य च ।
एभिश्च व्यवहर्त्ता यः स दाप्यो दण्डमुत्तमम् ॥ इति ।

सर्वस्वसामान्यपरत्वे कात्यायनवचनविरोधं दर्शयति सर्वस्वमित्यादि निषेधादिति कात्यायनेन सर्वस्वदाननिषेधादित्यर्थः ॥ ४८ ॥

शौनकवृद्धगौतमोक्तप्रकारमभिधाय वसिष्ठोक्तप्रकारं दर्शयति—वसिष्ठस्त्वित्यादि । एकमिति एकपदं विनिगमनाविरहात् एकत्वावच्छिन्नसजातीयद्वितीयरहितपरं मुख्यत्वेन ज्येष्ठपरमपि इत्युभयं बोध्यम् । पूर्वेषां सन्तानाय हेतुत्वे निर्देशात् स्मृतौ च ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः पितॄणामनृणश्चैव इत्यादिना पितॄणां महोपकारश्रुतेश्च ।

---

१. वसिष्ठस्तु प्रकारान्तरमाह—शुक्रशोणितसंभवः पुरुषो मातापितृनिमित्तकस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतः । नत्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा स हि संतानाय पूर्वेषामिति ।

२. न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्तुरित्यादि ।

इति तस्मिंश्चेत्प्रतिगृहीत औरस उत्पद्येत चतुर्थभागभागी स्याद्दत्तक इति। अत्र शुक्रशोणितसम्भव इत्यारभ्यान्यत्रानुज्ञानाद्भर्त्तु रित्यन्तं व्याख्यातमेव प्राक्। बन्धूनात्मपितृमातृबन्धून्। राजनि ग्रामाधीशे। निवेशनं गृहम्। व्याहृतिभिर्व्यस्ताभिः समस्ताभिश्चाऽऽज्यभागान्त आहुतिचतुष्टयं हुत्वेत्यर्थः। अदूरबान्धवमितिव्याख्यातम्। सन्देहे चोत्पन्न इति। दूरे बान्धवा यस्यासौ दूरबान्धवोऽत्यन्तदेशभाषाविप्रकृष्टस्तादृशस्य परिग्रहे कुलशीलादिविषये सन्देहो भवत्येव। तस्मिन्सति तं शूद्रामिव स्थापयेद्यावन्निर्णयम्। न व्यवहरेदित्यर्थः। तत्र हेतुतया श्रुतिमाह—विज्ञायत इति। एकेन पुत्रेण बहवः पित्रादयस्त्रातव्या इत्येतदर्थं पुत्रप्रतिग्रहो न त्वकेन बहवः पातनीयाः। सन्देहे च पक्षे पातनस्यापि सम्भवात्। तस्मात्तं न व्यवहरेत्पाक्षिकस्यापि दोषस्य परिहार्यत्वात्। कल्पतरुस्त्वसन्निकृष्टमेव प्रतिगृह्णीयादिति पाठमभिप्रेत्याऽऽह—असन्निकृष्टमेव—अविज्ञातगुणदोषमपि। अप्यर्थ एवकारः। सन्देह इति। बान्धवानामसन्निधानात्तु जातिसन्देहे शूद्रत्वेनाध्यवसायसंस्कारहीनमेव स्थापयेत्। शूद्रोऽपि हि किल पुत्रो भवतीत्यभिप्राय इति। तदेतदभिप्रायविवरणमसंगतम्। विजातीयपरिग्रहनिषेधात्। तस्माद्यथाश्रुतमेव

---

आहुतिचतुष्टयं भूः स्वाहा, भुवः स्वाहाः, स्वः स्वाहा, भूर्भुवः स्वः स्वाहा इति चतुष्टयम्। एकेन बहुंस्त्रायते इत्यस्यार्षत्वज्ञापनाय स्वयं व्याचष्टे त्रातव्या इति न व्यवहरेत्। जातिनिर्णयपर्यन्तं न प्रतिदगृह्णीयादित्यर्थः। पातनीया इति। तथा च शूद्रपरिग्रहे अनधिकारिक्रियमाणश्राद्धेनोद्धाराभावात् पतनीयत्वमिति भावः। सन्देहे भावाभावोभयकोटिकसन्देहे इत्यर्थः। पक्षे शूद्रो न वा इति भावपक्षे। पाक्षिकस्य दोषस्य दुष्टस्य कोटिकस्य भावपक्षस्य इति यावत् परिहार्यत्वात् यथार्थनिर्णयेनेति शेषः। कल्पतरुमतमपाकर्त्तुमाह—कल्पतरुस्त्विति। कल्पतरुमते बन्धुसन्निकृष्टमेव एतत्पाठस्थाने बन्धुसन्निकृष्टमेवेति पाठः। अप्यर्थ एवकार। एवकारस्य अप्यर्थता इत्यर्थः। कल्पतरुस्तु पूरबान्धवपदस्यार्थं विवरितुमाह सन्देह इत्यादि। शूद्रत्वेनेति हेत्वर्थे तृतीया।

अध्यवसायसंस्कारहीनमेवेति अध्यवसायः ब्राह्मणत्वेन निश्चीयमानो यः संस्कारः

साधु। दत्तपरिग्रहानन्तरमौरसत्पत्तौ विभागे विशेषमाह—तस्मिन्निति। तस्मिन् दत्तके प्रतिगृहीते यद्यौरस उत्पद्येत, तदा दत्तकश्चतुर्थांशं लभते न समांशमित्यर्थः। अयमेव विधिः क्रीतादिष्वनुसन्धेयः। तस्य प्रदानविक्रयपरित्यागेष्वित्युपक्रमभेदेन वा व्यवस्थेति ध्येयम् ॥४९॥

तैत्तिरीयाणां तु विधिविशेषमाह बौधायनः। पुत्रपरिग्रहविधिं व्याख्यास्यामः। शुक्रशोणितेत्याद्यन्यत्रानुज्ञानाद्भर्त्तु रित्येतदन्तं वसिष्ठेन समानम्। प्रतिग्रहीष्यन्नुपकल्पयते द्वे वाससी द्वे कुण्डले अङ्गुलीयकं चाऽऽचार्यं च वेदपारगं कुशमयं बर्हिः पर्णमयमिध्ममित्यथ बन्धूनाहूय मध्ये राजनि चाऽऽवेद्य परिषदि वाऽगारमध्ये ब्राह्मणानन्नेन परिविष्य ब्राह्मणवागालम्बेनोपविश्य पुण्याहं स्वस्त्यृद्धिमिति वाचयित्वाऽथ देवयजनोल्लेखनप्रभृत्या प्रणीताभ्यः कृत्वा दातुः समक्षं गत्वा पुत्रं मे देहीति भिक्षेत ददामीतीतर आह तं परिगृह्णाति धर्माय[1] त्वा गृह्णामि संतत्यै वा गृह्णामीत्यथैनं वस्त्रकुण्डलाभ्यामङ्गुलीयकेन चालंकृत्य परिधानप्रभृत्यग्निमुखं कृत्वा पक्त्वा

---

उपनयनादिः दद्रहितं कुर्यादित्यर्थः। विजातीय परिग्रहनिषेधादिति विजातीयस्य पिण्डोदकादिक्रियाया अनधिकारेण न्यायत एव विजातीयपरिग्रहप्रतिषेधादित्यर्थः। चतुर्थांशः चतुर्थभागैकभागं न समांशमिति न्यूनोपकारकत्वादिति शेषः। अयमेव विधिः चतुर्थभागैकभागविधिः। अनुसन्धेयः एकत्र दृष्टपरिकल्पनन्याये कल्प्य इत्यर्थः। न्यायमन्तरेणापि प्रकरणादेव तत्साधयति तस्येत्यादि उपक्रमस्य भेदेन दत्तकत्वक्रीतत्वापविद्धत्वरूपविभिन्नधर्मेण व्यवस्था चतुर्थभागैकभागव्यवस्था। तथा च प्रकरणबलात् दत्तके इत्यस्य उपलक्षणविधया क्रीतादिष्वपि व्यवस्था इति भावः। वाकारोऽत्र कल्पान्तरसूचनाय ॥४९॥

तैत्तिरीयाणान्त्विति। अत्र तैत्तिरीयग्रहणात् तच्छायिनामेव बौधायनोक्तरीत्या दत्तकग्रहणं कर्त्तव्यमन्येषान्तु न विशेषापेक्षा इति बोध्यम्। पर्णमयमिध्मं पर्णमेवाहुतिद्रव्यम्। ब्राह्मणवागालम्बेन ब्राह्मणकर्त्तृकपठितमन्त्रेण। आप्रणीताभ्यः प्रणयन-

---

१. धर्माय त्वा गृह्णामि संतत्यै त्वा गृह्णामीति।

जुहोति–यस्त्वा हृदा कीरिणा मन्यमान इति पुरोवाक्यामनूद्य यस्मै त्वं सुकृते जातवेद इति याज्यया जुहोत्यथ व्याहृतीर्हुत्वा स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानाद्दक्षिणां दद्त्येते च वाससी एते कुण्डले एतच्चाङ्गुलीयकं यद्येवं कृत्वौरसपुत्र उत्पद्यते तुरीयभागे सम्भवतीत्याह स्म बौधायनः ॥ ५० ॥

यत्तु वृद्धगौतमीयम्—

दत्तपुत्रे यथाजाते कदाचित्त्वौरसो भवेत् ।
पितुर्वित्तस्य सर्वस्य भवेतां समभागिनौ ॥ इति ।

तदस्य गुणवत्त्व औरसस्य च निर्गुणत्वे वेदितव्यम् । यथाजात इति

---

पर्यन्तं भिक्षेत याचेत । ददानीति अहं ददानीति इति इतरः ग्रहीतुरितरो दाता इत्याह परिधानप्रभृति वस्त्रपरिधानपर्यन्तं अग्निमुखं अग्निसन्मुखं यथा तथा कृत्वा इत्यर्थः । पक्त्वा जुहोति चरुं पक्त्वा तेनैव जुहोति । पुरोऽनुवाक्यमनूद्य यस्त्वाहृदा इत्यादि मन्त्ररूपं अग्नेः पुरोऽनुवाक्यं अनूद्य अग्रे पठित्वा । तथा च तैत्तिरीयसंहिताभाष्ये अग्नेः पुरोऽनुवाक्यमाह— यस्त्वा हृदा कीरीशामन्यमानो मर्त्यो मर्त्यो जोहवीमि । जातवेदो यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमस्याह इति अग्रे पठित्वा । यस्मै त्वं सुकृते जातवेद इति याज्यया एतन्मन्त्ररूपयाज्यया होमः कार्यः । तथा च तैत्तिरीयसंहिताभाष्ये अथ याज्यामाह—यस्मैत्वं सुकृते जातवेद ॐ लोकं अग्ने कृणवः स्योनं सपुत्रि रैं वीरवन्नं गोमन्तं न शतं स्वस्ति । आधेनुवरप्रदानादिति धेनुरेव वरः प्रधानं तस्य प्रदानं तस्मात् आधेनुवरप्रदानात् धेनुवरप्रदानमारभ्य इत्यर्थः । तथा च तैत्तिरीयारण्यक २ प्रपाठक सप्तदशानुवाकीयाश्रुतिः—वरो दक्षिणा वरेणैव वरं स्पृणोति आत्मा हि वरः । पक्षद्वयेऽपि दक्षिणां विधत्ते वरो दक्षिणा स्पृणोत्यात्मा हि वर इति गौर्वै वर इति सूत्रकारेण उक्तत्वात् गौरेव दक्षिणावरेण श्रेष्ठेन गोद्रव्येण वरं श्रेष्ठं ब्राह्मणं स्पृणोति प्रीणयत्यन्त टीका ॥ ५० ॥

तुरीयभागविधायकाभ्यां वशिष्ठबौधायनवचनाभ्यां समभागविधायकगौतमवचनविरोधं विषयविभागेन परिहर्त्तुमाशङ्कयते यत्त्विति । गुणवत्त्वे अत्यन्तोत्कृष्टगुणवत्त्वे इत्यर्थः । अतएव यथाजातविशेषणसार्थक्याय बहुगुणवानिति वक्ष्यति ।

विशेषणात् । यथा गुणानां जातं समूहो यस्मिन्निति यथाजातो गुणसमूहवानित्यर्थः । यथाशब्दस्य गुणयोगे सादृश्ये च शक्तत्वात् ।

अतएव मनुः—

उपपन्नो गुणैः सर्वैः पुत्रो यस्य तु दत्रिमः ।
स हरेतैव तद्रिक्थं संप्राप्तोऽप्यन्यगोत्रतः ॥

---

तथा च उत्कृष्टगुणवत्त्वे निर्गुणौरसेन सह समांशिता किञ्चिद्गुणवत्त्वे कात्यायनवचनात् तृतीयांशिता यथा—

उत्पन्ने त्वौरसे पुत्र तृतीयांशहराः स्मृताः ।
सवर्णा असवर्णास्तु ग्रासाच्छादनभागिनः ॥ इति ।

निर्गुणत्वे चतुर्थांशभागिता इति ग्रन्थकर्त्तुराशयः ।

मनुनैकमूलत्वात् अव्ययानामनेकार्थत्वमङ्गीकृत्य यथाजातमित्यत्र यथाशब्दस्यार्थं विषदीकरोति यथागुणानामित्यादि । गुणयोगे सादृश्ये चेति चकारोऽनुक्तसमुच्चयवाची अप्यर्थे । ततश्च गुणयोगे सादृश्येऽपि शक्तत्वादित्यर्थः । अन्यथा उक्तसमुच्चयमात्रार्थस्वीकारे अव्ययानां नानार्थताव्याघातः स्यात् । न च गुणयोगे सादृश्ये च शक्तिरन्यत्र लक्षणा इति वाच्यम् ? नानाधर्मावच्छिन्नशक्तस्य पदस्य नानार्थत्वात् । अन्यथा गङ्गादिशब्दानामपि क्वचित्तीराद्यर्थप्रतीतेः नानार्थता स्यात् । परन्तु नानार्थशब्दानामपि गुरुधर्मावच्छिन्ने शक्तिर्नाङ्गीक्रियते गौरवादिति तत्त्वम् । अपि च यथाजात इत्यत्र यथाशब्दस्य गुणवाचित्वे स्वतन्त्रप्रमाणं नास्ति, प्रत्यत विरोधिप्रमाणमपि दृश्यते । तथा चामरः—

"अज्ञमूढयथाजातमूर्खवैधेयबालिशा" इति ।

न च तथापि गुणयोगे सादृश्ये चेति कथं द्वयोरुपादानमिति वाच्यम् ? प्रयोजनवशात् गुणयोगग्रहणस्य प्रसिद्धार्थत्वात् सादृश्यग्रहणस्य च समुचितत्वात् । यत एव अत्यन्तगुणतो दत्तकस्य निर्गुणौरसेन सह समांशिता अतएवेत्यर्थः । क्वचित्तु अनेनात्यन्तसगुणानां दत्तकानां औरसेन सह समांशभागित्वप्रतिपादनात् । एवं त्वौरस उत्पद्यते तुरीयभागे सम्भवति इति बौधायनवचनस्य सामान्यसगुणविषयत्वमवतिष्ठते । तथा च औरसत्वे निर्गुणदत्तकस्य नाधिकारिता इति वर्णयति तन्न तथात्वे तृतीयभागविधायककात्यायनवचनस्य निर्विषयतापत्तेः । अतएव लोकेऽपि निर्गुणस्य इदानीन्तनीयस्य दत्तकस्य औरसेन सह विभागो दृश्यते । कुल्लूकभट्टोऽपि गोविन्दराजमतदूषणावसरे

इत्यौरसाभावे सर्वरिक्थग्रहणमुक्तवान् । तद्युक्तमेवौरसे सत्यर्धांशहरत्वम् । परिग्रहविध्यभावे विशेषमाह स एव—

अविधाय विधानं यः परिगृह्णाति पुत्रकम् ।
विवाहविधिभाजं तं कुर्यान्न धनभाजनम् ॥ इति ।

परिग्रहविधिं[1] विना परिगृहीतस्य विवाहमात्रं कार्यं न धनदानमित्यर्थः । किन्तु तत्र पत्न्यादय एव धनभाजः । विधिं विना तस्य पुत्रत्वानुत्पादनात् ॥ ५१ ॥

---

एवमेवाह । यथा कृत्रिमादीनां निर्गुणानामपि पितृरिक्थभागित्वं दत्तकस्य तत् पूर्वपठितस्यापि सर्वगुणसम्पन्नस्यैव न निर्गुणस्येत्यन्याय्यत्वादिति चन्द्रिकाकारोऽपि यथा अतश्च दत्तकग्रहणानन्तरमौरसोत्पत्तौ तदौरसचतुर्थांशविधिर्वसिष्ठोक्तो दत्तकविषये ज्ञेयः । तथा देवलकात्यायनवचने तृतीयांशग्रहणविधिरुत्कृष्टगुणदत्तकविषयो वाच्य इति । एतेन चन्द्रिकाकारमते वृद्धगौतमवचनं अत्युत्कृष्टगुणवत्त्वेऽवश्यं वाच्यम् ? ततश्च परिशेषात् चतुर्थभागविधिर्निर्गुणदत्तकविषय एव तन्मते प्रतिभाति । यत्तु—

औरसक्षेत्रजौ पुत्रौ पितृरिक्थांशभागिनौ ।
दशापरे तु क्रमशो गोत्ररिक्थांशभागिना ॥ इति मनुवचनम् ।

तस्यायमाशयो ग्रन्थकारमते वर्णनीयः । तथा च—

पुत्रान् द्वादश यानाह नृणां स्वायम्भवो मनुः ।
तेषां षड्बन्धुदायादा षड्दायादबान्धवाः ॥

इत्यनेन मनुना प्रागेव सर्वप्रकारपुत्राणां भागविधिरुक्तः । ततश्च एकदा तत्प्रसक्त्याशंकायां अनेन वचनेन क्रममात्रमुक्तम् । तेनायमर्थः व्रीहियवपाकौ चेति पितरौ भ्रातरस्तथा इत्यादिवत् विभिन्नकालिकानामपि द्वन्द्वसमाससम्भवात् औरसक्षेत्रजौ क्रमशः पितृरिक्थस्य भागिनौ । अव्ययानामनेकार्थत्वस्मरणात्तुरप्यर्थे अपरेऽपि दशपुत्रा क्रमशः पितृरिक्थभागिन इत्यर्थः । यत्तु सर्वणाजोऽप्यगुणवान् नार्हः स्यात् पैतृके धने तत्पिण्डदाः श्रोत्रिया ये तेषां तदभिधीयते इति । अत्र अगुणवान् गुणविरुद्धदोषवान् इति तस्यार्थो वाच्यः । अन्यथा उत्तरार्द्धे तत्पिण्डदा श्रोत्रिया ये तेषां तदभिधीयते इत्यनुपपन्नं स्यात् । अतएव इदानीन्तनानां सिद्धनिर्गुणानां भागविधौ

---

१. परिग्रहविधिं विना गृहीतस्य विवाहमात्रं कार्यं न धनदानमित्यर्थ इति ।

अतएव वृद्धगौतमः—

स्वगोत्रेषु कृता ये स्युर्दत्तक्रीतादयः सुताः ।
विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते ॥ इति ।

विधिनैव गोत्रतां यान्तीति नियमः । दानादिविधीनां दत्तकादिलक्षणान्तर्गतत्वेन स्वरूपनिर्वाहकत्वात् । यथोक्तं यमद्भिः पुत्रमापदीति । अप्पूर्वग्रहणं सकलदानविधेरुपलक्षणम् । तेन च प्रतिग्रहविधिरप्याक्षिप्तो भवति । सम्प्राप्तोऽप्यन्यगोत्रत इति मानवात् सम्यग्विधिना प्राप्त इत्यर्थः । क्रीतादय इत्यादिशब्देन कृत्रिमापविद्धस्वयंदत्तानां ग्रहणम् ।

क्षेत्रजादीन्सुतानेतानेकादश यथोदितान् ।
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥

इति मनुना यथोदितानित्यनेन तत्तल्लक्षणसूचितविधिविशिष्टानामेव पुत्रप्रतिनिधित्वाभिधानात् । अतएव कृत्रिमलक्षणे सदृशं तु प्रकुर्याद्यमिति

---

न कस्यापि विप्रतिपत्तिरिति दिक् । स एव मनुरेव । विधानं विना शौनकवसिष्ठायुक्तपरिग्रहविधिं विना विवाहविधिभाजमिति । अत्रविधिपददर्शनात्—

गोत्ररिक्थे जनयितुर्न हरेद्दत्रिमः सुतः ।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥

इत्यनेन मनुना दानमात्रेण जनकगोत्रादिपरित्यागविधानाच्च विधानं विना गृहीतस्य दत्तकस्य दासत्वेऽपि गृहीतृगोत्राद्युल्लेखेन विवाहः प्रतीयते । ननु तादृशस्य दत्तकस्य धनाधिकाराभावे तदानीं को गृह्णीयात् इत्यत आह, किन्तु तत्र पत्न्यादय एवेति परिग्रहीतुरिति शेषः । तदानीं पत्न्यादीनां धनाधिकारे प्रमाणं दर्शयति पुत्रत्वानुत्पादादिति । तथा च पुत्रादय एव पत्न्यादीनां बाधकाः तदभावादेव अपुत्रधने पत्नीदुहितरश्चैवेत्यादियाज्ञवल्क्यवचनात् पत्न्यादीनामेवाधिकारस्य न्याय्यत्वादिति भावः ॥५१॥

अतएवेति । यत एव विधानं विना गृहीतस्यापि न पुत्रत्वं अतएव इत्यर्थः । गोत्रतां सन्ततित्वं सन्ततिर्गोत्रजननकुलान्यभिजनान्वय इत्यमरोक्तेः । स्वरूपनिर्वाहकत्वात् पुत्रत्वसम्पादकत्वात् । तेन च सकलदानादिविधेरुपलक्षणेन च आक्षिप्तो भवति आकांक्षितो भवति । मनुवचनस्थसंशब्दस्य तात्पर्यं विवृणोति सम्यग्विधि-

प्रशब्देन, अपविद्धलक्षणे यं पुत्रं परिगृह्णीयादिति परिशब्देन, स्वयंदत्तलक्षणे चाऽऽत्मानं स्पर्शयेद्य इति दानापरपर्यायस्पर्शनशब्देन विधिपरिग्रह एव कृतः। तदभिप्रेत्यैव वसिष्ठेनापि तस्य दानविक्रयपरित्यागेषु मातापितरौ प्रभवत इत्युपक्रम्य परिग्रहविधिरभिहितः।

पुत्रं परिग्रहीष्यन्निति परिग्रहवचनेन च कृत्रिमस्वयंदत्तपरिग्रहेऽप्येष विधिरनुसन्धेयः। मनुना तत्तदुपसर्गेण सूचनात्। तस्मादेषां पञ्चानां पुत्राणां शौनकवसिष्ठाद्यन्यतमविधिपरिग्रहेणैव पुत्रत्वम् नान्यथा। यथा क्षेत्रज उपपादितं मनुयाज्ञवल्क्याभ्याम्—

---

नेत्यादि। अव्ययानामनेकार्थत्वादितिशेषः। तत्तल्लक्षणसूचितविधिविशिष्टानामेव दत्तकादिलक्षणघटकोपसर्गसूचितपरिग्रहविधिशिष्टानामेवेत्यर्थः। अतएव विधिपरिगृहीतस्यैव प्रतिनिधिपुत्रत्वादेव। कृत्रिमलक्षणे इति—

सदृशन्तु प्रकुर्याद् यं गुणदोषविचक्षणम्।
पुत्रं पुत्रगुणैर्युक्तं सज्ञेयः कृत्रिमः सुतः॥

इति मनूक्तकृत्रिमलक्षणे अपविद्धलक्षणे—

मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा।
यं पुत्रं परिगृह्णीयात् अपविद्धः स उच्यते॥

इति मनूक्तापविद्धलक्षणे। स्वयंदत्तलक्षणे च—

मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात्।
आत्मानं स्पर्शयेद् यस्मै स्वयंदत्तस्तु स स्मृतः॥

इति स्वयंदत्तलक्षणे च। चकारात्—

क्रीणीयात् यस्त्वपत्यर्थं मातापित्रोर्यमन्तिकात्।
स क्रीतकसुतस्तस्य सदृशोऽसदृशोऽपि वा॥

इतिमनूक्तक्रीतकलक्षणे च। स्पर्शनशब्देन च दानार्थकस्पर्शनशब्दसामर्थ्येन चकारात् क्रयणशब्दसामर्थ्येन च। तथा च यद्यपि स्पृशेत् क्रीणीयात् इत्यादौ उपसर्गाभावात् विशिष्टार्थप्रतीत्यनुपपत्तिस्तथापि—

बहूनामेकधर्माणामेकस्यापि यदुच्यते।
सर्वेषामेव तत्कुर्यादेकरूपा हि ते स्मृता॥

नियुक्तायामपुत्रायां पुत्रो जातोऽविधानतः ।
नैवार्हेत् पैतृकं रिक्थं पतितोत्पादितो हि सः ॥
( मनुस्मृतिः ९।१४४ )

नियुक्तौ यौ विधिं हित्वा वर्त्तेयातां तु कामतः ।
तावुभौ पतितौ स्यातां स्नुषागगुरुतल्पगौ ॥
( मनुस्मृतिः ९।६३ )

इत्यादिविध्यन्वयव्यतिरेकानुसरणात् ॥ ५२ ॥

यत्तु मिताक्षराटीकायां सुबोधिन्यां तच्च स्वत्वं पुत्रत्वादिवल्लौकिकं मन्यन्ते वृद्धा इत्यभिहितं तदुक्तविरोधात्, अथ दत्तक्रीतकृत्रिमपुत्रिकापुत्राः परपरिग्रहेणाऽऽर्षेण येऽत्र जातास्तेऽसंगतकुलीनाद्व्यामुष्यायमाणा भवन्तीति

---

इति वचनात् धातूनामनेकार्थत्वाच्च विशिष्टार्थप्रतीतिरिति भावः। कृत्रिमस्वयंदत्तादिपरिग्रहेऽपि इत्येव पाठः। आदिपदरहितपाठस्तु प्रामादिकः। आदिना क्रीतापविद्धयोर्ग्रहणम्। अत उपसंहारे पञ्चानां ग्रहणमुपपद्यते। विधिरनुसन्धेयः परिग्रहविधिः कल्प्य इत्यर्थः। तथा च तस्य प्रदानविक्रयपरित्यागेषु इत्युपक्रम्य विदितेन पुत्रं परिग्रहीष्यन्नित्यादिना प्रकरणबलात् दत्तकपदस्य उपलक्षणविधया पञ्चस्वेव परिग्रहविधिरनुष्ठेय इति भावः। तत्तदुपसर्गेण धातूनामनेकार्थत्वेन च सूचनादिति परिग्रहविधेरिति शेषः। पञ्चानां दत्तककृत्रिमक्रीतापविद्धस्वयन्दत्तानाम्। शौनकवसिष्ठान्यतरेति। यद्यपि तैत्तिरीयशाखिनां बौधायनोक्तपरिग्रहविधेरावश्यकत्वात् अन्यतरकथनमनुपयुक्तं तथापि वसिष्ठबोधायनयोः प्रधानीभूतमहाव्याहृतिहोमैक्यात् तैत्तिरीयशाखिनामपि वशिष्ठोक्तप्रकारेण परिगृहीतेऽपि दत्तकत्वसिद्धिर्भवत्येवेति ज्ञापनार्थमन्यतरकथनमुपपद्यते। वस्तुतः स्वशाखाश्रयमुत्सृज्य इत्यादिपरिशिष्टवचनात् बह्वृचां शौनकोक्तविधिः तैत्तिरीयानां बौधायनोक्तविधिः। अन्येषां तु वसिष्ठोक्तविधिरन्योक्तविधिर्वा समुचित इति तत्त्वम्। विधानं विना पुत्रत्वासिद्धौ दृष्टान्तयति यथेति। अन्वयव्यतिरेकानुसरणादिति। तथा च विधानसत्त्वे वैधपुत्रत्वेन यथा क्षेत्रजानां पितृधनाधिकारः तद्व्यतिरेकादनधिकारः तथात्रानुसरणीयमिति भावः ॥५२॥

विधानं विना पुत्रत्वं न सिध्यति इति व्यवस्थापितं तेन सह विरोधमाशंक्यते यत्त्विति। पुत्रादिवत् औरसपुत्रादिवत्। तथा च यथा जातमात्रेण पुत्रोऽयं

पैठीनसिनाऽऽर्षेण ऋष्युक्तेनैव परपरिग्रहेण पुत्रत्वाभिधानाच्च विरुद्धमित्युपेक्षणीयम्। न संगताः कुलीना जनककुलीना येषां ते, ते च तेऽद्व्यामुष्यायमाणाश्चेति। य आर्षेण विधिना परिगृहीतास्ते जनककुलीनासंबद्धाः, अतएवाऽद्व्यामुष्यायमाणा मनुष्याणां भवन्तीत्यर्थः। यद्वा जनकपरिग्रहीत्रोर्द्वयोरपि संस्कारकत्वे द्व्यामुष्यायमाणत्वमित्यग्रे वक्ष्यमाणद्वाद्द्व्यामुष्यायमाणा इत्येव पाठोऽस्तु। मेधातिथिरपि दत्तकादिषु संस्कारनिमित्तमेव पुत्रत्वमाह—सत्यपि प्रयोग इन्द्रादिशब्दवल्लोकतोऽर्थातिशयाच्छास्त्रे चोत्पत्तिविधानाद्भार्यादिव्यवहारवत्पुत्रव्यवहारोऽवगन्तव्य इत्यादिग्रन्थसन्दर्भेण। तस्माद्दत्त-

---

ग्रहणमात्रेण दत्तकोऽयं व्यह्रियते तद्वत्। अत्र तु दृष्टान्तेन सह विरोध इति आशङ्कार्थः। उक्तवचनविरोधात्—

सगोत्रेषु कृता ये स्युर्दत्तक्रीतादयः सुताः।
विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते॥

इत्यादिवचनविरोधादित्यर्थः। गोत्रतां सन्ततित्वम्। पुत्रत्वाभिधानाच्चेति। पञ्चम्यन्तद्वयं उपलक्षणीयत्वे हेतुः। न सङ्गता शास्त्रनिषिद्धा इत्यर्थः। जनककुलीना जनककुलगोत्रस्वत्वसम्बद्धा इत्यर्थः। अकारप्रश्लेषपक्षे अद्व्यामुष्यायमाणपदवैयर्थ्यं स्यादित्यत आह यद्वेति। तत्पक्षे च संगता इति न सम्यक् गता इत्यर्थः। तथा च द्व्यमुष्यायणस्थले उभयस्वत्वसम्बन्धादितिभावः। स्वपोषकतया मेधातिथिमतं प्रमाणयति मेधातिथिरिति। संस्कारनिमित्तमेव संस्कारीनिमित्त यस्येति बहुव्रीहिणा संस्काराधीनमेवेत्यर्थः। प्रयोगे दानप्रतिग्रहादिमात्रेण योगार्थमादाय दत्तकादिव्यवहारे इत्यर्थः। योगार्थमात्रे दृष्टान्तमाह इन्द्रादिशब्दवदिति। यथा इदि परमैश्वर्ये इति धात्वर्थानुसारात् परमैश्वर्यवति इन्द्रपदव्यपदेशः। तथा लोकतो लौकिकप्रमाणमपेक्ष्य अर्थातिशयात् अभ्यर्हितत्वात् शास्त्रे चोत्पत्तिविधानात् शास्त्रोयोत्पत्तिविधितः व्याहृतिभिर्हुत्वा प्रतिगृह्णीयात् इत्यादिरूपात्। भार्य्यादिव्यवहारवत्। आदिना आहवनीयादिपरिग्रहः। यथाविवाहितस्त्र्यादिषु अलौकिकहोममन्त्राद्यङ्गयोगात् भार्य्यादिपदव्यवहारः, न तु विवाहितस्त्र्यादिमात्रे। अतएव स्मात्तः भार्य्यादिशब्दो हि अलौकिकाङ्गसङ्गेन अलौकिकसंस्कारयुक्तस्त्रीवचनः। पुत्रव्यवहारोऽवगन्तव्यः, अलौकिकहोममन्त्रसंस्कारादियोगेनैव दत्तकादिषु पुत्रत्वव्यपदेशोऽवगन्तव्यः नान्यथेति

कादिषु संस्कारनिमित्तमेव पुत्रत्वमिति सिद्धम्। [1]दानप्रतिग्रहहोमाद्यन्यतमाभावे तु पुत्रत्वाभाव एवेति ॥ ५३ ॥

इदानीमौरसदत्तकयोर्दत्तकाकृतविध्योश्च समवाये धनग्रहणमाह स एव—

तस्मिञ्जाते सुते दत्ते न कृते च विधानके।
तत्स्वं तस्यैव वित्तस्य यः स्वामी पितुरञ्जसा॥ इति।

तस्मिन्नौरसे सति यः सुतो जायते परिग्रहादिना तयोर्मध्ये तस्यैव तत्स्वं यः पितुर्वित्तस्याञ्जसा स्वभावेन स्वामी भवति, नान्यस्य। सत्यौरसे परिगृहीतस्य न धनभाक्त्वमित्यर्थः। पुत्रोत्पत्तावौरसाभावस्यापि विशेषणत्वात्।

---

भावः। संस्कारनिमित्तमेवेति। यथाविधिग्रहणोत्तरत्वविशिष्टसंस्कारनिमित्तमेवेत्यर्थः। दानप्रतिग्रहहोमाद्यन्यतमाभावे तु आदिना संस्कारपरिग्रहः। तथा च दानप्रतिग्रहवसिष्ठशौनकान्यतरोक्तहोमसंस्कारान्यतमाभावे तु इत्यर्थः॥ ५३॥

औरसदत्तकयोः औरसतदुत्पत्त्यनन्तरगृहीतदत्तकयोः। न कृते चेति वचनस्थचकारस्वरसादाह इदानीमिति। दत्तकाकृतविध्योः यथाविधिपरिगृहीतदत्तकाविधानकृतदत्तकयोः। स्वयमेव वचनार्थं परिष्करोति तस्मिन्नित्यादि। पुत्रोत्पत्तौ प्रतिग्रहादिना प्रतिनिधिपुत्रत्वसिद्धौ। औरसाभावस्यापि विशेषणत्वादिति—

"अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदा"

इत्यादिवचनादिति शेषः। एतत्तु औरसपुत्रानुमत्यभावे बोध्यम्। अन्यथा विश्वामित्रस्य देवरातादिपुत्रपरिग्रहानुपपत्तेः। दत्तक एव कृतविधानक इत्यादि। विधानस्यैव पुत्रोत्पादकत्वात् गौणपुत्रत्वसम्पादकत्वात्। एतेन कृतविधानकदत्तकग्रहणानन्तरं यथाविधिगृहीतस्यैव दत्तकस्य धनाधिकारः सिध्यति, न तु विधानं विना पूर्वगृहीतस्यापि दत्तकस्य।

अपि च यथाविधिदत्तकं गृहीत्वा यद्यपरोऽपि यथाविधि गृहीतो भवति तदा उभयोर्दत्तकयोर्धनाधिकारः शास्त्रसम्मतोऽपि नाधुनिकराजमन्मत इत्यवधेयम्। अन्येषु औरसादिषु दत्तकपरिग्रहात् दत्तकपरिग्रहात्परतः। न दत्त इति दत्तोऽत्रात्यन्तगुणवान्

---

१. तस्मादत्तकादिषु संस्कारनिमित्तमेव पुत्रत्वमिति सिद्धम्। दानप्रतिग्रहहोमाद्यन्यतमाभावे तु पुत्रत्वाभाव एवेतीति।

तथा दत्ते यथाविधिपरिगृहीते सति योऽकृतविधानकः पुत्रस्तयोश्च दत्त एव धनभाङ्नाकृतविधानक इत्यर्थः। विधानस्यैव पुत्रत्वोत्पादकत्वात्।

दत्तौरससमवाये न दत्तो ज्येष्ठांशभागित्याह स एव—

जातेष्वन्येषु पुत्रेषु दत्तपुत्रपरिग्रहात्।
पिता चेद्विभजेद्वित्तं नैव ज्येष्ठांशभाग्भवेत्॥ इति।

दत्तपरिग्रहानन्तरमौरसोत्पत्तावपि न दत्तो ज्येष्ठांशभागित्यर्थः। धर्मान्तरमप्याह मनुः—

गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा॥ इति।

दत्रिमः सुतो जनयितुर्गोत्ररिक्थे न भजेत्। तथा पुत्रं ददतः स्वधा दत्तपुत्रकर्तृकं श्राद्धं व्यपैति, यतो गोत्ररिक्थानुगः पिण्ड इति। एतेन[1] पुत्रत्वा-

किञ्चिद्गुणवतो निर्गुणस्य च तृतीयचतुर्थांशस्य वाचनिकत्वेन ज्येष्ठांशाप्रसक्तेः। ज्येष्ठांशोऽपि विंशोद्धाररूपो न तु द्व्यंशरूपः।

दत्तपुत्रे यथाजाते कदाचिदौरसो भवेत्।
पितुर्वित्तस्य सर्वस्य भवेतां समभागिनौ॥

इति वृद्धगौतमेनात्यन्तगुणवतो दत्तकस्य समभागविधानात् द्व्यंशाप्रसक्तेः। विंशोद्धारस्य तु अविभक्तद्रव्यात् पृथक्करणरूपतया भागवैषम्याप्रयोजकत्वादेवाप्रसक्तौ निषेध उपपद्यते। वस्तुतो द्व्यंशविधेः सोदरमात्रविषयतया वर्णितत्वात्। विंशोद्धारविधेस्तु—

समवर्णासु ये जाता सर्वे पुत्रा द्विजन्मनाम्।
उद्धारं ज्यायसे दत्त्वा भजेरन्नितरे समम्॥

इति बृहस्पतिना समवर्णाजातत्वेन सापत्न्यज्येष्ठस्यैवोक्तत्वात् दत्तके प्रसक्त्यभावेन नान्तरिक्षेऽग्निश्चेतव्य इतिवत् अत्यन्तनिषेधोऽयमिति तत्त्वम्। पुत्रत्वापादकक्रिय-

१. एतेन पुत्रत्वपादकक्रिययैव दत्रिमस्य प्रतिग्रहीतृधने स्वत्वं तत्सगोत्रत्वं च भवति। दातृधने तु दानादेव पुत्रत्वनिवृत्तिद्वारा दत्रिमस्य स्वत्वनिवृत्तिर्दातृगोत्रनिवृत्तिश्च भवतीत्युच्यत इति चन्द्रिकाकार इति।

पादकक्रियथैव दत्रिमस्य प्रतिग्रहीतृधने स्वत्वं तत्सगोत्रत्वं च भवति। दातृधने तु दानादेव पुत्रत्वनिवृत्तिद्वारा दत्रिमस्य स्वत्वनिवृत्तिर्दातृगोत्रनिवृत्तिश्च भवतीत्युच्यत इति चन्द्रिकाकारः।

ननु मनुवचनाज्जनकगोत्रनिवृत्तावपि प्रतिग्रहीतृगोत्रप्राप्तौ किं मानमित्यत आह बृहन्मनुः—

दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता।
पञ्चमी सप्तमी तद्वद्गोत्रं तत्पालकस्य च॥ इति।

दत्तकक्रीतादिपुत्राणां बीजवप्तुर्जनकस्य सपिण्डताऽस्त्येव, दानादिनाऽपि सा न निवर्त्तते। तस्य अवयवान्वयरूपतया यावच्छरीरं दुरुपनेयत्वात्। अनेनावयवान्वय एव सापिण्ड्यं न पिण्डान्वय इत्युक्तं भवति। पिण्डान्वयस्य व्यपैति ददतः स्वधेत्यपगमावगमात्। सा च सपिण्डता कियतीत्यपेक्षायामाह—पञ्चमीसप्तमीति। पञ्चानां पूरणी पञ्चमी। पञ्चपुरुषव्याप्तेत्यर्थः।

---

यैवेति क्रियासम्पाद्यपुत्रत्वेनैवेत्यर्थः। क्रियाया आशुविनाशित्वेन करणत्वानुपपत्तेः। दानादेव न तु प्रतिग्रहीतुः क्रियासहकारेण। चेति चकरात् श्राद्धकर्तृत्वादिनिवृत्तिरपि बोद्धव्या॥ ५४॥

बृहन्मनुवचनस्यांशविशेषक्रमेण धृत्वा स्वयमेव व्याकरोति दत्तक्रीतादिपुत्राणामिति। आदिना कृत्रिमादेर्ग्रहणम्। सपिण्डता इति। विवाहमात्रे इति शेषः। दानादिना, आदिना विक्रयादेः परिग्रहः। सा सपिण्डता। तस्याः सपिण्डतायाः यावच्छरीरं शरीरस्थितिपर्यन्तं दुरपनेयत्वादत्याज्यत्वात्। सा च सपिण्डता विवाहमात्रप्रतिषेधिका अवयवान्वयरूपा सपिण्डता इत्यर्थः। पञ्चमीसप्तमीति। मात्रवयवान्वयत्वेन मातामहपक्षे पञ्चमी, पित्रवयवान्यवत्वेन पितृपक्षे सप्तमी। तथा च विष्णुसूत्रम्—न समानप्रवरां भार्य्यां विन्देत मातृतस्त्वापञ्चमात् पितृतस्त्वासप्तमादिति। यत्तु केनचिदुक्तं स्मार्त्तास्तु पञ्चमीत्यधिकदोषाय इति वदन्ति। पितृमातृसम्बन्धा आसप्तमादविवाह्याः कन्यकाभवन्ति, आपञ्चमादन्येषामिति सुमन्तुवचनात् तत्स्मार्त्तग्रन्थानभिज्ञत्वेन। तथा च उद्वाहतत्त्वे स्मार्त्तः। यत्तु पितृभ्रातृसम्बन्धा आसप्तमादविवाह्याः कन्यका भवन्ति, आपञ्चमादन्येषामिति सुमन्तुवचने मातृकुलेऽप्यासप्तमत्वमुक्तम्, तद्वचनान्तरैकवाक्य-

एवं सप्तमी। गौतमोऽपि—ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमादिति। अत्रो बीजिग्रहणं दत्तकाद्युत्पादकानां सर्वेषामपि संग्रहाय न केवलं क्षेत्रजोत्पादकस्यैव।

य एतेऽभिहिताः पुत्राः प्रसङ्गादन्यबीजजाः।
यस्य ते बीजतो जातास्तस्य ते नेतरस्य तु॥

(मनुस्मृतिः ९।१८१)

इति स्मरणात्। तस्य ते पुत्रा इति पुत्रत्वप्रतिपादनं सापिण्ड्यप्रतिपादनार्थं न तु पुत्रत्वोत्पादनार्थम्। पुत्रान्द्वादश यानाहेत्यादि प्रतिगृहीतृपुत्रत्वप्रतिपादन-विरोधात्। नेतरस्य प्रतिग्रहीतुरित्यर्थः। नन्वेवं कन्यावदुभयत्रापि सापिण्ड्य-मास्तां प्रतिग्रहेण गोत्रवत्सापिण्ड्यस्याप्युत्पत्तेरिति चेत्। मैवम्।

स्वगोत्रेषु कृता ये स्युर्दत्तक्रीतादयः सुताः।
विधिना गोत्रतां यान्ति न सापिड्यं विधीयते॥

---

तया वरं तन्मातरञ्चादायैव गणनया बोध्यम्। सन्तानवर्जने तु न सप्तमत्वं किन्तु वचनान्तरैकवाक्यतया मातामहादिपञ्चमानामेव पञ्चमी ग्राह्या। अन्यथा नानाश्रुति-कल्पना स्यादित्याह। एवं सप्तमीति। पितृपक्षे सप्तमपुरुषविश्रान्ता इत्यर्थः। गौतम-वचनं प्रमाणयति गौतमोऽपीति। सप्तमादिति तु पितृबन्धुभ्यो बीजिनश्चोभाभ्यां सम्बुध्यते। तथा च बीजिनं पितरमारभ्य पितृबन्धूनारभ्य च सप्तमपुरुषपर्यन्त-मित्यर्थः। मातृबन्धुभ्यः मातरश्च तद्बान्धवश्च इत्येकशेषेण मातॄरादाय तद्बन्धूनादाय च पञ्चमपुरुषपर्यन्तमित्यर्थः।

तथा च नारदः—

आसप्तमात् पञ्चमात् बन्धुभ्यः पितृमातृतः।
अविवाह्या सगोत्रा च समानप्रवरा तथा॥

सापिण्ड्यप्रतिपादनार्थं विवाहमात्रसापिण्ड्यप्रतिपादनार्थम्। तथा च असपिण्डा च या मातुरसगोत्रा च या पितुरिति मनुना चकारसमुच्चितपितृसापिण्ड्यप्रतिषेधात् ते पितरः के इत्याकांक्षायां वचनान्तरेण पुत्रत्वप्रतिपादनमुखेन बीजिसामान्यानामेव वैवाहिकसापिण्ड्यप्रतियोगितया पितृत्वं सूचितम्। अन्यथा एतद्वचने पुत्रपदोपादानं

इतिवृद्धगौतमस्मरणविरोधात्। ये दत्तादयः सुताः स्वगोत्रेषु स्वगोत्रमध्ये कृतास्ते विधिना गोत्रतां संततित्वं यान्ति, परन्तु तैः सह विधिना सापिण्ड्यं न विधीयते नोत्पद्यत इत्यर्थः। स्वगोत्रेष्वपि सापिण्ड्यानुत्पत्तौ परगोत्रे सुतरां सापिण्ड्यानुत्पत्तिरुक्ता। युक्तं चैतत्। पित्रारब्धत्वेन भर्त्रा सहैकशरीरारम्भकत्वेन च यथोभयत्रापि सापिण्ड्यं सिध्यति, न तथा दत्तके पित्रारब्धत्वेऽपि प्रतिग्रहीत्रा सहैकशरीरारम्भकत्वाभावात्॥ ५५॥

अत एव देवलः—

धर्मार्थं वर्धिताः पुत्रास्तत्तद्गोत्रेण पुत्रवत्।
अंशपिण्डविभागित्वं तेषु केवलमीरितम्॥ इति।

केवलशब्देन सापिण्ड्यमेव निरस्तवान्। गोत्रांशपिण्डानां विधानात्। नन्वेतत्प्रकृतार्थानुपयोगि। धर्मपुत्रविषयत्वात्। तथा हि—तत्तद्गोत्रेण तस्य तस्यैव

---

व्यर्थं स्यात्। न च श्राद्धार्थं तदुपादानम्, वचनान्तरेणैव श्राद्धप्रतिपादनादिति। प्रतिग्रहीतुरित्यर्थ इति। एतदुपलक्षणं क्षेत्रिणोऽपि बोध्यम्, अन्यबीजत्वरूपहेतुतासाम्यात्। कन्यावत् दुहितृवदित्यर्थः। दुहितुर्यथा पितृकुले अवयवान्वयसापिण्ड्यम्। एवं विवाहानन्तरं भर्त्रा सहैकशरीरारम्भकत्वेन भर्तृसमानसापिण्ड्यं तद्वदित्यर्थः। सापिण्डस्य साप्तपौरुषिकसापिण्डस्य इत्यर्थः। गोत्रेषु सपिण्डेषु इत्यर्थः। अन्यथा प्रसक्त्यभावान्निषेधानुपपत्तेः। सापिण्ड्यानुत्पत्तिः कल्पनीयसापिण्ड्यानुपपत्तिरित्यर्थः। पित्रारब्धत्वेन मातापित्रोरवयवारब्धत्वेनेत्यर्थः। तथा च गर्भोपनिषदि—एतत् षाट्कौषिकं शरीरं त्रीणि मातृतः त्रीणि पितृतः त्वङ्मांसरुधिराणि मातृतः अस्थिस्नायुमज्जानः पितृतः। भर्त्रा सहेति पत्नी वै अर्द्धशरीरमिति श्रुतेः। अस्थिभिरस्थीनि मांसैर्मांसानि श्रुत्यन्तराच्चेति शेषः। उभयत्रापि पुत्रे भार्यायाञ्च। पित्रारब्धत्वेऽपि जनकारब्धत्वेऽपि प्रतिग्रहीत्रा सहेति पत्नीवत् दत्तकस्यैकशरीरारम्भकत्वबोधकप्रमाणाभावादित्यर्थः॥ ५५॥

अतएवेति। सपिण्डत्वनिषेधादेव तत्तद्गोत्रेण सहार्थे तृतीया। तथा च गोत्रेण सह अंशपिण्डविभागित्वमित्यन्वयः। अत्र केवलपदेन दत्तकस्य सापिण्ड्यं व्यावर्त्तते। परन्तु धर्मार्थमिति श्रुतेः दत्तकविधिना अपरिगृहीतस्य धर्मबुद्ध्या पालितस्य

गोत्रेण ये पुत्रवद्धर्मार्थं वर्धितास्तेषु पुत्रेषु केवलमंशपिण्डविभागित्वमेव न वर्धकसापिण्ड्यमित्यर्थः। तेनैतद्धर्मपुत्रस्यैव वर्धकसापिण्ड्याभावं बोधयति न दत्तकस्येति चेत्। मैवम् 'पुत्रान्द्वादश यानाह नृणां स्वायंभुवो मनु'रिति संख्याविरोधेन धर्मपुत्रानभ्युपगमात्। अभ्युपगमेऽपि वा पत्न्यादिष्वगणनेनांशभागित्वासम्भवादप्रसक्त्या सापिण्ड्यनिषेधासंगतेश्च। तस्माद्दत्तपुत्रविषयमेवैतत्। अंशभागित्वप्रदर्शनात्। तत्र चायमर्थः—धर्मार्थं स्वस्यालोकतापरिहारकधर्मसम्पत्त्यर्थं तत्तद्गोत्रेण जनकापेक्षया भिन्नगोत्रेणापि परिग्रहीत्रा पुत्रवत्पुत्रप्रतिनिधितया परिगृह्य ये पुत्रा वर्धितास्तेषु केवलं

---

पालकेन सह सापिण्ड्यं व्यावर्त्तते इत्याशंक्यते नन्वेतदिति। प्रकृतार्थानुपयोगीति। दत्तकसापिण्ड्यनिषेधार्थानुसन्दीयमानप्रमाणाप्रतिकुलेत्यर्थः। वर्धिताः पालिताः। वर्द्धकसापिण्ड्यं पालकसापिण्ड्यं भवतीतिशेषः। परिसंख्याविरोधेन पुत्राणां द्वादशत्वसंख्याकीर्त्तनविरोधेन। ननु भ्रातृपुत्रसपत्नीपुत्रादावपि पुत्रपदप्रयोगदर्शनात् द्वादशत्वसंख्याकीर्तनन्त्वसाधारणप्रतिनिधिपुत्राभिप्रायकमवश्यं वाच्यम्। अतो धर्माभ्युपगमेऽपि न विरोध इत्यत आह अभ्युपगमेऽपि वेति। अतो ननु नास्ति द्वादशसंख्याविरोधः। धर्मपुत्रस्य दत्तकेऽन्तर्भावादित्याह अभ्युपगमेऽपि वेति। कस्यचिदाभासवर्णनं न युक्तिसंगतम्। धर्मपुत्रस्य दत्तकान्तर्भूतत्वे अंगग्रहणस्य सिद्धत्वात्। अंशभागित्वासम्भवादिति मूलोक्तिविरोधापत्तेः। पत्न्यादिषु पत्न्याद्यधिकारी शृंखलासु। ननु पत्न्याद्यधिकारिगणेष्वगणनेऽपि अंशपिण्डविभागित्वमिति देवलवचनादेव धनाधिकारो भविष्यति कथमंशभागित्वासम्भव इत्यत आह अप्रसक्त्या इत्यादि। तथा च सम्बन्धिशब्दस्य स्वसम्बन्ध्युपस्थापकत्वनियमात् गोत्रपदेनैव सगोत्रोपस्थितौ तत्तद्गोत्रेणेत्यत्र तत्तत्पदवैयर्थ्यापत्या भिन्नगोत्रविषयत्वमवश्यं वाच्यम्। ततश्च भिन्नगोत्रे शास्त्राभावादेव धर्मपुत्रस्य सापिण्ड्यप्रसक्तिर्न घटत इति भावः। निषेधासङ्गतेः। अंशपिण्डमात्रभागित्वोक्त्या कल्पनीयसापिण्ड्यनिषेधासङ्गतेरित्यर्थः। अंशभागित्वप्रदर्शनादिति। तथा च विधानं विना गृहीतस्यांशित्वनिषेधादितिभावः। विधानं विना गृहीतस्य धर्मपुत्रस्यांशपिण्ड्यभागित्वे नानामुनिवचनविरोधमाशंक्य अविरोधाय स्वयमेव देवलवचनं व्याचष्टे तत्र चायमर्थ इत्यादि। न सापिण्ड्यं न अवयवान्वयसाप्तपौरुषिकसापिण्ड्यमित्यर्थः। पिण्डान्वयत्रैपुरुषिकसापिण्ड्यस्य वक्ष्य-

परिग्रहीत्रंशपिण्डविभागित्वमेव न सापिण्ड्यमिति। तस्मादत्र दत्तके[1] न परिग्रहीतृसापिण्ड्यं किन्तु जनककुल एव साप्तपौरुषं सापिण्ड्यमिति सिद्धम्॥ ५६॥

ननु तच्छब्देन सन्निधानाद्वीप्सापेक्षितश्रुतबहुत्वानां पुत्राणमेव परामर्शो गम्यते न वर्धकानां पुत्रिणां व्यवहितत्वात्, सन्दिग्धबहुत्वानां वीप्सान्वया-

---

माणत्वात्। न परिगृहीतृसापिण्ड्यं अवयवान्वयरूपं साप्तपौरुषिकमित्यर्थः सिद्धमिति विवाहमात्रे इति शेष॥ ५६॥

तत्तद्गोत्रेणेत्यत्र जनकभिन्नग्रहीतृगोत्रेणेति व्याख्यातम्। तच्च न सम्भवति देवलवचने पुत्रास्तत्तद्गोत्रेणेत्यत्र पुत्रपदसन्निधानेनासत्त्यतिरेकात् वीप्सिततत्तत्पदेन पुत्रा एव परामृश्यन्ते। तथा च पुत्रा निजगोत्रेण वर्द्धिता न तु वर्द्धकगोत्रेण इत्याशङ्क्यते नन्वित्यादि तच्छब्देन तत्तद्गोत्रेणेत्यत्रोपस्थिततच्छब्देन तृतीयाया जन्यत्वमर्थः। सन्निधानात् सन्निधानेन आसत्त्यतिरेकात् वीप्सापेक्षितश्रुतबहुत्वानामिति। एतत् पुत्राणां विशेषणम्। वीप्सापेक्षितं वीप्साघटितपदजन्योपस्थितिप्रयोजकीभूतं श्रुतं बहुत्वं येषां तेषामित्यर्थः। परामर्शः उपस्थितिविषयत्वम्। तथा च तच्छब्दजन्योपस्थितिविषयत्वं पुत्राणामेवावगम्यते महावाक्यार्थबोधः। व्यवहितत्वादिति। एतेन सन्निहितप्रक्रान्तवाचित्वमेव तदादिपदानामिति पूर्वपक्षयितुरभिप्रायः। तथा च वर्द्धिता इति क्रियायाः कर्त्राकांक्षायां अध्याहारेण कर्तृपदोपस्थितौ उपस्थितिविलम्बेनव्यवहितत्वादित्यर्थः। ननु प्रक्रान्तवाचित्वमेव तदादिपदानां लाघवात् न तु सन्नि-

---

१. न्यायालयानां सापिण्ड्यविचारप्रसङ्गोऽतीवाल्पवारं प्राप्नोति। दत्तकपुत्रोऽयं प्रतिग्रहीतृकुलगत एको घटकावयवः सम्पन्न इति हेतोस्तस्य प्रतिग्रहीतृगोत्रं प्राप्नोति। इदं पूर्वमुक्तम्। सापिण्ड्यं तु द्विप्रकारकं भवति। तत्रैकं शरीरसंबन्धाद् द्वितीयं पिण्डसम्बन्धादुत्पद्यते। प्रथमप्रकारकं सापिण्ड्यं साप्तपौरुषं द्वितीयं तु त्रिपुरुषं भवति। दत्तकपुत्रशरीरारम्भस्य जनककुलाज्जातत्वेन जनककुले तस्य साप्तपौरुषं सापिण्ड्यं भवति। यद्यपि स पुत्रो दत्तकत्वं प्राप्तस्तथाऽपि तत्सापिण्ड्यस्य निवृत्तिर्भवितुं न शक्नोति। तेन जनककुलीयसपिण्डकन्यया सह तेन स्वविवाहः कर्तुमशक्यः। तथैव जनककुलेऽवस्थितौ सत्यां यः पुत्रस्तस्य विरुद्धसम्बन्धादिकारणेन दत्तकत्वेनाग्राह्यः स पुत्रः प्रतिग्रहीतृकुलप्रविष्टस्यापि तस्य दत्तकत्वेनाग्राह्य एव भवति। ( मुदिया वि० अप्पन् १८५८ मद्रास सदर ११७ )।

योग्यत्वात्, आत्मनि परोक्षवन्निर्देशकतच्छब्दान्वयानुपपत्तेरपरोक्षवन्निर्देशक-स्वशब्दस्यैवौचित्याच्चेति चेन्नैवं वादी।

तदादिसर्वनाम्नां बुद्धिस्थे शक्तिरितिन्यायेन बुद्धिस्थतायाः प्राधान्या-यत्तत्वात्प्राधान्यस्य च संस्कार्यत्वेन फलान्वयेन वा सम्भवात् "पितुः पुत्रेण कर्त्तव्या पिण्डदानोदकक्रिया" इत्यादिवचनपर्यालोचनया पुत्रकर्तृकपिण्ड-दानादिक्रियया पितुः संस्कार्यत्वावगमात्। पुत्रेण लोकाञ्जयतीत्यादिवचन-बलात्पितुरेव पुत्रकरणकभावना भाव्यलोकरूपफलयोगितया प्राधान्यात्तच्छ-ब्देन परामर्शो युज्यते। यथा तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षेत्यत्रा-ऽऽमिक्षायाः संसृष्टदधिपयोरूपत्वेन सान्नाय्यविकारत्वे स्थिते पूर्वपक्षिणा सप्तमीनिर्दिष्टस्य पयसो गुणत्वेन द्वितीयानिर्दिष्टस्यदध्नः प्रधानत्वात्तस्यैव

---

हितत्वापेक्षा इत्यत आह सन्दिग्धबहुत्वानां सन्दिग्धं बहुत्वं येषां वर्द्धकाना-मिति शेषः। तथा च वीप्साज्ञापितबहुत्वविशिष्टतत्पदजन्यपदार्थोपस्थितौ बहुत्व-विशिष्टप्रक्रान्तस्यैवोपस्थितिर्न्याय्या। ततश्च क्रियापदान्वयानुरोधेन कर्तृपदाध्याहारे-ऽपि बहुत्वविशिष्टतादृशपदाध्याहारे प्रमाणाभावात् बहुत्वमस्य सन्दिग्धमिति भावः। वीप्सान्वययोग्यत्वात् वीप्साघटिततत्पदजन्योपस्थितिविषयत्वायोगात्। ननु बहुत्व-विशिष्टमेव कत्कर्तृपदमत्राहार्य्यमतः कथमन्वयानुपपत्तिरित्यत आह आत्मनि परोक्ष-वन्निर्देशकतच्छब्दान्वयानुपपत्तेरिति आत्मनि वर्द्धकरूपात्ममात्रोपस्थितौ परोक्षवन्निर्देश-केति। अवाचकानुमितार्थसामान्यग्राहकेत्यर्थः। तच्छब्दान्वयानुपपत्तेः अन्वयायोग्य-तत्पदप्रयोगानुपपत्तेरित्यर्थः तनु कस्यैवयुक्तत्वमित्यत आह अपरोक्षवन्निर्देशकेति। प्रत्यक्षे साक्षात् स्वार्थोपरिस्थितिग्राहकेत्यर्थः।

औचित्यादिति। तथाच तत्तद् गोत्रेणेत्यत्रानुमितार्थग्राहकतत्तत्पदमपहाय स्वस्व-गोत्रेणेत्येवं स्ववाचकपदप्रयोगस्य न्याय्यत्वमिति भावः। सर्वत्र प्रकरणनियमाभावात् वक्तृबुद्धिस्थविशेषधर्मावच्छिन्न एव तदादिपदशक्तिर्लाघवादित्यभिप्रेत्य सिद्धान्तयति नैव वादी। बुद्धिस्थे वक्तृबुद्धिस्थविशेषधर्मावच्छिन्ने इत्यर्थः। प्राधान्यायत्तत्वात् प्रधानत्वाधीनत्वात्। तथा च नानाव्यक्तेरपि बुद्धिस्थत्वेऽपि। बुद्धिस्थत्वेन प्रधानमेव-गृह्यत इति भावः। तत्र कस्य प्राधान्यं तदेव हेतूपन्यासेन निश्चिनोति संस्कार्यत्वेने-

तच्छब्देन परामृष्टस्य देवतासम्बन्धात् सायंदोहविकारत्वमित्युक्ते सिद्धान्तिना कर्मीभूतेनापि दध्ना पयसो व्याप्यमानत्वेन दध्ना पयः संस्कुर्यादिति वाक्यार्थपर्यवसानेन पयस एव प्रधानत्वं तस्यैव तच्छब्देन परामृष्टस्य देवता-सम्बन्ध इति प्रातर्दोहविकारत्वं साधितम् । तद्वत्प्रकृतेऽपि पितुः संस्कार्यत्वेन प्रधानत्वात्तच्छब्देन तस्यैव परामर्श इति युक्तम् ।

नन्वेवं दत्तकस्य प्रतिग्रहीतृकुले सापिण्ड्याभावे कथं विवाहो न स्यादिति चेत् । सत्यम् । सगोत्रत्वादिति ब्रूमः । तर्हि तद्भगिन्यादिसन्ततौ विवाहोऽस्तु, सगोत्रत्वसपिण्डत्वयोरभावात् । न चाऽऽहत्य निषेधकं वचन-मुपलभामहे ।

---

त्यादि । संस्कार्यत्वं श्राद्धोद्देश्यकत्वम् । फलान्वयेन फलं अलोकतापरिहारः । तस्यान्व-येन उद्देश्यत्वेन चेत्यर्थः । वाकारः समुच्चये । वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये इति स्मरणात् । सम्भवादिति प्राधान्यस्येत्यनेन सम्बन्धः । पितुरेवेति । एवकारात् पुत्रव्यवच्छेदः । फलोत्त्वादिका प्रक्रियाभावना । अलोकरूपफलेति । अलोकतापरिहार-रूपफलेत्यर्थः । तच्छब्देन परामर्शो युज्यते । तत्पदजन्योपस्थितिविषयत्वं युक्तं भवति तदा बुद्धिस्थप्रधानस्योपस्थितौ दृष्टान्तमाह यथेति । दध्यानयति दधिक्षिपति । संसृष्ट-दधिपयोरूपत्वेन मिश्रितदधिपयोरूपत्वेन । सान्नाय्यविकारत्वे तप्तपयोधिकरकणकदधि-संभोगजन्यविकारीभूतहविर्द्रव्यत्वे अस्य आमिक्षाया इति पूर्वत्र सम्बन्धः । गुणत्वेन अङ्गत्वेन । तस्यैव दध्न एव । तच्छब्देन सा वैश्वदेव्यामिक्षा इत्यत्र सेतितच्छब्देन परामृष्टस्य उपस्थितस्य देवता सम्बन्ध इति । देवतोद्देशेन हविर्द्रव्यत्वेन त्यागसम्बन्ध इत्यर्थः । सिद्धान्तयति सायमित्यादि । दुह्यते यदिति कर्मव्युत्पत्त्या दोहो दुग्धम् , तस्य विकारः तस्य भावः । अतएव भट्टवार्त्तिकं 'पय एव घनीभूतं आमिक्षेत्यभिधीयते । तस्य विकारत्वमित्युक्ते श्रुत्यन्तरेणोतिशेषः । कर्मीभूतेन अङ्गीभूतेन व्याप्यमानत्वेन इत्यस्य विवरणं दध्ना पय इत्यादि साधितं मनाधिताम् अस्य तु सिद्धान्तिना इत्यनेन सम्बन्धः । तस्यैव पयस एव परामर्श उपस्थितिविषयत्वं तद्वदिति । तथा च यथा दध्नः सन्निहितत्वेऽपि प्राधान्यात् व्यवहितस्यापि पयसस्तदा परामर्शः तथा प्रकृतेऽपि पुत्राणां सन्निहितत्वेऽपि प्राधान्यात् वर्द्धकानामेव तदा परामर्शः । सापिण्ड्याभावे वैवाहिकसाप्तपौरुषिकसापिण्ड्याभावे । सगोत्रत्वादिति ब्रूम इति । तथा च—

प्रत्युत—सावित्रीं यस्य यो दद्यात्तत्कन्यां न विवाहयेत् ।
तद्गोत्रे तत्कुले चाऽपि विवाहो नैव दोषकृत् ॥

इत्याद्यनुकूलमेव वचनमस्ति । न चेष्टापत्तिः । अविच्छिन्नाविगीत-सकलदेशीयशिष्टाचारविरोधात् । तस्मात्किं तत्राविवाहनिमित्तमिति ॥ ५७ ॥

अत्र कैश्चिदुच्यते—

असपिण्डा च या मातुरसगोत्रा च या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥

इत्यत्र मनुवाक्ये स्वस्यासपिण्डेति वक्तव्ये यत्पितुरसपिण्डेति वचनं तद्दत्तकस्य प्रतिग्रहीतृसपिण्ड्या विवाहो मा प्रसाङ्क्षीदित्येवमर्थम् । अन्यथा

---

असपिण्डा च या मातुरसगोत्रा च या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥

इति मनुना पितृगोत्रनिषेधात् गृहीतुः, पितृत्वेन न तत्कुले विवाहसम्भव इति भावः । तद्भगिन्यादिसन्ततौ । आदिना पितृस्वस्रादिपरिग्रहः । न चाहत्येति आहत्य अनुसन्धीय । अनुकूलवचनमस्ति विधायकवचनमस्ति । यद्यपि इदं वचनं सावित्री-दातुराचार्यस्यैव कुले विवाहविधायकं न तु प्रतिग्रहीतृकुले । तथापि उपनयनदानेन प्रति-ग्रहीतुरपि आचार्यत्वसम्भवादिदमुक्तम् । अथवा निषेधाभावादेकत्रदृष्टन्यायाच्च कल्प-नया अत्रापि अनुकूलत्वकथनं मुक्तमिति भावः । अविगीतेति सृष्टिकाल-व्यापकेत्यर्थः ॥ ५७ ॥

अत्रेति । दत्तकस्याविवाहनिमित्तनिर्णय इत्यर्थः । चकारद्वयात् यथाक्रमेण असगोत्रासपिण्डयोर्ग्रहणम् । प्रशस्या विहिता । द्विजातीनामिति । गोतमात्रे सम्बन्धः सपिण्डनिषेधस्य सर्ववर्णसाधारणत्वात् ।

तथा च यमः—

पञ्चमात् सप्तमादूर्ध्वं मातृतः पितृतः क्रमात् ।
सपिण्डता निवर्त्तेत सर्ववर्णेष्वयं विधिः ॥ इति ।

दारकर्मणीति । दारेति धर्मपरोऽयं निर्देशः, दारत्वमित्यर्थः । तस्य कर्म इति विग्रहः । लुप्तविभक्तेः स्मारकत्वादिमते षष्ठ्यर्थो जनकत्वम् अतिरिक्तवादिमते तु दार-पदेन दारत्वजनकत्वमर्थः । कर्मपदं ग्रहणरूपकर्मपरम् । तथा च दारत्वजनककर्मणी-

पितृद्वारके सापिण्ड्ये मूलपुरुषादष्टमस्य वरस्य मातृद्वारके सापिण्ड्ये मूल-पुरुषात्षष्ठ्याः कन्याया विवाहो न स्यात्। पितुः सपिण्डत्वेनासपिण्डता-भावात्। न चेष्टापत्तिः।

'पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा',

इत्यादिसकलस्मृतिनिबन्धशिष्टाचारविरोधात्। न चेदं दूषणं दत्तकेऽपि समानम्। अष्टमस्य तस्य षष्ठ्याः कन्यायाः पितुः सापिण्ड्येनाविवाह्यत्वप्रसङ्गादिति वाच्यम्।

---

त्यर्थः। यद्यपि विवाहजन्यसंस्कारवन्नारीत्वमेव दारत्वम्, तस्य जातित्वेन नित्यतया तज्जनकत्वमसम्भवि, तथापि सविशेषणे विधिनिषेधौ विशेषणपदमुपसंक्रामतः सति विशेष्ये बाधे इति न्यायात् विशेषणीभूतसंस्कारमादाय जनकत्वोपपत्तिः। पितुर-सपिण्डावचनं चकारानुसृष्टं पितुरसपिण्डावचनमित्यर्थः। दत्तकस्येति। तथा च औरसस्यावयवान्वयसपिण्डत्वेन जनकजनन्योरेकशरीरारब्धतया च उभयोरभिन्न-सपिण्डकत्वेन च जनकसपिण्डान्तर्गतपुरुषस्यापि जननीसपिण्डान्तर्गतत्वात्। एवं जननीसपिण्डान्तर्गतपुरुषस्यापि पितृसपिण्डान्तर्गतत्वात् मातृपक्षपञ्चमत्वविवेचनं व्यर्थं स्यात्। अतो जनकजननीपदमपहाय

"पञ्चमात् सप्तमादूर्ध्वं मातृतः, पितृतः क्रमात्"

इत्यादिनादत्तकस्यैव ग्रहीतृरुपपितृपक्षीयसप्तमत्वविवेचनं तत्पत्नीरुपमातृपक्षीयपञ्चमत्वविवेचनं वाचनिकत्वेन सार्थकमित्यभिप्रेत्यैव वचनानां सार्थक्यं दर्शयति दत्तकस्येति। प्रतिग्रहीतृसपिण्डाया इति। तथा च यदि मनुवचनं औरसविषयकं स्यात् तदा असपिण्डादिनिषेधादेव प्रकृतार्थसिद्धिर्जायते मातापितृपदोपादानं व्यर्थं स्यात्। तथाहि—दत्तकस्य गृहीत्रादिभिः सह अवयवान्वयसापिण्ड्यासम्भवात् सपिण्डानिषेधे ग्रहीतृसपिण्डकन्याया विवाह्यत्वप्रसक्तौ तन्निवर्त्तकतया ग्रहीतुर्ग्राहकत्वेन पितृपदं सार्थकमिति आशङ्कार्थः। मा प्रसाङ्क्षीत् प्रसक्तो मा भूदित्यर्थः। अन्यथा दत्तकविषयकतया सार्थक्यानङ्गीकारे। पितृद्वारके पितरमादाय तदूर्ध्वतनसप्तमपुरुषपर्यन्तसापिण्ड्यस्वीकारे। मूलपुरुषादष्टमस्य पितुर्यः सप्तमस्तस्मात् स्वस्याष्टमत्वात्। मातृद्वारेवेति। मातरमादाय पञ्चमपुरुषपर्यन्तसापिण्ड्यस्वीकारे मूलपुरुषात् षष्ठ्याः स्वावधिषष्ठ्याः स्वमातृतः पञ्चम्या इत्यर्थः। इष्टापत्तौ शिष्टाचारविरोधं दर्शयति पञ्चमादित्यादि।

'सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते',

इति वक्ष्यमाणवाक्ये न सप्तमस्य दत्तकपितुर्मूलपुरुषासपिण्डत्वेन षष्ठ्याः कन्यायास्तदसापिण्ड्येन षष्ठ्याः सप्तमस्य च पितुः सपिण्डत्वाभावादित्युक्तमेव। तस्माद्दत्तकसापिण्ड्यनिर्णायकमिदमेव वचनमिति काऽनुपपत्तिः। तदतिश्रान्तप्रालपितम्। विकल्पासहत्वात्।

तथा हि—किमिदं दत्तकस्यैव सापिण्ड्यनिर्णायकमुत दत्तकौरसयो-

---

ननु वचने मातृतः पितृतश्चोर्ध्वमित्युक्तेः स्वावध्यष्टमादेरविवाह्यत्वमेव बुध्यते। कथं इष्टापत्तौ एतद्वचनं प्रमाणमित्यत आह सकलस्मृतिनिबन्धशिष्टाचारविरोधादिति। तथा च—

असम्बन्धा भवेत् या तु पिण्डेनैवोदकेन वा।
सा विवाह्या द्विजातीनां त्रिगोत्रान्तरिता च या॥

इति बृहन्मनुवचनेन स्वप्रतियोगिकतया सपिण्डकन्यानिषेधोक्तेः—

लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम्॥

इति मत्स्यपुराणेन सप्तमपुरुषपर्यन्तसापिण्ड्योक्तेश्चोभयवचनमूलकशिष्टानुमोदितः स्वावध्यष्टमपुरुषादिविवाह्यत्वलक्षणव्यवहारविरोध इति भावः। दत्तकेऽपि समानमिति। यथा औरसस्य पितृद्वारकसापिण्ड्यस्वीकारे स्वावध्यष्टमादेरविवाह्यता तथा दत्तकस्यापि ग्रहीतृरुपपितृसपिण्डग्रहणे स्वावध्यष्टमादेरविवाह्यत्वं तुल्यरुपमेवेत्यर्थः। सप्तमे इति। विनिवर्त्तते इति। तथा च केचिद् वादिमते यत्र पित्रादिद्वारकसापिण्ड्यं विविच्यते तत्र सप्तमे विनिवर्त्तते। एतद्वचनस्य यथा श्रुतार्थमादायैव प्रतियोगिनं पित्रादिकमादाय षष्ठपुरुषपर्य्यन्तं सापिण्ड्यम्। यत्र तु स्वप्रतियोगिकसापिण्ड्यं विविच्यते, तत्रैव 'लेपभाजश्चतुर्थाद्या' इति मत्स्यपुराणात् सप्तमपुरुषपर्यन्तं सापिण्ड्यमितिवचनयोः समाधानमिति। तस्मात् स्वावधिसापिण्ड्यगणनेनैव चरितार्थत्वे यतः पित्रादिपदवैयर्थ्यं तस्मादित्यर्थः। तत्तत्सापिण्ड्यनिर्णायकमिदमिति तथा च भिन्नगोत्रदत्तकस्य ग्रहीतृकुले अवयवान्वयसापिण्ड्यासम्भवात् सापिण्ड्यमात्रनिषेधेऽपि ग्रहीतृकुले विवाहनिषेधाप्रसक्तेः पित्रादिद्वारकतन्निषेधाय पित्रादिपदमर्थवदिति भावः। प्रलपितमिति। कैश्चिदिति प्रक्रान्तेनाऽस्य सम्बन्धः।

रुभयोरिति। नाऽऽद्यः। द्वेधा ह्यस्य वचनस्य दत्तकविषयता सम्भवेत्। दत्तकप्रक्रमाद्वा दत्तकसापिण्ड्यनिर्णायकविशेषवचनैकवाक्यत्वाद्वा। न चेहोभयमप्यस्ति। अनुपलम्भात्। किञ्चास्य दत्तकपरत्वेऽत्रत्यं पितृपदं गौण्या प्रतिग्रहीतृपितृपरं स्यात्। तच्चानिष्टम्। 'न विधौ परः शब्दार्थः' इति न्यायविरोधात्।

नाप्यन्त्यः। पितृपदे युगपद्वृत्तिद्वयनिषेधात्। न च गङ्गायां मीनघोषावित्यत्रेव वृत्त्यन्तरतात्पर्यग्राहकं प्रमाणमस्ति। तस्मादौरसविषयमेवेदं वचनम्। गर्भाधानादिप्रक्रमात्पञ्चमात्सप्तमादूर्ध्वमिति वचनान्तरैकवाक्यत्वाच्च। न चास्यौरसपरत्वे कूटस्थादष्टमस्य वरस्य षष्ठ्याः कन्याया

---

विकल्पं दर्शयति तथाहीत्यादि। दत्तकविषयता सम्भवेत्। प्रकारद्वयेन दत्तकविषयतासम्भवितुं शक्नुयादित्यर्थः। तदेव प्रकारद्वयं विकल्प्य दर्शयति प्रक्रमाद्वेति। तथा च यदि दत्तकप्रकरणीयमेतद्वचनं स्यात्, तदा प्रकरणादेव दत्तकविषयत्वं वक्तुं शक्नुयादिति भावः। अनुपलभ्यत्वादिति। तथा च दत्तकप्रक्रमाभावस्य प्रत्यक्षसिद्धत्वात् ग्रहीतृसपिण्डविवाहनिषेधकविशेषवचनस्यादृष्टत्वाच्चेति भावः। ननु स्वावधिसापिण्ड्यविधायकवचनदर्शनात् तद्विरोधात् पितृद्वारकसापिण्ड्यविधायकवचनं दत्तकविषयकमवश्यं वाच्यमित्यत आह किञ्चेति। विधौ विधिवाक्यघटकपदे यद्यपि मनुवचने साक्षाद्विधिर्नास्ति, तथापि स्मृतेः श्रुत्यनुमापकतया विधेः कल्पनावश्यकत्वादिति तात्पर्यम्। परिसंख्यार्थभिन्नः लाक्षणिक इति यावत्। विधेः प्राधान्यादिति भावः। द्वितीयकल्पं दूषयति नाप्यन्त्य इति। युगपद्वृत्तिद्वयविरोधात्। सकृत् श्रुतस्य शब्दस्य शक्तिलक्षणोभयवृत्त्यनङ्गीकारात् प्राचीनैरिति शेषः। तस्मात् प्राथमिकत्वेन मुख्यार्थस्य बलवत्त्वात्। हेत्वन्तरेणौरसविषयत्वं दृढयति गर्भाधानादिप्रक्रमादिति।

तथा च प्रकरणादपि औरसविषयत्वं ज्ञायते। आदिना जातकर्मादिपरिग्रहः। तथा च द्वितीयाध्याये मनुः—

वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम्।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च॥
गार्भैर्होमैर्जातकर्म चौडमौञ्जिनिबन्धनैः।
बैजिकं गार्भिकश्चैनो नराणामपमृज्यते॥

अनुद्वाह्यत्वप्रसङ्गः। पितुरसपिण्डत्वाभावादित्युक्तमेव दूषणमिति वाच्यम्। तस्य पितुरिति पञ्चम्यां षष्ठीभ्रमनिबन्धनत्वेनादूषणत्वात्। अतएव योगीश्वरेण मातृतः पितृतस्तथेत्यत्र पञ्चमीत्वनिर्णायकस्तसिल् प्रयोग आदृतः। तस्यापि सार्वविभक्तिकत्वशङ्कायाम् 'ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमात्' इति गौतमवाक्ये पञ्चम्या निर्णय इति न किञ्चित् समाधानमिति समाधानान्तरं वक्तव्यम्॥ ५८॥

तदपर आहुः—

---

इत्युपक्रम्य द्वितीयाध्याये उपनयनपर्यन्तमुक्तम्। तृतीयाध्यायप्रथम एव "असपिण्डा च या मातुरसगोत्रा च या पितु" रितिवचनमुक्तं सुतरामेवौरसप्रकरणम्। ननु सपिण्डसगोत्रयोर्विधानादेव प्रकृतार्थनिर्वाहे मातृपितृपदोपादानस्य वैयर्थ्यापत्त्या गौणार्थस्वीकार इत्यत आह—'पञ्चमात् सप्तमादूर्ध्व'-मिति। एकवाक्यत्वाच्चेति। तथा च 'पञ्चमात् सप्तमादूर्ध्वं मातृतः पितृतस्तथा' इति वचने मातृतः पितृत इति दर्शनात् पञ्चम्यातस औत्सर्गिकत्वाच्च स्वप्रतियोगिकसपिण्डपुरुषगणनेऽपि गणनप्रतियोगिकं स्वमादायैव मातृक्रमात् पञ्चमत्वं पितृक्रमात् सप्तमत्वं वाच्यम्। तदेकवाक्यतया लाघवात् मनुवचनेऽपि "मातुः पितु"रित्यस्य पञ्चम्यन्तत्वमङ्गीकार्यम्। ततश्चास्मादपि वचनात् स्वप्रतियोगिकपाञ्चसाप्तपौरुषिकं सापिण्ड्यं प्रतीयते, न तु मातापितृप्रतियोगिकम्, येन दत्तकविषयत्वमभिधास्यसीति भावः। कूटस्थादिति। कूटे समूहैकदेशे तिष्ठति कूटस्थः, तस्मात्। तथा चामरः—'स्यान्निकायः पुञ्जराशीतूत्करः कूटस्थमस्त्रियाम्'। षष्ठीभ्रमनिबन्धनत्वेन तया च स्वापेक्षयाऽष्टमपुरुषस्य स्वपित्रपेक्षया सप्तमत्वेन यः सापिण्ड्यभ्रमः, स च पितुरिति षष्ठ्यन्तत्वभ्रमनिबन्धन एव। तस्य पञ्चम्यन्तत्वेतु नैषः भ्रमः सम्भवतीति भावः। पञ्चम्या निर्णयः ल्यप्लोपपञ्चम्या निर्णय इत्यर्थः। यद्यपि षष्ठीविभक्त्या बीजिन इति साधु भवितुमर्हति। तथापि पञ्चमी सन्दराम्ध्यपाठादर्थसौकार्याच्च बीजिन इत्यस्य पञ्चम्यन्तत्वमेव। तथा चायं वचनार्थः पितृबन्धून् बीजिनश्चादाय क्रोडीकृत्य स्वावधिसप्तमादूर्ध्वमित्यर्थः। मातृबन्धुभ्यः माता च बन्धवश्च मातृबन्धुभ्यः मातरं मातृबन्धूंश्चादाय क्रोड़ीकृत्य स्वावधिपञ्चमादूर्ध्वम्। तथा च स्वावधिपितृक्रमात् मातृक्रमाच्च सप्तमत्वपञ्चमत्वविवेचनम्। न किञ्चिदिति। दत्तकविषयतया कैश्चिद् यत् समाहितम्, तदकिञ्चित्करमित्यर्थः॥५८॥

क्षेत्रजादीन् सुतानेतानेकादश यथोदितान् ।
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥ इति ।

अत्र वाक्ये क्षेत्रजादीनां पुत्रप्रतिनिधित्वाभिधानात् 'प्रतिनिधिस्तद्धर्मा स्यात्' इति न्यायेन सकलौरसधर्मप्राप्त्या प्रतिग्रहीत्रादिपितृसपिण्डावर्जनं सेत्स्यतीति तत्र 'न सापिण्ड्यं विधीयते' इत्यनेन निषिद्धस्य सापिण्डस्याति-देशासम्भवेनाप्राप्त्या तद्वर्जनासम्भवात् । एतेन पुत्रनाम्नौरसधर्मातिदेशात् प्रतिग्रहीत्रादिपितृसपिण्डावर्जनसिद्धिरित्यपास्तम् । 'न तौ पशौ करोति' इति-वन्निषिद्धस्य सापिण्डस्यातिदेशासम्भवेन वर्जनासम्भवात् । तस्मादनन्यगत्या

---

दूषयितुमपरसमाधानमुपन्यस्यति तदपर इत्यादि सेत्स्यतीत्यन्तम् । प्रतिनिधि-त्वाभिधानादिति । प्रतिनिधीयते तत्स्थानपातितया तत्कर्तव्यकर्माभिधाकारितया च स्वीक्रियते इति व्युत्पत्या प्रतिनिधिशब्देन तद्धर्मीलभ्यते इति भावः । ऐतस्यति सिद्धं करिष्यति भवानितिशेषः । दूषयति तन्नेति अतिदेशासम्भवेनेति अतिदिश्यते यदिति-व्युत्पत्या अतिदिष्टस्यासम्भवेनेत्यर्थः यथा श्रुतन्तु न सङ्गच्छते । तथा च प्रतिनिधि-शब्दादौरसधर्म्मातिदेशेऽपि तस्य विधितोदुर्बलतया बलवता निषेधेन बाधात् षाट् पौरूषिकसापिण्ड्यप्राप्तेरसम्भव इति भावः । तद्वर्जनासम्भवात् प्रतिग्रहीतृकुले दत्त-कस्य साप्तपौरुषिकसापिण्ड्यवर्जनासम्भवादित्यर्थः एतेन अतिदिष्टसापिण्ड्यस्य निषे-धेन । अतिदेशस्य दौर्बल्ये दृष्टान्तयति न तौ पशाविति दर्शपौर्णमासयागप्रकृतिक-तया अतिदेशप्राप्तयोराधाराद्यभागयोः तौ आधाराद्यभागौ पशौ पशुयागे न करोति । इति वृक्कृतिगतेन निषेधेन यथाबाधः तद्वदित्यर्थः । अतिप्रमाणिकत्वेन हेमाद्रिमताभिधानमुखेन स्वमतमाविष्करोति तदुच्यते इति । व्यवतिष्ठपत् व्यवस्था-पयामास । इदन्तु पिण्डान्वयवादिनां स्मार्त्तशूलपाणीनां न मन्वतम् । न वा वङ्ग-देशीयशिष्टाचारसिद्धञ्च । तथा च उद्वाहतत्वे रघुनन्दन आहस्म । एकपितृकस्यापि पित्रपेक्षया सप्तमीवर्जनाय पितुरिति सार्थकं नवरापेक्षयेति । अपरमपि लोपभाज इत्यादिवाचनिकेऽर्थे सापिण्ड्ये एकशरीरावयवान्वयरूपस्वकपोलरचितार्थानवकाशा-दिति । शूलपाणिभिस्तु क्षेत्रिमात्रगोत्रस्य द्विपितृकस्य क्षेत्रजादेर्वीजिस गोत्रवर्जनाय पितु-रित्युक्तम् । अत्र रघुनन्दनव्याख्याने अपिना द्विपितृकस्य दत्तकादेः परिग्रहः । शूलपाणि-व्याख्याने आदिना दत्तकादिपरिग्रहः । यत्तुवृहन्मनुवचनं दत्तक्रीतादि पुत्राणां बीजवप्तु

वाचनिकमेव प्रतिगृहीतृकुले सापिण्ड्यमभ्युपगन्तव्यमिति। तदुच्यते—द्विविधं हि सापिण्ड्यमवयवान्वयेन पिण्डान्वयेन चेति। तत्रावयवान्वय-सापिण्ड्यस्य दत्तके प्रत्यक्षबाधितत्वेन हेमाद्रिः पिण्डान्वयमेवोपादाय दत्तकादीनां प्रतिग्रहीतृकुले त्रिपुरुषमेव सापिण्ड्यं व्यवतिष्ठिपत् ॥५९॥

तथा च कार्ष्णाजिनिः—

यावन्तः पितृवर्गाः स्युस्तावद्भिर्दत्तकादयः।
प्रेतानां योजनं कुर्युः स्वीकीयैः पितृभिः सह॥
द्वाभ्यां सहाथ तत्पुत्राः पौत्रास्त्वेकेन तत्समम्।
चतुर्थपुरुषे छेदं तस्मादेषा त्रिपौरुषी॥ इति।

अस्यार्थः—दत्तकादयः पुत्राः प्रेतानां प्रतिग्रहीत्रादीनां पितृणामौरसत्वे शुद्धदत्तकत्वे द्व्यामुष्यायणत्वे वा यावन्तः पितृवर्गास्त्रयः षड् वा, तत्राऽऽद्ये

---

सपिण्डता पञ्चमी सप्तमी तद्वत् गोत्रं तत्पालकस्य चेति तदनुकूलमेव, न प्रतिकूलम्। तथाहि तद्वदित्यनेन यथा बीजवप्तुः पञ्चमी सप्तमी निषिद्धा तथा पालकस्य ग्रहीतुरपि सप्तमी निषिद्धा इत्यर्थो लभ्यते, अन्यथा तद्वदितिव्यर्थं स्यात्। अतो न सपिण्ड्यं विधीयते इति वृद्धगौतमवचनन्तु सपिण्डदत्तकस्य साहजिकं प्राप्तमाप्तपौरुषसापिण्ड्य-निषेधकं सपिण्डताप्रयुक्तप्रसक्तदशाहाशौचप्रतिषेधकम्वेति चन्द्रिकाकाराद्युक्तं युक्तम्। निर्णयसिन्धुकारस्तु बहुमतप्रदर्शनपूर्वकमाह शिष्टास्तु न वधूवरयोः स्वतः सापिण्ड्यम्, किन्तु कूटस्थसन्ततित्वात् तत् सापिण्ड्येनैव अतोऽष्टम वरं प्रति कन्याया असापिण्ड्येऽपि कन्यायाः कूटस्थेन सापिण्ड्यात् तन्सन्ततिस्थत्वात् वरस्तां प्रतिसापिण्ड एवेत्यविवाहः। सापिण्ड्यासापिण्ड्ययोः प्रतियोगिभेदेनाविरोधा-दित्याह॥ ५९॥

तथा चेति। त्रैपुरुषिकसापिण्ड्यमेव प्रमाणयति। कार्ष्णाजिनि सूत्रं स्वयमेव व्याख्यायते दत्तकादय इत्यादि। आद्ये प्रेतीभूतस्य प्रतिग्रहीतुः स्वपितुरौरसपुत्रत्वे। द्वितीये तादृशस्य शुद्धदत्तकत्वे। तृतीये तादृशस्य द्व्यामुष्यायणत्वे। योजनं सापिण्डी-करणम्। दत्तकसपिण्डीकरणे दत्तकरूपस्य पितुः सपिण्डीकरणम्। देवत्वबोधनाय पार्वणोद्देश्यत्वबोधनाय। तेषां सर्वेषामित्यनेन सम्बन्धः। स्वकीयत्वविशेषणोपादानं

पितृपितामहप्रपितामहास्त्रयः, द्वितीये प्रतिग्रहीतृपितामहप्रपितामहास्त्रयः, तृतीये प्रतिग्रहीत्रादयस्त्रयो जनकादयश्च त्रय इति षट् , तावद्भिस्त्रिभिस्त्रिभिः षड्भिर्वा सह प्रतिग्रहीत्रादीनां योजनं कुर्युः। प्रतिग्रहीतुः पितुर्ये यावन्तः पितृवर्गास्त्रयः षड् वा तेषां सर्वेषां स्वपुत्रकर्तृके दत्तकसपिण्डीकरणे देवतात्वबोधनाय स्वकीयत्वविशेषणोपादनम्। ततश्च प्रतिग्रहीतृपितॄणां मध्ये त्रयाणां षण्णां वा दत्तकसपिण्डीकरणे देवतात्वप्राप्तौ विशेषमाह—द्वाभ्यामिति।

त्रिषु पितृषु द्वाभ्यां षट्सु चतुर्भिः। एव दत्तकपौत्राः स्वपितृसपिण्डीकरणं स्वपितामहप्रतिग्रहीतुस्त्रयाणां पितॄणां मध्य एकेन प्रतिग्रहीतुः पित्रा, व्यामुष्यायमाणत्वे द्वाभ्यां वा, पितामहप्रपितामहाभ्यां च सह कुर्युः। अमुमेव न्यायं दत्तकतत्पुत्रयोरप्यतिदिशति—तत्समिति। तत्सपिण्डीकरणं दत्तकतत्पुत्रयोरपि द्व्यामुष्यायणत्वे समं पितृवर्गद्वयेन कार्यम्। नन्वेवं दत्तकप्रपौत्रेण स्वपितुर्दत्तकपौत्रस्य सपिण्डीकरणे दत्तकपुत्रदत्तकतत्प्रतिग्रहीतृभिस्त्रिभिः सह क्रियमाणे प्रतिग्रहीतृपितॄणां त्रयाणामन्यतमस्याप्यनुप्रवेशाभावेन सापिण्ड्यं न स्यादित्य आह—चतुर्थपुरुषे छेदमिति। यो

स्वकीयैः पितृभिः सह इत्यत्र स्वकीयत्वविशेषणस्य सार्थक्यम्। देवतात्वप्राप्ताविति। पौत्रादिकर्त्तृकसपिण्डीकरणे अविशेषात् तत्पित्रादीनामपि देवत्वे पार्वणप्रसक्तावित्यर्थः। त्रिषु पितृषु द्वाभ्यामिति। दत्तकस्य पुत्रेण स्वपितृदत्तकस्य सपिण्डने क्रियमाणे तस्य शुद्धदत्तकत्वे दत्तकप्रतिग्रहीतुः पित्रादित्रिषु मध्ये प्रतिग्रहीतुः पितृपितामहाभ्यां द्वाभ्यां सह तस्य द्व्यामुष्यायमाणत्वे तज्जनकस्य पितृपितामहाभ्यां द्वाभ्यां तत्प्रतिग्रहीतुः पितृपितामहाभ्याञ्च मिलित्वा चतुर्भिरित्यर्थः। द्व्यामुष्यायणत्वे स्वपितुरिति शेषः। द्वाभ्यां द्विधारूपाभ्यां ग्रहीतृपक्षजनकपक्षाभ्यामिति यावत्। पितामहप्रपिताभ्याञ्च प्रेतस्येति शेषः। चकारात् प्रेतस्य पित्रा सह इत्यर्थः। अमुमेव न्यायं दत्तककर्त्तृकग्रहीतृसपिण्डीकरणे ग्रहीतुः दत्तकादित्वे त्रिभिः षड्भिः सह योजनरूपा या युक्तिर्व्यवह्रियते दत्तकस्य तत् सुतस्यापि सपिण्डने तामेव युक्तिमतिदिशति व्यवस्थापयति। सापिण्ड्यं न स्यादिति यावन्तः पितृवर्गाः स्युः, तावद्भिरिति यावत्। तात्पदनिर्देशादित्याशङ्कार्थ इति भावः। त्रिभिरेव कुर्यादिति। तथा च गोभिलः—

यदा स्वपितुः सपिण्डीकरणं करोति स तत्पत्रादिभिस्त्रिभिरेव कुर्यान्न चतुर्थेनेत्यर्थः। नन्वेवमौरसस्थलेऽपि सपिण्डिकरणं त्रिभिरेव शास्त्रे सिद्धं तेनैव सिद्धौ वचनान्तरारम्भक्लेशः किमर्थ इत्यत आह—तस्मादिति। दत्तकानामेषां पिण्डान्वयरूपाऽशौचाविवाह्यत्वप्रयोजिका त्रिपुरुष्येव सपिण्डता, न—

लेपभागश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम्॥

इति मात्स्याभिहिता साप्तपौरुषी। तस्याः सामान्यरूपतया विशेषेणापवादात्॥ ६०॥

एतदेवाभिप्रेत्योक्तं संग्रहकारेण—

दत्तकानां तु पुत्राणां सापिण्ड्यं स्यात्त्रिपौरुषम्।
जनकस्य कुले तद्वद्ग्रहीतुरिति धारणा॥ इति।

यदिदमुभयत्र त्रिपुरुषसापिण्ड्याभिधानं तद्द्व्यामुष्यायणाभिप्रायेण।

---

'चत्वार्युदकपात्राणि सतिलगन्धोदकानि त्रीणि पितृणामेकं प्रेतस्येत्यादि। अपि च—

श्राद्धद्वयमुपक्रम्य कुर्वीत सह पिण्डताम्।
तयोः पार्वणवत् पूर्वमेकोद्दिष्टमथापरम्॥

तेनैव सिद्धौ सामान्यतोऽभिधानेन सिद्धौ। वचनारम्भक्लेशः दत्तकविषयवचनारम्भप्रयत्नः। तस्मात् सामान्यविधिना प्राप्तावपि दत्तकविषयतया विशिष्याभिधानादित्यर्थः। त्रिपुरुष्येव न तु साप्तपौरुषीत्यर्थः। विशेषेणापवादात् सामान्यशास्त्रस्य विशेषेतरपरत्वादिति न्यायादिति शेषः। इदन्तु न सर्वसम्मतम्। स्मार्त्तशूलपाण्यादिमते तु 'वैवाहिकसापिण्ड्यं पितृपक्षे साप्तपौरुषं मातामहपक्षे पाञ्चपौरुषं सर्वप्रकारपुत्राणामेव भिन्नगोत्राः पृथक् पिण्डाः पृथक् वंशकराः स्मृताः। 'जनने मरणे चैव त्र्यहाशौचस्य भागिन,' इत्यादिवचनेन पिण्डवंशोपक्रमे जननमरणाशौचविधानात् अशौचविषय एव त्रैपौरुषिकसापिण्ड्यमिति तेषामाशयः॥६०॥

एतदेवाभिप्रेत्य त्रैपुरुषिकसापिण्ड्यमेवाभिप्रेत्य संग्रहकारेणेत्यनेन 'दत्तकानान्तु' इत्यादिवचनं नार्षमिति सूचितम्। 'जनकस्य कुले' इति अशौचमात्रे 'बीजवप्तुः सपिण्डता सप्तमी' इत्यनेन साप्तपौरुषिकवैवाहिकसापिण्ड्याभिधानात्। तद्वत् जनककुल-

तस्य त्रिकद्वयेन सपिण्डीकरणाभिधानात्। शुद्धदत्तकस्य[१] तु प्रतिग्रहीतृकुले त्रिपुरुषं पिण्डान्वयरूपं सापिण्ड्यं जनककुले साप्तपौरुषमवयवान्वयरूपमेवेत्यलं प्रपञ्चेन।

तद्वद्गोत्रमिति। तद्वत्सपिण्डतावत्, गोत्रमपि बीजवप्तुर्जनकस्य, न केवलं जनकस्यापि तु तत्पालकस्य च दत्तकादेर्यः पालकस्तस्य च गोत्रं दत्तकादीनां भवतीति। अनेन सपिण्डतावैलक्षण्यं गोत्रेऽभिहितम्। यथा सपिण्डता जनकस्यैव न तथा गोत्रं किन्तूभयोरपि तदिति। न चेदमपि-दत्तकमात्रे किन्तु द्व्यामुष्यायणे दत्तकविशेषे। तथा हि—द्विविधा दत्तकादयो नित्यवद्व्यामुष्यायणा अनित्यवद्व्यामुष्यायणाश्चेति। तत्र नित्यद्व्यामुष्यायणा नाम ये जनकप्रतिग्रहीतृभ्यामावयोरयं पुत्र इति सम्प्रतिपन्नाः। अनित्यद्व्यामुष्यायणास्तु ये चूड़ान्तैः संस्कारैर्जनकेन संस्कृता उपनयनादिभिश्च प्रतिग्रहीत्रा, तेषां गोत्रद्वयेनापि संस्कृतत्वाद्व्यामुस्यायणत्वं

---

त्रैपुरुषिकसापिण्ड्यवदित्यर्थः। तस्य द्व्यामुष्यायणस्य त्रिक द्वयेन सह जनकग्रहीतृपक्षद्वयीयत्रिपुरुषेण सह।

प्रसंगादन्यदुक्त्वा प्रागुपन्यस्तं बृहन्मनुवचनं व्याचष्टे तदवदगोत्रमिति। साप्तपौरुषिकसपिण्डतावदित्यर्थः। अनेन गोत्रमात्रे पालकान्वयेन। सापिण्डतावैलक्षण्यं विवाहेऽपि दत्तकस्य ग्रहीतृकुले त्रैपुरुषिकरूपसापिण्ड्यवैलक्षण्यमित्यर्थः। यथा सपिण्डता इति अवयवान्वयरूपा साप्तपौरुषीवैवाहिकी सपिण्डता यथेत्यर्थः। जनकस्यैव जनकमात्रस्यैव न तथा गोत्रं जनकमात्रस्येति शेषः। तदिति गोत्रमित्यर्थः। इदमपि उभयपक्षीयगोत्रं दत्तकमात्रे इति गोत्ररिक्थे जनयितु र्न हरेत् दत्रिमः सुत इति मनुवचनादिति शेषः। सम्प्रतिपन्ना इति। उभयगोत्रोल्लेखितजातकर्मादिसकलसंस्कारेण

---

१. दत्तकत्वेन पालककुले प्रवेशेन तस्य जनककुले कस्मा अपि पिण्डो न दातव्यो भवतीति हेतोः पिण्डान्वयरूपं त्रिपुरुषसापिण्ड्यं निवृत्तं भवेत। परमिदं त्रिपुरुषसापिण्ड्यं तस्य प्रतिग्रहीतृकुले प्राप्नोति। तेन हेतुना त्रिपुरुषादनन्तरपुरुषादुत्पन्नां भिन्नगोत्रीयां कन्यां परिणेतुं दत्तकपुत्रः शक्नुयात्।

परं त्वनित्यम् । जातमात्रस्यैव परिग्रहे गोत्रद्वयेन संस्कारा भावात्तस्य परिग्रहीतृगोत्रमेव ॥ ६१ ॥

तदिदं सर्वमभिप्रेत्याऽऽह सत्याषाढ—'नित्यानां व्यामुष्यायणानां द्वयोः' इति सूत्रेण । नित्यव्यामुष्यायणानां गोत्रद्वये प्रवरसम्बन्धमुक्त्वा तमेवानित्येष्वप्यतिदिशति—'दत्तकादीनां तु व्यामुष्यायणवत्' इति सूत्रेण । व्याख्यातञ्चैतच्छबरस्वामिभिः । व्यामुष्यायणप्रसङ्गेनानित्यानाह—दत्तकेति ।

तावदेव नोत्तरसन्ततौ प्रथमेनैव संस्काराः परिग्रहीत्रा चेत्तदोत्तरस्य पूर्वत्वात्तेनैवोत्तरत्र । तथा पितृव्येण भ्रातृव्येण चैकार्पेयेण ये जातास्ते परिग्रहीतुरेवेति । अस्य भाष्यस्यायमर्थः—यो गोत्रद्वयेन संस्कृतस्तस्यैव गोत्रद्वयसम्बन्धो नोत्तरसन्ततेः । जनकगोत्रसम्बन्धे किं कारणमित्यत आह–प्रथमेनेति । प्रथमो जनकस्तेनैव संस्कृतत्वात् । संस्काराश्च चौडान्ताः—

पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते ।
आचूडान्तं न पुत्रः स पुत्रतां याति चान्यतः ॥

इति कालिकापुराणात् । व्याख्यातं चैतत् प्रागेवान्यस्यासाधारणीं पुत्रतां न याति, किन्तु व्यामुष्यायणो भवतीति । प्रथमेनासंस्कारे कथमित्यत

---

सम्प्रतिपन्नपुत्रभावा इत्यर्थः । संस्कृतत्वात् भागरूपेण संस्कृतत्वादित्यर्थः । तस्य शुद्धदत्तकस्य ॥ ६१ ॥

तदिदं सर्वमिति । मयाभिहितं सर्वमित्यर्थः । नित्यानां जन्मग्रहणानन्तरं उभयसम्बन्धिनामित्यर्थः । गोत्रद्वयप्रवरसम्बन्धमिति । मध्यपठितद्वयेति शब्दस्य गोत्रेण प्रवरेण च सम्बन्धः । तेन गोत्रद्वयप्रवरद्वयसम्बन्धमित्यर्थः । व्यामुष्यायणप्रसंगे-नित्यव्यामुष्यायणप्रसंगे । तावदेव गोत्रमेव नेत्यनेन सम्बन्धः । उत्तरसन्ततौ उत्तरस्य ग्रहीतुः सन्ततौ दत्तक इत्यर्थः । कदा इत्याह प्रथमेनैव जनकेनैव संस्काराः चूडान्ता, इत्यर्थः । कृताश्चेदिति पूरितेनान्वयः । उत्तरस्य प्रतिग्रहीतुः पूर्वकत्वात् पूर्वकृतत्वात् प्राधान्येनाधिकारितया संस्काराणामिति शेषः । तेनैव सगोत्रेणेत्यर्थः । एवकारेण जनकगोत्रव्यवच्छेदः । उत्तरत्र उत्तरसन्ततौ दत्तके इति यावत् । अस्य तु तावदेव

आह परिग्रहीत्रा चेदिति। परिग्रहीत्रैव जातकर्मादिसर्वसंस्कारकरणे चौडादि-संस्कारकरणेऽपि वोत्तरस्य परिग्रहीतुरेव गोत्रम्। तत्र हेतुः—पूर्वत्वात्। संस्कारकरणे प्रथमत्वात्। व्यामुष्यायणसन्ततौ दत्तकसन्ततौ चापेक्षितं गोत्रमाह—तेनैवेति। परिग्रहीतृगोत्रेणैवोत्तरसन्ततेर्गोत्रमुभयत्रापि। सगोत्र-परिग्रहमाह—तथेति। जनकपरिग्रहीत्रोरेकगोत्रत्वेऽपि परिग्रहीत्रैव व्यपदेशः। परिग्रहसंस्कारकरणादिति।

यत्तु 'गोत्ररिक्थे धनयितुर्न भजेदत्रिमः सुतः' इति तत्परिग्रहीत्रैव जात-कर्मादिसर्वसंस्कारकरणपक्षे वेदितव्यम्। ये तु नित्यवद्व्यामुष्यायणा दत्तकादयस्तेषां गोत्रद्वयम्।

व्यामुष्यायणका ये स्युर्दत्तक्रीतकादयः।
गोत्रद्वयेऽप्यनुद्वाहः शैङ्गशैशिरयोर्यथा॥ इति॥

पारिजातस्मरणात्। गोत्रद्वये-जनकगोत्रे परिग्रहीतृगोत्रे च। दत्तकादीनां च व्यामुष्यायणत्व इदं वचनं नित्यानां व्यामुष्यायणानामिति सत्या-षाढवचनं च प्रमाणम्। प्रवरमञ्जर्यामप्यनेनैवाभिप्रायेणोक्तं दत्तकक्रीतकृत्रिम-

---

इति पूर्वेणानुषङ्गः। तथा च ग्रहीत्रा चूडान्तसंस्कारकरणे ग्रहीतृगोत्रभागिता दत्तकस्येति भावः। भाष्यकारस्यास्पष्टभागं क्रमेण धृत्वा स्पष्टयति अस्येत्यादि। नोत्तरसन्ततेरिति। उत्तरस्य प्ररिग्रहीतुः सन्ततेः दत्तकस्य नेति प्रतिग्रहीतृगोत्रसम्बन्ध इति शेषः। जनक-गोत्रसम्बन्धे जनकमात्रगोत्रसम्बन्धे इत्यर्थः। प्रथमेनासंस्कारे जनककर्तृकसंस्काराभावे आचूडान्तमिति कालिकापुराणवचनस्वरसादाह—चूडादिसंस्कारकरणेऽपि वेत्यादि परिग्रहीत्रैव व्यपदेशः परिग्रहीतृगोत्रभागित्वेन व्यवहारः। तथा च वृद्धगौतमः—

सगोत्रेषु कृता ये च दत्तक्रीतादयः सुताः।
विधिनागोत्रतां यान्ति न सापिण्ड्यं विधीयते॥ इति।

प्ररिग्रहसंस्कारकरणान् परिग्रहसंस्कारोभयकरणात्। परिग्रहसंस्कारोभय करणादेव ग्रहीतृगोत्रमेव दत्तकस्य नान्यत्रेति तत्पक्षदार्ढ्याय आशङ्क्यते यत्त्विति। यद्यपि 'गोत्ररिक्थे जनयितुर्न न भजेदत्रिमः सुतः' इति वचनस्मरणात् जनक-कृतदानादेव दत्तकस्य प्रतिगृहीतृगोत्रभागित्वं प्रतीयते तथापि कालिकापुराणादि-

**पुत्रिकापुत्रादीनां यथासम्भवं गोत्रद्वयं सप्रवरमस्तीत्येतावता द्विगोत्राणां गोत्रद्वयं सप्रवरं विवाहे वर्ज्यमिति ॥ ६२ ॥**

---

नानावचनैकवाक्यतया साङ्गपरिग्रहसंस्काराभ्यामेव तत् दत्तकस्य प्रतिग्रहीतृगोत्रादि भागित्वमित्यभिप्रेत्य सिद्धान्तयति तदित्यादिना। जातकर्मादीति। जातकर्मग्रहणं प्रशस्तदत्तकत्वाभिप्रायेण। केवलचूडासंस्कारादेव प्रतिग्रहीतृगोत्रभागित्वमुक्तमेव प्राक्। दत्तकादयः। आदिना क्रीतादीनां परिग्रहः। शुद्धशौशिरयोरिति तन्नामकव्यक्त्योः। पुत्रिकापुत्रादीनामिति। पुत्रिकायाः पुत्रः पुत्रिकापुत्रः न तु पुत्रिकारूपविवाहेनैव पुत्रिकात्वनिर्वाहात्। तथा च मनुः—

अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम्।
यदपत्यं भवेदस्यां तन्मम स्यात् स्वधाकरम् ॥

इति कन्यादानकाले जामात्रा सह सम्मतिप्रत्तिरूपेण विधानेन 'दुहितरं पुत्रिकां कुर्यात्' इति कुल्लुकभट्टः। पुत्रिकारूपस्य ग्राह्यत्वे विवाहे वर्ज्यमिति' मूलोक्त्यनुपपत्तेः। यद्यपि पुत्रिकापुत्रस्य गोत्रद्वयसम्बन्धे साक्षात् वचनं न दृश्यते तथापि गोत्रैक्ये निरपेक्षपार्वणदर्शनात्। अत्रापि निरपेक्षमातामहादिपार्वणकर्त्तृत्वस्य मनुना प्रतिपादनात् मातामहगोत्रभागित्वमप्यस्य कल्प्यमित्याशयः। तथा च मनुः—

भ्रातुः प्रथमतः पिण्डं निर्वपेत् पुत्रिकासुतः।
द्वितीयन्तु पितुस्तस्य तृतीयं तत्पितुः पितुः ॥ इति।

न चैतन्निरपेक्षविधायकमिति वाच्यम्! 'पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम्' इत्यादिना दौहित्रसामान्यस्य पार्वणकर्त्तृतायाः सिद्धत्वेन 'मातुः प्रथमतः पिण्डम्' इत्यनेन मातृपिण्डविधानेन च पुत्रिकापुत्रकर्त्तृकतया विशेषोक्तिवैयर्थ्यथापत्तेः। अतएव—

अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम्।
अस्यां यो जायते पुत्रः समे पुत्रो भवेदिति ॥

वसिष्ठकर्त्तृकपुत्रत्वोक्तिः सङ्गच्छते। न च तथापि मातामहगोत्रनिषेधस्य दौहित्रसाधारणत्वात् विवाहे वर्ज्यमिति विशेषाभिधानमसङ्गतमिति वाच्यम्। जन्मनाम्नोरज्ञाने मातामहगोत्रे पुत्रिकापुत्रस्यापि विवाहप्रसक्तौ तन्निषेधकत्वेन सार्थकत्वात्। यथासम्भवमिति। द्व्यामुष्यायणाभिप्रायकं शुद्धदत्तकादीनां गोत्रद्वयसम्बन्धाभावात् ॥ ६२ ॥

शाखाऽपि प्रतिग्रहीतुरेवेत्याह वसिष्ठः—

अन्यशाखोद्भवो दत्तः पुत्रश्चैवोपनायितः ।
स्वगोत्रेण स्वशाखोक्तविधिना स स्वशाखभाक् ॥ इति ।

स्वस्य प्रतिग्रहीतुः शाखा यस्मिन्कर्मणि तत्स्वशाखं कर्म तद्भजतीति स्वशाखभागिति प्रतिग्रहीतृशाखीयमेव कर्म तेन कर्त्तव्यमित्यर्थः । दत्तका[१]-दीनां मातामहा अपि प्रतिग्रहीत्री या माता तत्पितर एव पितृन्यायस्य मातामहेष्वपि समानत्वात् ।

यत्तु मातामहश्राद्धविधेर्मुख्यमातामहविषयत्वमेवेति हेमाद्रिणाऽभि-हितम् । तन्न । व्यपैति ददतः स्वधेति वचनविरोधात् । न च मातामहानां दातृत्वाभावः । बन्धूनाहूयेत्यनेन दानसंमतिकरणेन तेषामपि दातृत्वात् । किं च 'श्राद्धे गोत्ररिक्थानुगः पिण्डो व्यपैति' इत्यनेन गोत्ररिक्थयोर्निमित्त-ताप्रतिपादनाद्दत्तकस्य च पितृरिक्थस्येवं मातामहरिक्थस्याप्यपेतत्वान्न पूर्व-

---

शाखाकर्मकाण्डप्रयोजकीभूतमन्त्रात्मवेदभागः अन्यशाखोद्भवः अन्यागृहीत्र-पेक्षया भिन्ना शाखा यस्य तस्मादुद्भवः । पितृन्यायस्य गृहीततत्पित्रादीनां पितृत्व-पितामहत्वाद्युक्तयुक्तेरित्यर्थः ।

मुख्यमातामहविषयत्वमिति । तथा च गोत्ररिक्थे जनयितुरिति जनकश्रुतेः दत्तकस्यापि जननीपित्रादीनां निषेधाभावात् तेषामेव पार्वणे प्रवेश इति हेमाद्रेरभि-प्रायः । व्यपैतिददतः स्वधेति । वचनविरोधादिति । तथा च 'गोत्ररिक्थे जन-यितुर्नहरेदत्रिमः सुतः' इति वचनपूर्वार्द्धस्थजनयितुरित्यस्य उद्देश्यविशेषणतया पुंस्त्व-स्याविवक्षणात् जननकर्तृत्वसाम्यात् जनन्या अपि स्वधाव्यपगमात् विषयविशिष्टतया तत्पित्रादीनामपि स्वधाव्यपगमस्य युक्तत्वमिति भावः । दातृत्वाभाव इति । ददत इति । दानक्रियानिर्देशात् दातुरेव स्वधाव्यपगमः । मातामहादीनान्तु दातृत्वा-

---

१. प्रतिग्रहीत्र्या मातुः पितामहप्रपितामहा एव दत्तकेन मातामहमातुः पितामहमातुः प्रपितामहत्वेन ग्राह्याः । एतत्सम्बन्धेन विवेचनं पूर्वं कृतमेव । ( सापिण्ड्यसम्बन्धेनाधिकविस्तृत-विवेचनं मञ्जरीव्याख्यायां द्रष्टव्यम् ) ।

मातामहश्राद्धाधिकार इति युक्तम्। अत एवास्वरसाद् गौणमातामहादीनामपि गौणपितृवच्छ्राद्धं कर्त्तव्यमिति हेमाद्रिरेव पक्षान्तरमुपन्यस्तवान्। युक्तं चैतदेव। दत्तकस्यौरसप्रतिनिधितयौरसकार्यकर्तृत्वेनौरसकर्तृकश्राद्धदेवतोद्देश्यकश्राद्धकर्तृत्वमेव सिध्यति। प्रतिगृहीतृपितृगोत्रशाखाकुलदेवताकुलधर्मान्वयवत्प्रतिग्रहीतृपित्राद्यन्वयाविशेषात्।

'वाञ्छन्ति पितरः पुत्रान् गयां यास्यति यः सुतः' इत्यादौ

पुत्रपदाविशेषात्। किं च प्रतिग्रहीत्र्या मातुरादिविवाहोढात्वे—

'पिता पितामहे योज्यः सम्पूर्णे वत्सरे सुतैः।
माता मातामहे योज्या इत्याह भगवान् यमः॥'

इत्यादिविहितसपिण्डीकरणे पालकमातृपितुरेव मातामहत्वेनान्यत्रापि श्राद्धे तद्देवतात्वौचित्यात्। यथा दत्तकादीनां परिवेत्त्रादिदोषोऽपि न।

भिन्नोदरे च दत्ते च पितृव्यतनये तथा।
दाराग्निहोत्रसंयोगे न दोषः परिदेवने॥

---

भावात् स्वधाव्यपगमाभाव इति आशङ्कार्थः। दातृत्वादिति। यद्यपि 'शुक्रशोणितसम्भवः पुत्रोमातापितृनिमित्तत' इत्यनेन पित्रोरेव साक्षात् निमित्तता तथापि शुक्रशोणितस्य पूर्वपूर्वपुरुषसंक्रमितत्वादेव पूर्वपुरुषाणामपि परम्परया आंशिकनिमित्ततोऽस्ति। अतस्तेषां सन्मतिग्रहणार्थमाह्वानं युक्तमितिभावः। ननु परम्पराकर्तृत्वनाद्रियते प्रमाणाभावादित्यत आह किञ्चेति। पितृरिक्थस्येव मातामहरिक्थस्यापीति जन्मप्रभृत्यतिशयितोपकारसत्त्वेऽपिवाचनिकनिषेधात्। यथा पुत्रस्य दत्तकत्त्वे जनकधनेनाधिकारः तथा जननीपित्रादिरूपमातामहादिधनेऽपि अन्यथा विषमशिष्टापत्तेः। न पूर्वमातामहश्राद्धाधिकार इति। गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा' इति वचने रिक्थादिप्रतिषेधेन पिण्डस्यापि प्रतिषेधादिति शेषः। वस्तुतस्तु—

'पितरो यत्र पूज्यन्ते तत्र मातामहाध्रुवम्।
अविशेषेण कर्तव्यं विशेषान्नरकं व्रजेत्॥

इति वचनेन मातामहश्राद्धस्य पितृश्राद्धाधीनत्वनियमात्। जनकादीनां श्राद्धे निषिद्धे सुतरामेव जननीजनकादिरूपमातामहादीनां श्राद्धनिषेधः सिद्धत्येव। अतएव अस्व-

इति गौतमस्मरणात्। 'भिन्नोदर' इति सापत्नभ्रात्रोरन्यतरस्य विवाहादौ न परिवेत्रादिदोष इत्येतदर्थम्। दत्ते चेति जनककुले ज्येष्ठभ्रातृसत्त्वेऽपि न दत्तस्य विवाहादौ परिवेतृत्वम्।

नापि कनिष्ठविवाहादौ ज्येष्ठस्य परिवित्तित्वमित्येतदर्थम्। 'पितृव्यतनय' इति देवरेणोत्पादितस्य भ्रातुः क्षेत्रजपुत्रस्य विवाहादौ देवरपुत्रस्य न परिवित्तिपरिवेतृत्वादिदोषो देवरपुत्रविवाहादौ वा क्षेत्रस्येतदर्थम्। न यथाश्रुतपितृव्यपुत्राभिप्रायम्। परिगृहीतस्य दत्तपदेनैवोपादानादपरिग्रहीतस्य च प्रसक्त्यभावेन निषेधाप्रवृत्त्या प्रतिप्रसवासम्भवात्। न चैतस्मादेव ज्ञापकादपरिगृहीतस्यापि भ्रातृपुत्रस्य पुत्रत्वमिति शङ्कनीयम्। दशानां भ्रातॄणां मध्ये पञ्चानामपुत्रत्वे पञ्चानां च प्रत्येकं दशपुत्रत्वेऽपुत्राणां भ्रातॄणां प्रत्येकं पञ्चाशत्पुत्रतापत्तेः। पञ्चाशतश्च भ्रातृपुत्राणां प्रत्येकं दशपितृकतापत्तेश्चेत्याद्युक्तदूषणगणग्रासात्। तस्माद्यथाव्याहृतमेव साधु।

---

रसात् मुख्यपित्रादिश्राद्धनिषेधेन मुख्यमातामहादिश्राद्धनिषेधबलादित्यर्थः। औरसकर्तृकश्राद्धकर्तृत्वमेव औरसः कर्ता यस्य इति बहुव्रीहिना औरसकर्तव्यश्राद्धकर्तृत्वमेवेत्यर्थः। ग्रहीतृपितृगोत्रेत्यादि। प्रतिग्रहीतरि स्वपितुर्गोत्रशाखाद्यन्वयवदित्यर्थः। प्रतिग्रहीतृगोत्राद्यन्वयाविशेषात् दत्तकस्येति शेषः। पुत्रपदाविशेषात्। पुत्रपदप्रतिपाद्याविशेषात् दत्तकस्येति शेषः। पुत्रानिति बहुवचनेन सकलप्रकारपुत्रोपस्थितेरिति भावः। युक्तिदार्ढ्याय पुनराह किञ्चेत्यादि। आसुरादिविवाहोढात्वे इति। आदिना राक्षसपैशाचपरिग्रहः। यद्यपि 'सपिण्डने निरूप्य चतुरः पिण्डान्' इत्यादिना पतिनैकेन कर्तव्यमित्यादिना च विशेषविधिरस्ति तथापि विशेषवचनारम्भसामर्थ्यात् आसुरादिविवाहिताजातपुत्रेण पितुः सपिण्डनं पितामहमात्रेण मातुः सपिण्डनं मातामहमात्रेण कर्तव्यं दत्तकादीनाम्। परिवेत्तादिदोषोऽपीति। ज्येष्ठेऽनिर्विष्टे कनीयान् निर्विशन् परिवेत्ता भवति। 'परिविन्नोज्येष्ठः परिवेदनीया कन्या परिदायी दाता परिकर्त्ता याजकः ते सर्वे पतिता' इति हारीतातिवचनबोधितपरिवेत्रादिदोषोपीत्यर्थः। दत्ते चेति। दत्तकत्वेऽपि एकोदरप्रभवत्वेन ज्येष्ठकनिष्ठत्वेन परिवेदनप्रसक्तौ आह जनककुले इत्यादि। 'विकल्प्य पितृव्यतनय'

एवं प्रतिग्रहीतृकुलश्राद्धीयं द्रव्यं दत्तकाय प्रतिग्रहीतृजनककुलश्राद्धीयद्रव्यं च द्व्यामुष्यायणाय न दातव्यम् ।

सपिण्डाय सगोत्राय श्राद्धीयं नैव दापयेत् ।
न भोजयेत्पितृश्राद्धे समानप्रवरं तथा ॥

इति हेमाद्रिपारिजातधृतवचनात् । श्राद्धीयं श्राद्धे दत्तद्रव्यम् ॥ ६३ ॥

औरस[1]पुत्रस्येवौरसपुत्र्या अप्यपचारे क्षेत्रजाद्याः पुत्र्यः प्रतिनिधियो

---

इत्यस्य सार्थक्यं दर्शयति देवरेणोत्पादितस्येत्यादि । तथा च तत्र भ्रातुः क्षेत्रे अपरेण भ्रात्रा अनुमतिमन्तरेण शुल्कतः पुत्रमुत्पाद्य तस्मिन्नेव क्षेत्रे भ्रात्र्यनुमत्या अपर उत्पादितः अथवा भ्रातुः क्षेत्रजपुत्रमुत्पाद्य तस्मिन्नेव क्षेत्रे शुल्कतः पुनरनुमतिं विना अपर उत्पादितस्तत्रद्वयोरेकोदरप्रभवत्वेन परिवेदनप्रसक्तौ पितृव्यतनय इत्यनेन प्रतिप्रसव इति वक्तुर्लार्थः ॥ ६३ ॥

यथा पिण्डोदकाद्युपकारितया औरसपुत्राद्यभावे दत्तकादिकरणं तथा स्वपुत्रद्वारा पिण्डोदकाद्युपकारितया औरसकन्याभावे दत्तककन्याग्रहणं कर्त्तुं शक्यते इति

---

१. औरसकन्याया अभावे क्षेत्रजाद्या गौणदुहितरस्तत्प्रतिनिधित्वेन ग्राह्या इतीदं नन्दपण्डितैरुक्तम् । एतदुपोद्बलकत्वेन दत्तकक्रीतकृत्रिमादिदुहितॄणां पुराणस्थान्युदाहरणानि प्रदर्शितानि । परन्तु भूमिकायां प्रदर्शितरीत्या पुत्रस्यैव प्रतिनिधिः सम्भवति न दुहितुः । यतो दुहित्रुत्पतिविषये नित्यविधिः क्वाप्युक्तो न दृश्यते । तथैव 'दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः' इतिवचने विश्वस्य यदि दत्तकादृते पुत्रप्रतिनिधिर्भवितुं नार्हति तर्हि सर्वप्रकारिका दुहितरः प्रतिनिधित्वेन स्वीकार्या भवन्तीति वचनं न सामीचीन्यमावहति । किंच दत्तकपरिग्रहविधिवद्दत्तकदुहितृपरिग्रहविधिः क्वापि न प्रतिपादितः । प्रत्युत भूमिकायां प्रदर्शितरीत्याभिन्नभिन्नानि दुहितृप्रतिनिध्युदाहरणानि पुनरिदमेव दर्शयन्ति असंरक्षितानामनाथानां कान्यानां पुत्राणां वा रक्षणसंवर्धने भवेतां तथा दुर्दैवानीमान्यपत्यानि स्वयौवनदशायां समाजकार्याणि सामीचीन्येन सम्पादयितुं प्रभवेयुरित्यतस्तेषां पालनादिव्यवस्थावश्यकताभिन्नभिन्नमार्गैः समाजगतेषु कन्यापुत्रापेक्षिषु समर्थपुरुषेषु शास्त्रेण निक्षिप्ता । औरसपुत्राभावे योऽयमाहत्य पुत्रप्रतिनिधिः कर्तव्यो भवति स केवलं क्षेत्रज, पुत्रिका, पुत्रिकापुत्र दत्तकेष्वेव करणीयः । एतस्मिन् कलियुगे तु स केवलं दत्तकविधानेनैवानुष्ठेयः एतद्विषये क्रीतापविद्धस्वयंदत्तकानीनपौनर्भवगूढजसहोढप्रभृतिपुत्राणां क्रियानप्युपयोगो नास्ति । दुहितॄणां पुनर्नास्त्येव नास्ति ।

भवन्ति। मुख्यापचारे प्रतिनिधिरिति न्यायात्। मुख्यत्वं चास्या दानादिविधौ-साधनत्वेन। साधनत्वं चतुर्गमनविधिना साधिताया द्रव्यार्जनविधिनाऽर्जितस्य व्रीह्यादेः क्रतुसाधनत्ववत्। तथा हि–रात्रिसत्रन्यायेन 'ऋत्वियात् प्रजां विन्दामहे ऋत्वियात्प्रजां विन्दन्ते' इत्याद्यर्थवादोन्नीते ऋतावुपेयात्, तस्मिन् संविशेत्, इत्यादौ नित्ये ऋतुगमनविधौ स्त्रीपुंससाधारण्याः श्रुतिसिद्धायाः प्रजाया एव भाव्यत्वमवगम्यते। प्रजनयतीति प्रजेति व्युत्पत्त्या प्रजननशक्तिमतः स्त्रीपुंसस्यैव प्रजाशब्दवाच्यत्वान्न नपुंसकस्य। तस्य शुक्रशोणितसाम्यजन्यत्वेन नान्तरीयकत्वात्। अतएव—

अनधीत्य द्विजो वेदमनुत्पाद्य च सन्ततिम्।
अनिष्ट्वा विविधैर्यज्ञैर्मोक्षमिच्छन् पतत्यधः॥

---

व्यवस्थापयितुं विचारमवतारयति औरसपुत्रस्येव अपचारे अभावे। क्षेत्रजाद्या इति। आद्यपदेन दत्तककन्यादिकरणापरिग्रहः। अस्या औरसकन्याया दानादिविधौ 'पिता दद्यात् स्वयं कन्यां भ्राता वानुमतेः पितुः' इत्यादिवचनबोधितदानादिविधौ इत्यर्थः। वस्तुतस्तु 'शुक्रशोणितसम्भवः पुत्रो मातापितृनिमित्तत' इत्यत्र शुक्रशोणितसम्भवत्वविशेषणात् कन्याया अपि शुक्रशोणितसम्भवत्वसद्भावात् उद्देश्यविशेषणत्वेन पुंस्त्वाविवक्षायां तद्वचनबोधितदानादिविधावित्यर्थः। साधनत्वेन प्रयोजकत्वेन ऋतुगमनविधिना 'ऋतौ भार्यामुपेयात्' इति नियमविधिप्रवर्त्तितगमनेनेत्यर्थः। साधितायाः सम्पादिताया इत्यर्थः। द्रव्यार्जनविधिना द्रव्यमर्जयन् 'ब्राह्मणः प्रतिगृह्णीयात्' याजयेदध्यापयेदिति श्रुत्युल्लिखितविधिना। ननु 'ऋतौ भार्यामुपेयात् पर्ववर्ज्यं व्रजे ऋतौ' इत्यादिनियमविधिघटितवाक्ये प्रजादिपदाभावात् कथं कन्याया विधिविषयत्वमित्यत आह रात्रिसत्रन्यायेनेति। स च न्यायो यथा 'प्रतितिष्ठन्ति ह वै य एता रात्रिरूपयन्तीति' श्रूयते। अत्र रात्रिशब्देन 'अथष आयुरथैष ज्योति'रित्यादि वाक्यविहिततत्तन्नामकाः सोमयागविशेषा उच्यन्ते। अत्र संशयः किमत्र स्वर्ग एव अधिकारिविशेषणमुत प्रतिष्ठेति। अत्रैवकाम इत्यत्र श्रवणात् विधिशक्तिलभ्यस्वर्ग एव विशेषणम्। सन्देहे हि वाक्यशेष स्वीकारो न निश्चये। निश्चितश्चेह सर्वाभिलषितः स्वर्गो विधिसामर्थ्यात्। नियोज्यविशेषणं या च प्रतिष्ठाविषया श्रुतिः, सा

इतितादृश्या एव सन्ततेरनुत्पादेऽधःपातः स्मर्यते। सन्तनोत्यन्वयमिति सन्ततिः प्रजापर्याय एव। 'प्रजा स्यात् सन्ततौ जने' इति कोशात्। एवम्—

अपत्यार्थं स्त्रियः सृष्टाः स्त्री क्षेत्रं बीजिनो नराः।
क्षेत्रं बीजवते देयं नाबीजी क्षेत्रमर्हति॥

इत्यत्रापत्यशब्दो व्याख्यातः। 'अपत्यं कस्मादपतनं भवति नानेन पततीति वा' यास्कस्मरणात्—

आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी।
आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे॥

---

लक्षणया स्वर्गपरैव कल्प्यते। इहैव जैमिनिसूत्रम्—'क्रतौ फलार्थवादमङ्गवत् कार्ष्णाजिनिरिति'। यथा प्रयाजाद्यङ्गेषु फलश्रुतिरर्थवादरूपा तथा क्रतौ अर्थवादमाह कार्ष्णाजिनिरिति। एवं प्राप्ते सिद्धान्तसूत्रम्—'फलमात्रे यो निर्देशात् अश्रुतो ह्यनुमानं स्यात्' इति। प्रतिष्ठाफलनिर्देशादेवाधिकारिविशेषणम्। सर्वथा फलाश्रुतावेव स्वर्गानुमानम्। तस्माद् वाक्यशेषस्थमेव फलमित्यात्रेयो मुनिराह। ततश्च 'प्रतिष्ठाकाम आयुषा यजेत' इत्यादिविधयः कल्प्यन्ते, तद्वत् प्रकृते 'प्रजाकाम ऋतावुपेयात्' इति विधिविकल्प्यः। ऋत्वियात् ऋतुगमनात परत्र ऋत्वियादिति हेतुगर्भविशेषणम्। तथा च यत ऋत्वियात् ऋतुगमनात् प्रजां विन्दते। अत ऋत्वियात् ऋतुगमनात् प्रजां विन्दामहे इत्यर्थः। अर्थवादकल्पितविधिं दर्शयति ऋतावुपेयादिति तस्मिन् ऋतौ स्त्रीपुंसाधारण्या इति। यद्यपि युग्मासु पुत्रा जायन्ते, स्त्रियोऽयुग्मासु रात्रिषु। तासु युग्मासु सम्विशेदित्यादिनियमात् युग्मदिनर्त्तुगमने पुत्रस्यैव सम्भवस्तथापि—

पुमान् पुंसोधिके शुक्रे स्त्रीभवेदधिके स्त्रिया।
समे पुमान् पुंस्त्रियौ वा क्षीणेऽल्पे च विपर्य्ययः॥

इति मनुवचनात् युग्मेऽपि कन्यायाः सम्भवात् स्त्रीपुंसाधारण्यमिति भावः। भाव्यत्वं फलत्वम्। ननु बहुषु पुत्र एव प्रजाशब्दप्रयोगदर्शनात् पुत्र एव प्रजा न कन्या इत्यत आह प्रजनयतीति। ननु प्रजनयतीति व्युत्पत्त्या प्रजात्वसिद्धे क्लीबस्यापि प्रजात्वं स्यादित्यत आह नवंसकस्येति। नान्तरीयकत्वादिति। उद्दिश्यतासम्बन्धेन प्रकृत्यभावत्वे सति प्रवृत्तिजन्यफलशालित्वं नान्तरीयकत्वम्। यथा ओदनपाक-

इतिकोशाच्च। यद्यत्र—'पुमान् पुरुमना भवति पुंसतेर्वा' यास्कोक्त्या पुंपदं बहुज्ञपरं तदा पुंसतेर्वेति तदुक्त्यैव प्रसवकर्तृमिथुनपरमेव व्याख्यायताम् ॥ ६४ ॥

अत एव यास्कः—मिथुना पित्र्यदायादा इति। तदेतादृक्श्लोकाभ्यामप्युक्तम्;—

अङ्गादङ्गात्संभवसि हृदयादधिजायते।
आत्मा वै पुत्रनामाऽसि स जीव शरदः शतम् ॥ इति ॥
अविशेषेण पुत्राणां दायो भवति धर्मतः।
मिथुनानां विसर्गादौ मनुः स्वायंभुवोऽब्रवीत् ॥

इत्यत्र पुत्रपदं मिथुनपरं दर्शितवान्। न चात्र मिथुनपदं पुत्रस्नुषापरमिति

---

प्रवृत्तौ अनुद्दिश्यस्य सहचरितामषस्य पाकः। तथा च पुत्रस्य साक्षादुपकारकत्वात् दुहितुश्च स्वपुत्रद्वारोपकारकत्वात्। उद्देश्यत्व नपुंसकस्य उपकारकत्वाभावादेव- नोद्देश्यत्वमितिभावः। अतएव सन्ततेरतिप्रयोजनीयत्वादेव। अतिप्रामाणिकतया स्वमतपोषकत्वेन निरुक्तकारमतस्वरसं दर्शयति यास्कस्मरणादिति तथा च न पतति कस्मादिति व्युत्पत्त्या पतननिवारकतया कन्यापुत्रयोरेवापत्यसंज्ञा इति भावः। प्रसवकर्तृमिथुनपरमेव प्रसवकर्त्तुः कन्यापुत्रपरमेव ॥ ६४ ॥

यास्क इति दर्शितवान् इत्यनेनान्वयः। पित्र्यदायादाः पितृरिक्थग्राहिणः एतादृग वचनाभ्यां अनन्तरोक्तवचनाभ्यां पुत्राणामिति पुत्रदुहितृणामित्यर्थः। दाय इति अङ्गादङ्गात् सम्भवति पुत्रवत् दुहिता नृणां तस्या पितृधनं त्वन्यः, कथं ग्रहीत मानव इति यथैवात्मा तथापुत्रः पुत्रेण दुहिता समा तस्यामात्मनि जीवन्त्यां कथमन्यो- हरेद्धनमित्यादिवचनैरिति शेषः। पुत्रपदं पुत्राणामित्यत्र पुत्रपदमित्यर्थः। मिथुनपरं कन्यापुत्रपरं। दर्शितवानिति। तथा च पुत्रस्य दायो भवतीत्युक्तौ पुत्रत्वाविशेषात् सर्वेषां दायप्राप्तौ बहुवचनानर्थक्यात् एकशेषकल्पनया कन्यापुत्रप्रतीतौ बहुवचनस्य सार्थक्यं वाच्यम्। न च तथापि द्विवचने वक्तव्ये कथं बहुवचनं अर्थवदिति वाच्यं दत्तादत्ताभेदेन कन्याया द्वैविध्यात् उपकारतारतम्येनाधिकारतारतम्यज्ञापकत्वाच्च बहुवचनोपपत्तेः। असङ्गतेरिति स्नुषाया अङ्गजत्वबाधात् अङ्गजत्वनिबन्धनदायाधिकार-

वाच्यम् । अङ्गादङ्गात्सम्भवसीत्यस्यासंगतेः । न दुहितर इत्येके । पुमान्दायादोऽदायादा स्त्रीति विज्ञायते । इत्येकीयमते दुहितृनिराकरणासंगतेश्च । यच्च नापुत्रस्य लोकाऽस्तीत्यादौ पुत्रपदं तदप्युभयपरमेव ।

भ्रातृपुत्रौस्वसृदुहितृभ्याम् ( पा० सू० १।२।६८ ) इति पाणिनिना पुत्रदुहितृपदयोरेकशेषस्मरणात् । एतेन—

"अपुत्रेणैवकर्तव्यः पुत्रप्रतिनिधिः सदा" ।

इत्यादावपि पुत्रपदं व्याख्यातम् । तत्साधनं च पुत्रिकाकरणलिङ्गमग्रे वक्ष्यते ।

---

बाधाच्चेति शेषः । दुहितृनिराकरणासङ्गतेश्चेति अत्रायमाशयः यदि दुहितॄणां दायप्रसक्तिर्न स्यात् तदा निषेधोनोपपद्यते । एकीयमते अस्वरसबीजन्तु बहुवचनस्य सार्थक्याय एकशेषकल्पनया कन्यापुत्रयोर्दायाधिकारप्रतीतिः अदाया स्त्रीति निषेधस्य परिगणितव्यक्तिरिक्तसपिण्डस्त्रीपरतया सार्थक्यात् कन्यायाग्राह्यत्वे वचनविरोधमपनेतुमाशङ्कते यच्चेति उभयपरमेवेति एकशेषकल्पनयेति शेषः । पुत्रपदस्य एकशेषकल्पने पाणिनिस्वरसं दर्शयति । भ्रातृपुत्रावित्यादि एतेन पाणिनिसूत्रानुसारात् एकशेषस्वीकारेण व्याख्यातं पुत्रकन्योभयपरत्वेन व्याख्यातम् । अतएव दुहितुरपि ग्रहणावश्यकत्वादेव । अदृष्टवैकल्येन कन्याजननादृष्टाभावेन कृष्णप्रतिपच्छ्राद्धादिनेति कन्याकामनया कृष्णप्रतिपदि श्राद्धकरणेन तत्सम्पादनं कन्याजननादृष्टसम्पादनम् । अत्रदृष्टान्तं दर्शयति कृष्णचतुर्थी श्राद्धादिना इत्यादि । तथाच निर्णयसिन्धुधृतयाज्ञवल्क्यवचनम् । कन्या कन्यावेदिनञ्च पशून् वै सत्सुतानपि द्युतं कृषिञ्च वाणिज्यं द्विशाखं शाखकन्तथा ब्रह्मवर्चस्विनः पुत्रान् स्वर्णरौप्ये संकुप्यके ज्ञातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम् । कन्यावेदिनं कन्यावरं स्वर्णरूप्ये इति एकादशं संकुप्य इति द्वादशं कुप्यं सुवर्णरजताभ्यामन्यत्तैजसम् । प्रतिपत् प्रभृतिषु चतुर्दशतिथिषु एकैककामनया श्राद्धं कर्तव्यम् ।

गमनकरणिकायां गमनघटिकायां फलोत्पादिकाप्रवृत्तिः भावना भाव्यं फलं गुणफलतया गुणकथनप्रयोजकत्वेन अनुवादः गुणानुवादः इन्दुसौकर्य्यं चन्द्रानुकुल्यसहितम् । आश्वलायनगृह्यमतं प्रमाणयति आश्वलायनेनापीति गृह्णामि इत्यारभ्य जायेरन् इत्यन्तमेकं सूत्रम् । अंगुलीभिरेव स्त्रीकाम इति द्वितीयं लोमान्ते हस्तं सांगुष्ठ-

अतएवोक्तं । "तत्समः पुत्रिकासुतः" इति, अङ्गादङ्गात्संभवति पुत्रवद्दुहिता नृणाम्, इति च । यदि चादृष्टवैकल्येन कन्यानुत्पादस्तदा कृष्णप्रतिपच्छ्राद्धादिना तत्सम्पादनं कार्यं, कृष्णचतुर्थीश्राद्धादिना पुत्रादृष्टस्येव । यत्तु गमनकरणिकायामेव भावनायाम् 'एवं गच्छन् पुत्रं जनयेत्' इति पुत्रस्यैव भाव्यत्वं प्रतीयते तत्प्रजापदोपात्तयोः स्त्रीपुंसयोर्मध्ये पुत्रस्य तद्वाक्यविहितगुणफलतयाऽवयुत्यानुवादः पुत्रार्थिप्रवृत्त्यर्थः । गुणाश्च युग्मनिशाशुक्राधिक्यस्त्रीवामतेन्दुसौकथ्यपुंसवनापूर्वादयो योगिमन्वादिभिरेव–एवमित्यादिना स्पष्टीकृताः । आश्वलायनेनापि पाणिगृहणे पुत्रपुत्र्योर्गुणफलत्वं प्रकटितम् । गृभ्णामि ते सौभगत्वाय हस्तमित्यङ्गुष्ठमेव गृह्णीयात्, यदि कामयेत पुमांस एव मे पुत्रा जायेरन्नित्यङ्गुलीरेव स्त्रीकामो रोमान्ते हस्तं साङ्गुष्ठमुभयकाम इति । एतेन स्त्रियोऽयुग्मासु रात्रिष्वित्यपि व्याख्यातम् । तस्मात्पुत्रस्येव श्राद्धादिकर्तृत्वेन परलोकसाधनतया पुत्र्य अपि दानश्राद्धादिविधिसाधनत्वेन सिद्धे मुख्यत्वे तदपचारे प्रतिनिधिर्युक्त एव ।

"दुहिता दुरहिता दूरे हिता दोग्धा वा"

इति निरुक्त्या । दुहितुर्दौहित्रद्वाराऽपि पित्रुपकारकत्वं दर्शयति यास्कः ॥ ६५ ॥

---

मुभयकाम इति तृतीयसूत्रं पुत्राः पुत्रामनस्कत्रायका इत्यर्थः अतो न पौनरूक्तम् । अंगुलीरेव एवकारेण अंगुष्ठव्यावृत्तिः स्त्रीकामः दुहितृकामः उभयकामः पुत्रदुहित्रुभयकामः । एतेन स्त्रीकामनायाः शास्त्रसिद्धत्वेन व्याख्यातं दुहितुर्भाव्यत्वेन प्रकटितम् । उपसंहरति तस्मादिति श्राद्धकर्तृत्वेन साक्षात् श्राद्धकर्तृत्वेन । श्राद्धादिविधिसाधनत्वेन स्वपुत्रद्वारा श्राद्धादिकर्तृत्वेन । मुख्यत्वे सिद्धे इत्यस्य पुत्रस्य पुत्र्या अपि प्राक् क्रान्तेन सम्बन्धः । युक्त इति तथा च पुत्रस्य साक्षात् श्राद्धकर्तृत्वेन दुहितृदौहित्रसत्वेऽपि दत्तककरणस्य एवं स्वपुत्रद्वारा श्राद्धकर्तृत्वेन वन्ध्याविधवादुहितृसत्वेऽपि दत्तककन्याकरणस्य चावश्यकत्वमिति भावः । दूरे व्यवधाने स्वपुत्रद्वारा इति यावत् हिता उपकारिणी ॥ ६५ ॥

मनुरपि—

पौत्रदौहित्रयोर्लोके विशेषो नोपपद्यते ।
दौहित्रोऽपि ह्यमुत्रैनं संतारयति पौत्रवत् ॥ इति ॥

महाभारते गान्धार्युक्तिश्च—

एका शताधिका बाला भविष्यति गरीयसी ।
तेन दौहित्रजाल्लोँकान् प्राप्नुयामिति मे मतिः ॥

अन्यत्रापि—

दुहितर एव मातापित्रोः किमौरसाः पुत्राः ।
निपतन्दिवो ययातिर्दौहित्रैरुद्धृतः पूर्वम् ॥ इति ॥

---

स्वपुत्रद्वारा दुहितुरुपकारत्वे मनोः स्वरसं दर्शयति मनुरपि नोपपद्यत इत्यत्र नास्ति धर्मत इति जीमुतवाहनादिसम्मतः पाठः । महाभारतवचने नापि तत्साधयति महाभारत इति औरसाः पुत्रा औरसपुत्रतुल्याः किमिति किं न भवन्तीतिशेषः किं प्रश्ने वितर्के च इति कोषात् । दौहित्रान् विशिनष्टि दौहित्रैरित्यादि अष्टकादिभिः अष्टक-प्रतर्द नवसुमनःशिविनामकैः कालीनैः मातुः कन्यावस्थायां जातैः माधवीनाम्नी ययातिकन्या तस्यां जातैः मागधीपुत्रैरित्यपपाठः । इयं माधवी परपरिग्रहेण सम्भुक्तापि मुनिवरेण कन्यैव स्थिता । विस्तारभयात् संक्षिप्य प्रकृतोपयोगिवचनानि उद्धृतानि । तथा च उद्योगपर्वणि—

"चतुरः पश्यतो नृपान् तेषां मध्ये पपातह ।
प्रतर्दनो वसुमनाः शिविरौशीनरोऽष्टकः ॥
पपातमध्ये राजर्षिर्ययातिः पुण्यसंक्षये ।
तमाहुः पार्थिवाः सर्वे दीप्यमानमिव श्रिया ॥
को भवान् कस्य वा बन्धुर्देशस्य नगरस्य वा ।
ययातिरस्मिराजर्षिः क्षीणपुण्यश्च्युतोदिवः ॥
यतेयं सत्स्वितिध्यायन् भवत् सुपतितस्ततः ।
सत्यमेतद्भवतु ते काङ्क्षितं पुरुर्षभ ॥
सर्वेषां नः क्रतुफलं धर्मञ्च प्रतिगृह्यताम् ।
नाहं प्रतिग्रहधनो ब्राह्मणः क्षत्रियो ह्यहम् ॥

दौहित्रैरष्टकादिभिः कानीनैर्मागधीपुत्रैः। एवं चौरसदुहित्रभावे दौहित्रकृतलोकप्राप्त्यर्थं क्षेत्रजादिदुहितॄणामपि प्रतिनिधित्वेनोपादानं सिद्धमेव। न च व्रीहिप्रतिनिधित्व इव वचनमस्ति। यद्येवं तर्हि भर्त्रपचारे देवरस्येव भार्यापचारे शालिकायाः प्रतिनिधित्वं स्यात्। श्वशुरशरीरावयवान्वयेन सौसादृश्यादिति चेन्नैवम्।

---

न च मे प्रवणाबुद्धिः परपुण्यविनाशने॥

नारद उवाच—

एतस्मिन्नेव काले तु, मृगचर्याक्रमागताम्।
माधवीं प्रेक्ष्य राजानस्तेऽभिवाद्येदमब्रुवन्॥
किमागमनकृत्यन्ते किं कुर्मः शासनं तव।
आज्ञाप्याहि वयं सर्वे तव पुत्रास्तपोधने॥
तेषान्तद्भाषितं श्रुत्वा माधवो परया मुदा।
पितरं समुपागच्छ ययातिं साववन्द्य च॥
स्पृष्ट्वा मूर्द्धनि तान् पुत्रांस्तापसी वाक्यमब्रवीत्।
दौहित्रास्तव राजेन्द्र मम पुत्रा न ते पराः॥
इमे त्वां तारयिष्यन्ति दृष्टमेतत् पुरातने।
अहन्ते दुहिता राजन्! माधवी मृगचारिणी॥
मातामहं नृपतयः तारयन्ति दिवच्युतम्।
अथ तस्मादुपगतो गालवऽप्याह पार्थिवम्॥
तपसोऽष्टमभागेन स्वर्गमारोहतां भवान्।

षोडशाध्याये—

एतत् श्रुत्वा तु सा कन्या मानवं वाक्यमब्रवीत्।
ममदत्तोः वरः कश्चित् केनचिद्ब्रह्मवादिना॥
प्रसूत्यन्ते प्रसूत्यन्ते कन्यैव त्वं भविष्यसि।
सत्वं ददस्व मां राज्ञे प्रतिगृह्य हयोत्तमान्॥

औशीनर उशीनरनृपस्यापत्यं इदन्तु शिविविशेषणं मृगचारिणीमृगवत् स्वेच्छया चरति कर्त्तरि णिनिति अतो महाभारतानभिज्ञेन केनचित् यत् अष्टकादिभिः श्राद्धैरित्युद्धारस्य हेतुरिति वर्णितं तन्मोहविजृम्भितमेव। एवञ्च स्वपुत्रद्वारा दुहितु-

न हि श्वशुरशरीरावयवान्वयेन भार्योपादानं किंतु तस्याः संस्कृतस्त्रीत्वेन। न च तच्छालिकायामस्ति। यत्र च कनिष्ठादौ तदस्ति तत्र भवत्येव तस्या ज्येष्ठाप्रतिनिधित्वम्। यदाह व्यतिरेकमुखेन योगीश्वरः—

सत्यामन्यां सवर्णायां धर्मकार्यं न कारयेत्।
सवर्णासु विधौ धर्म्ये ज्येष्ठया न विनेतरा॥ इति।

---

रुपकारित्वे च। न चेति न हीत्यर्थः ब्रीहिप्रतिनिधित्व इवेति यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत् यवानामिव गोधूमम्, ब्रीहीणामिव शालय इति।

यद्येवं वचनाभावेऽपि न्यायतः प्रतिनिधित्वस्वीकारश्चेत्। तस्या भार्यायाः संस्कृतस्त्रीत्वेन विवाहजन्यसंस्कारवन्नारीत्वं भार्यात्वमिति तल्लक्षणात्। न च तत् श्यालिकायाः इति तथाच स्वभर्त्तुसंस्कार एवात्रमुख्यसौसादृश्यं परसंस्कृतायाः श्यालिकायाः मुख्यतो सादृश्याभावात् न न्यायप्राप्तप्रतिनिधित्वावसरः। श्वसुरावयत्वेन यथाकथञ्चित् सौसादृश्यसम्भवेऽपि न भार्य्याया इति सत्याषाढवचनेन प्रतिनिधित्वनिषेधात् न तत्प्रसक्तिरितिभावः। कनिष्ठादौ सवर्णकनिष्ठभार्य्यादौ आदिना अनन्तरवर्णापरिग्रहः तदस्ति स्वभर्त्तृसंस्कारोऽस्ति तस्याः कनिष्टादेः ज्येष्ठाप्रतिनिधित्वमिति तथा च यत्र सपत्नीको धर्ममाचरेदित्यादौ धर्माचरणक्रियायां ज्येष्ठयासहभावो विहितः तत्र ज्येष्ठायाः कार्य्याक्षमत्वे तत् प्रतिनिधित्वेन कनिष्ठया सहभावो विधीयते। व्यतिरेकमुखेन निषेधमुखेन। नकारयेदिति निजन्तत्वाद्धिकर्मता। अन्यां अनन्तरवर्णां सवर्णासु वह्वीसु सतीषु इतरया ज्येष्ठासत्वे कनिष्ठया न कारयेदित्यनुसङ्गेनान्वयः। निजन्तकृधातोरनिजन्तकर्त्तरि कर्मणोविकल्पकत्वात् इतरा इति अनिजन्तकर्त्तुः कर्मत्वेन द्वितीया बहुचनम्। आसां सवर्णानां विषमवर्णानाञ्च न्यायत एव सौसादृश्यन्यायत एवेत्यर्थः। अत्रेदमववेयं यत्र तु सवर्णान्यवर्णयोः एवं ज्येष्ठकनिष्ठयोः सवर्णयोरवस्थितिः तत्र सवर्णाया ज्येष्ठायाश्च स्वकार्याक्षमत्वे विषमवर्णायाः। सवर्णकनिष्ठायाश्च न्यायप्राप्तप्रतिनिधित्वमेव न तु सवर्णाया अभावे विषमवर्णाया ज्येष्ठाया अभावे सवर्णकनिष्ठायाः प्रतिनिधित्वं न्यायावगतं यतः सवर्णाया अभावे अनन्तरवर्णायाः ज्येष्ठाया अभावे कनिष्ठायाश्च सहभावस्य विधेयतया मुख्यवाचनिकत्वमेव परमनुभूयते तथाच योगीश्वरवचने सत्यामित्युपादानात् असत्यामन्यया सहभावः प्रतीयते। अतएव मनुः—

तस्मात्सिद्धमासां न्यायत एव प्रतिनिधित्वम् ॥ ६६ ॥

तत्र क्षेत्रजगूढजकानीनसहोढपौनर्भवानां पञ्चानां मध्ये क्षेत्रजोत्पादनं मनुरेवाऽऽह—

देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया ।
प्रजेप्सिताऽधिगन्तव्या संतानस्य परिक्षये ॥

इत्यनेन सतानस्योभयविधस्य परिक्षय उभयविधायाः प्रजाया इष्टत्वेन यथायथं प्रतिनिधित्वमित्यर्थः । इतरासु चतसृषु नोत्पादनविध्यपेक्षा । लोकस्वभावसिद्धत्वात् । तासां च नामानि पुत्रवत्तान्येव । प्रवृत्तिनिमित्तस्योभयत्र

---

यस्तु तां कारयेन्मोहात् सजात्यास्थितयान्यया ।
यथा ब्राह्मणचण्डालः पूर्वदृष्टः स्तथैवसः ॥

स्पष्टमाह विष्णुः—

सवर्णाया अभावे अनन्तरवर्णौ वापदिनत्वेवं द्विजः शूद्या इति। न च न भार्याया इति न्यायप्राप्तप्रतिनिधिप्रतिषेधात् कथमत्र प्रतिनिधित्वमितिवाच्यं न भार्याया इत्यनेन भार्य्याभिन्ने भार्य्याया प्रतिनिधित्वनिषेधात् भार्यान्तरे भार्यायाः प्रतिनिधित्वे क्षतिविरहात् ॥ ६६ ॥

सम्यक् घृतभक्तादिनियमात् नियुक्तया पित्रादिगुरुणा इति शेषः ईप्सिता कार्यक्षमा अधिगन्तव्या उत्पादयितव्या एतेन वैधत्वं प्रतिपादितम्, उभयविधस्य औरसपुत्रदुहितृरूपस्य। इतरासु क्षेत्रजभिन्नगूढजप्रभृतिप्रजासु नोत्पादनविध्यपेक्षा गूढजादीनामुत्पादनं विधिं नापेक्षते क्षेत्रजोत्पादनमिव कर्तव्यताबोधकमुनिवचनाभावादिति भावः। ननु विध्यभावात् कथं तदुत्पादने प्रवृत्तिरित्यत आह लोकस्वभावसिद्धत्वादिति विषयसौन्दर्येण कामिनां तत्र स्वतः प्रवृत्तिसत्वादित्यर्थः। नामानि पुत्रवत् पुरुषस्य परक्षेत्रजातत्वे यथा क्षेत्रजपुत्र इत्यादि नाम तथा स्त्रिया अपि परक्षेत्रजातत्वे क्षेत्रजा पुत्रीतिनाम । प्रवृत्तिनिमितस्य परक्षेत्रजातत्वादिरूपशक्यतावच्छेदधर्मस्य उभयत्रापि पुत्रदुहितृरूपोभयसन्तानेऽपि तुल्यत्वात् साधारणत्वात्। विकलावयवरब्धत्वेन अविकलपितृमातृभयावयवरब्धत्वाभावेन केवलमात्रवयवारब्धत्वेनापि न्यायत एव सिद्धम्।

अवयवान्वयरूपमुख्यसौसादृश्यन्यायसिद्धमेव तत्र क्षेत्रजगूढजयोरेव मातृमात्रा-

तुल्यत्वात्। तासां चौरसप्रतिनिधित्वं विकलावयवारब्धत्वेन न्यायत एव सिद्धं व्रीह्यपचारे नीवाराणामिव। अवयववैकल्यं च स्त्र्यवयवमात्रान्वयेन भर्त्रवयवान्वयाभावात्।

अस्त्वेवं क्षेत्रजादीनां दुहितॄणां औरसदुहितृप्रतिनिधित्वं न्यायबलात् दत्तकक्रीतकृत्रिमदत्तात्मापविद्धानां सौसादृश्यन्यायाभावे कथमस्तु प्रतिनिधित्वं मैवम्। तत्रापि—

सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः।

इति योगिप्रतिपादितसजातीयत्वादिसौसादृश्यसद्भावादस्त्येव न्यायप्रसरः। उपपादितं चैतदधस्तात्पुत्रप्रतिनिधिविचारे।

---

वयवरब्धत्वेन कानीनादीनान्तु उभयावयवरब्धत्वेन मुख्यसौसादृश्य न्यायसिद्धप्रतिनिधित्वं बोध्यम्। व्रीह्यपचारे इति व्रीहिः शरत्पक्वधान्यं तस्यापचारे अप्राप्तौ तत् साध्यपुरोडाशसम्पत्त्यर्थं नीवारादीनां यथा प्रतिनिधित्वं तद्वत्। अवयववैकल्यं आनुपूर्विकोभयावयवरहितत्वं एतदेव स्पष्टयति स्त्र्यवयव इत्यादिना स्त्र्यवयवः मातुरवयव इत्यर्थः मातृरुद्व्यावृत्तिं दर्शयति भर्त्रवयवान्वयाभावादिति क्षेत्रजगूढजयोरितिशेषः। तथा च क्षेत्रजगूढजयोः क्षेत्रिणोऽवयवसम्बन्धाभावेऽपि तत्पत्न्यवयवसम्बन्धेनापिप्रतिनिधिपुत्रत्वं सिद्धमितिभावः। न्यायाभावे मुख्यसौसादृश्यन्यायाभावे। सौसादृश्यसद्भात् सजातीयत्वरूपयथाकथञ्चित् सौसादृश्यसद्भावादित्यर्थः। आदिना नाम संकीर्तनार्थगृहीतस्य विजातीयस्य प्रतिनिधित्वसिद्ध्यर्थं नरत्वरूपसाधारणधर्मपरिग्रहः। न्यायप्रसरः साधारणसौसादृश्यन्यायावसर इत्यर्थः दत्तकादीनां प्राग्यद्वाचनिकत्वमुक्तं तन्मुख्यन्यायाभावप्रदर्शनार्थं न तु न्यायसामान्या ·भावप्रदर्शनार्थमतो न स्ववचोव्याघातः इत्यर्थः। न च दत्तकादीनां न्यायप्राप्तप्रतिनिधित्वे न स्वामित्वस्य भार्यायाः पुत्रस्य इत्यादिप्रतिनिधिप्रतिषेधकसत्याषाढवचनविरोध इति वाच्यं तस्य न्यायप्राप्तमात्रनिषेधकत्वेन न्यायमूलकवाचानिकनिषेधकत्वाभावात्। एतत् दत्तकादीनां पुत्रप्रतिनिधित्वम्। अधस्तात् प्रतिनिधिश्च क्षेत्रजाद्येकादशविध इत्यादि प्रकरणे। पञ्चानां पञ्चानां मध्ये इत्यर्थः। मात्रवयवान्वयेन इत्युपलक्षणं क्वचित् मातृपित्रुभयावयवान्वयोऽपि धर्त्तव्यः तथा च प्राथमिकत्वात् पञ्चानां मध्ये क्षेत्रगूढजयोरेव मात्रवयवसम्बन्धः कानीनादीनान्तु त्रयाणां उभयावयवसम्बन्धः यत् पञ्चानां मात्रवयवान्वयेन इत्युक्तं

ननु क्षेत्रजादीनां पञ्चानां मात्रवयवान्वयेन दत्तकादीनां पञ्चानां सजातीयत्वेनास्तु प्रतिनिधित्वं 'पूर्वाभावे परः परः' इति क्रमविधानं तु कथम्। सादृश्याविशेषादिति चेन्नैवम्। पूर्वपूर्वश्रेयस्त्वेनेति ब्रूमः। तदाह विष्णुः—एतेषां पूर्वः पूर्वः श्रेयानिति। श्रेयां दृष्टादृष्टविशेषः। दृष्टमवयव-

---

तदपि यत्र उभयावयवान्वयस्तत्रापि मातुरवयवान्वयाव्यभिचारात् पञ्चत्वव्यापकमात्र-वयवान्वयज्ञापनार्थमेवोक्तं न तु पञ्चानां मात्रवयमान्वयमात्रज्ञापनार्थमिति विशेषेण सिद्धान्तितं मया प्रतिनिधिप्रकरणे। एतेषामौरसक्षेत्तजपुत्रिकापौनर्भवकालीनूढजसहोढ-दत्तकक्रीतस्वयमुपागतापविद्धयत्नक्वचोत्पादितानां पूर्वपूर्वश्रेयान् प्रशस्तः। श्रेयः शब्दार्थं स्वयमेव विवृणोति—श्रेयो दृष्टादृष्टविशेष इत्यादि। ननु नरत्वरूपसौसादृश्य-मादाय सर्वेषां गौणपुत्रत्वे त्वनियमादाह वचनन्तु नियमार्थम्। अत्र दृष्टान्तमाह यदीति। विन्देत् लभेत। अभिषुणुयात् प्रतिनिधित्वेन कल्पयेत्। तथा च सोमापचारे सोमसादृश्येन यस्मिन् कस्मिन् द्रव्ये प्राप्ते यथा पूतिकाभिधानं तया प्रकृतेऽपीति भावः। विशेषान्तरं गौणपुत्राणां पौर्वापर्यरूपविशेषान्तरमित्यर्थः। अवधेयमिति विष्णु-टीकायां विस्तरेण उक्तम्। मया तु संक्षिप्य किञ्चिल्लिख्यते। धर्मपत्नीत्वस्वक्षेत्रत्व-स्वयंसंस्कृतत्वस्वयमुत्पादितपुंस्त्वरूपत्रितयवैशिष्ट्यात् मुख्यत्वेन औरसस्य प्रथमत्वम्। स्वक्षेत्रत्वस्वसंस्कृतत्वरूपद्वितीयवैशिष्ट्यात् वैधत्वाच्च द्वितीयत्वं क्षेत्रजस्य। स्वक्षेत्र-त्वस्वसंस्कृतत्वस्वयमुत्पादितत्वेऽपि पुंस्त्वाभावात् साक्षादुपकारकत्वाभावाच्च पुत्रि-कायास्तृतीयत्वमथवा तत्पुत्रस्य तु साक्षादुपकारकत्वेऽपि एकान्तरितत्वात् तृतीयत्वम्। पौनर्भवश्चतुर्थ अक्षताया अन्यसंस्कृतायां स्वमात्रक्षेत्रत्वस्वमात्रसंस्कृतत्वधर्मपत्नी-त्वानां त्रयाणामभावात कक्षात्रयन्तरितत्वात्। कानीनस्य पञ्चमत्वं कन्या वक्ष्यमाण-लक्षणा, तस्यां यो जायते स कानीनः पञ्चमः स्वक्षेत्रत्वादिविशेषणचतुष्टयाभावेन कक्षा-चतुष्टयान्तरितत्वात्। स्वक्षेत्रत्वादिसत्त्वेऽपि स्वानुत्पत्त्या वैशिष्ट्याभावात् कक्षा-चतुष्टयेनाविज्ञातोत्पन्नत्वेन पञ्चमस्य व्यवधानात् षष्ठत्वं गूढजस्य। पूर्वोक्ताभिः स्वक्षेत्र-त्वादिपञ्चकक्षाभिः ज्ञाताज्ञातत्वरूपया षष्ठ्या व्यवधानात् सहोढस्य सप्तमत्वम्। बीजक्षेत्रयोः सर्वथा परकीयत्वेन सहोढादपि विप्रकृष्टत्वात् दत्तकस्याष्टमत्वम्। क्रीतत्वेन क्रीतभार्यावदेव पितृकर्माणमर्हत्वेन दत्तकादपि विप्रकृष्टत्वात् क्रीतस्य नवमत्वम् स्वयमुपागते कर्तृव्यापाराभावात् 'अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिः सदा' इत्यादिविधेः पर्यवसानाभावेन क्रीतादपि विप्रकृष्टत्वात् स्वयमुपागतस्य दशमत्वम्। त्यक्तस्य स्वयं

प्रत्यासत्त्यादि। अदृष्टं शुद्ध्यादि। वचनं तु नियमार्थं—यदि सोमं न विन्दे-त्पुतिकानभिषुणुयादित्यादिवत्। विशेषान्तरमस्मत्कृतायां विष्णुस्मृतिटीकायां-केशववैजयन्त्यामवधेयम्॥ ६७॥

दुहितृप्रतिनिधौ पुराणेषु लिङ्गदर्शनान्युपलभ्यन्ते। तत्र दत्तकाया रामायणे बालकाण्डे दशरथं प्रति सुमन्त्रस्य सनत्कुमारोक्तभविष्यानुवादो-लिङ्गम्।

इक्ष्वाकूणां कुले जातो भविष्यति सुधार्मिकः।
नाम्ना दशरथो वीरः श्रीमान् सत्यपराक्रमः॥
सख्यं तस्याङ्गराजेन भविष्यति महात्मना।
कन्या चास्य महाभागा शान्ता नाम भविष्यति॥
अपुत्रस्त्वङ्गराजो वै लोमपाद इति श्रुतः।
स राजानं दशरथं प्रार्थयिष्यति भूमिपः॥

---

ग्रहणात् दत्तात्मनोऽपि विप्रकृष्टत्वात् अपविद्धस्यैकादशत्वम्। उक्तविषयेभ्योऽन्यत्र यत्र वा पुनः स्वीयायाम्वा परकीयायाम्वा सवर्णायां असवर्णायाम्वा ऊढायामनूढा-याम्वा क्षतायामक्षतायाम्वा येनोत्पादितः स तस्यैव पुत्रः सजातीयता नियमस्य कृत्रिमेण सह द्वादशपुत्रविषयत्वात् द्वादशविषयविशेषनियमाभावात् अपविद्धादपि विप्रकृष्ट-त्वात् यत्र क्वचनोत्पादितस्य द्वादशत्वं-यत्र क्वचनेत्यनेन शूद्रा विवक्षिता तस्यां जातः द्वादशः पुत्र इति व्याख्येयम्। वस्तुतस्तु मूलकारोक्ता मुक्तिप्राणाली सर्वत्र न संगता सुतरां प्रायिकाभिप्रायिका वक्तव्या। कानीनात् सहोढस्यापकृष्टता कदापि न घटते। कानीनस्थले पुत्रजन्मानन्तरं विवाहसंस्कारः। सहोढस्थले तु गर्भावस्थायां विवाह-संस्कारः॥ ६७॥

दत्तकन्याविधिदाढ्याय पुरावृत्तं दर्शयति दुहितृप्रतिनिधावित्यादि। भविष्या-नुवादो भविष्यद्वाक्यं सख्युर्भावः सख्यं अस्य दशरथस्य अङ्गराजेनेति गम्यमान-सहार्थे तृतीया। अपुत्रानपत्येति विशेषणद्वयात् अनपत्यस्यालोकतापरिहाराय इयं प्रार्थनेति विद्योतते। विगतज्वरः अपत्यराहित्यशोकरहितः सोऽयन्ते श्वशुर इति। ननु दत्तपुत्रवत् दत्तकन्याया अपि जनककुले सम्बन्धापगमात् कथं दशरथस्य ऋष्यशृङ्ग-

अनपत्योऽस्मि धर्मज्ञ कन्येयं मम दीयताम् ।
शान्ता शान्तेन मनसा पुत्रार्थे वरवर्णिनी ॥
ततो राजा दशरथो मनसाऽभिविचिन्त्य च ।
दास्यते तां तदा कन्यां शान्तामङ्गाधिपाय सः ॥
परिगृह्य तु तां कन्यां स राजा विगतज्वरः ।
नगरं यास्यति क्षिप्रं प्रहृष्टेनान्तरात्मना ॥
कन्या तामृष्यशृङ्गाय प्रदास्यति स वीर्यवान् ॥ इत्यादि ।

तत्रैव लोमपादं प्रति दशरथवाक्यम्—

शान्ता तव सुता वीर सह भर्त्रा विशांपते ।
मदीयं नगरं यातु कार्यं हि महदुद्यतम् ॥ इति ।

तत्रैव ऋष्यशृङ्गं प्रति लोमपादवाक्यम्—

अयं राजा दशरथः सखा मे दयितः सुहृत् ।
अपत्यार्थं ममानेन दत्तेयं वरवर्णिनी ॥
याचमानस्य मे ब्रह्मन्शान्ता प्रियतरा मम ।
सोऽयं ते श्वशुरो धीर यथैवाहं तथा नृपः ॥ इत्यादि ।

अत्र दीयतां दास्यते प्रतिगृह्य दत्ताशब्दैर्दानविधिः स्पष्ट एव । 'तथाऽपुत्र' इत्युपक्रम्य' पुत्रार्थ' इत्युपसंहारादौरसपुत्रीवद्दत्तपुत्र्यपि पुत्रप्रतिनिधिर्भवतीति गम्यते ॥ ६८ ॥

---

श्वसुरत्वमिति चेन्न । 'सखा मे दयितः सुहृत्' इत्यनेन सुहृदि श्वसुरत्वोपचारात् । न च तथापि 'यथैवाहं तथा नृपः' इत्यत्र तथा तथोपादानं व्यर्थमिति वाच्यम् । द्रष्टान्तद्राष्टान्तयोरुत्कर्षापकर्षत्वावगमात् । यद्यप्यपरितोषस्तदा द्व्यामुष्यायाणविधया शान्ता दत्तेति सर्वसामञ्जस्यम् । अत 'न त्वेकं पुत्रं दद्यात् प्रतिगृह्णीयात्' इत्यत्र पुंस्वाविवक्षणेऽपि न क्षतिः । औरसपुत्रीवत् पुत्रिकापुत्रवदित्यर्थः । पुत्रप्रतिनिधिः पुत्रद्वारोपकारित्वेन प्रतिनिधिरिव । तथा च दत्तकाद्यसम्भवे दत्तपुत्रीकार्येति भावः ॥ ६८ ॥

क्रीतायां हेमाद्रौ स्कन्दपुराणे—

आत्मीकृत्य सुवर्णेन परकीयां तु कन्यकाम् ।
धर्म्येण विधिना दातुमसगोत्राऽपि युज्यते ॥

लैङ्गेऽपि—

कन्यां लक्षणसम्पन्नां सर्वदोषविवर्जिताम् ।
मातापित्रोस्तु संवादं कृत्वा दत्त्वा धनं महत् ॥
आत्मीकृत्य तु संस्थाप्य वस्त्रं दत्त्वा शुभं नवम् ।
भूषणैर्भूषयित्वा तु गन्धमाल्यैरथार्चयेत् ॥
निमित्तानि समीक्ष्याथ गोत्रनक्षत्रकादिकम् ।
उभयाश्चित्तमालोक्य उभौ सम्पूज्य यत्नतः ॥
दातव्या श्रोत्रियायैव ब्राह्मणाय तपस्विने ।
साक्षादधीतवेदाय विधिना ब्रह्मचारिणे ॥ इति ।

---

दत्तपुत्री दर्शयित्वा क्रीतपुत्रीं दर्शयति क्रीतायामित्यादि । परकीयान्तु कन्यकामिति द्वितीयान्तपाठः प्रामादिकः । तथात्वे 'असगोत्रापि युज्यते' इति असगोत्राविशेषणस्यासंलग्नापत्तेः । तथाहि—

दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता ।
पञ्चमी सप्तमी तद्वद्गोत्रं तत्पालकस्य च ॥

इत्यादि वचनात् यथा दत्तक्रीतादिपुत्राणां जनकगोत्रापहारपूर्वक ग्रहीत्रादिगोत्रप्राप्तिस्तथा दत्तक्रीतादिपुत्रीणामपि । अन्यथा तासां विवाहे कथं गोत्रोल्लेखः संगच्छते । एवं सति असगोत्रा दातुं युज्यते इत्यनन्वयापत्तेः । ततश्चायं वचनार्थः असगोत्रापि परकीया कन्यका सुवर्णेन मूल्यरूपसुवर्णदानेन आत्मीकृत्य आत्मसम्बन्धिनीकृत्य धर्मेणविधिना विवाहविधिसिद्धपारिपाट्या दातुं युज्यते वरायेति शेषः । लिङ्गपुराणेनापि तत्साधयति लैङ्गेऽपीत्यादिलक्षणसम्पन्नां शुभलक्षणसंयुक्तां सर्वदोषविवर्जितां अधिकलोभादि सर्वदृष्टदोषरहितां मातापित्रोः समीपे सम्वादं कृत्वा क्रेष्यामीति प्रतिज्ञां कृत्वा महद्धनं दत्त्वाच आत्मीकुकृत्य आत्मसम्बन्धिनीकृत्य शुभं नवं वस्त्रं दत्त्वा संस्थाप्य उत्कृष्टनूतनवस्त्रदानेन साच्छादनां सम्पाद्य भूषणैरलङ्कारादिभिर्भूषयित्वा तामर्चयेत् ।

अत्र सुवर्णेनात्मीकृत्य 'धनं दत्त्वे'-त्यादिशब्दैः क्रयविधिः स्पष्ट एव। कृत्रिमाया हरिवंशे शूरापत्यगणनायाम्—

महिष्यां जज्ञिरे शूराद्भोजायां पुरुषा दश।
वसुदेवो महाबाहुः पूर्वमानकदुन्दुभिः॥

इत्युपक्रम्य—

देवभागस्ततो जज्ञे तथा देवश्रवाः पुनः।
अनावृष्टिः कनवको वत्सवानथ गृञ्जिमः।
श्यामः शमीको गण्डूषः पञ्च चास्य वराङ्गनाः॥

इति मध्ये विधाय—

पृथुकीर्तिः पृथा चैव श्रुतदेवाः श्रुतश्रवाः।
राजाधिदेवी च तथा पञ्चैता वीरमातरः॥

इति पञ्चापि विगण्य्य—

पृथां दुहितरं चक्रे कुन्तिस्तां पाण्डुरावहत्।
यस्यां स धर्मविद् राजा धर्माज्जज्ञे युधिष्ठिरः॥

---

निमित्तानि सम्भाव्यमानरजोयोगगर्भान्वितयुग्मवर्षादीनि विवाहप्रयोजकादीनि इत्यर्थः। सगोत्रे विवाहनिषेधात् भिन्नगोत्रज्ञानार्थं गोत्रग्रहणम्।

सजातौ परमाप्रीतिर्मध्यमा देवमानुषे।
देवासुरे सदा द्वन्द्वं मृत्युर्मानुषराक्षसे॥

इत्यादि निषेधात् गणज्ञानार्थं नक्षत्रग्रहणाम्। उभयोर्वरकन्ययोः चित्तं सह धर्माचरणप्रवृत्तं आलोडये अवगत्य यत्नत उभौ सम्पूज्य च विधिना प्राजापत्यविधिना। तथा च मनुः—

सहोभौचरतां धर्ममिति वा चानुभाष्य च।
कन्याप्रदानमभ्यर्च्य प्राजापत्यविधिः स्मृतः॥

ब्रह्मचारिणे अजातस्त्रीसम्पर्काय। कश्चित्तु उभयोश्चित्तमालोड्य उभयानुरागं बुद्ध्वा। एतेन गान्धर्वविवाह उक्तो भवति इति प्रलपति। तन्न सुन्दरम्। तथात्वे

अत्र 'चक्र' इति कर्त्तुरेव व्यापारश्रवणादस्याः कृत्रिमत्वम् । पाद्मे भौमव्रते च—

आसीत्सुनन्दिकः पूर्वं ब्राह्मणो वेदपारगः ।
तस्या सुनन्दिका भार्या वन्ध्या तु बहुलोभिनी ॥
तस्यापत्यं न संजातं वृद्धत्वबन्ध्यभावतः ।
तेनान्यस्य सुता जातु सुशीला रूपसंयुता ॥
ब्राह्मणस्य कुले जाता गृहीत्वा पोषिता स्वयम् ।
तां च पुत्रीं गृहे तस्य ब्राह्मणी सा ह्यपालयत् ॥
विवाहार्थं तु विप्रस्य दत्ता सोमेश्वरस्य च ।
वेदोक्तविधिना तत्र विवाहमकरोत्तदा ॥ इत्यादि ।

अत्रापि स्वयं गृहीत्वेति श्रवणं कृत्रिमत्वे लिङ्गम् । न च स्वयं पोषितेत्यन्वयः साधु । ग्रहणपोषणयोः क्त्वाप्रत्ययाभिहितसमानकर्त्तृकत्वेनैव स्वयं

सम्पूज्य 'यन्नत' इत्यस्य वैयर्थ्यापत्तेः । न हि गान्धर्वविवाहे अर्चना श्रूयते । 'ब्राह्मणाय तपस्विने' इत्यादि श्रुतेः प्राजापत्यस्यैव युक्तत्वाच्च ॥ ६९ ॥

कृत्रिमपुत्रीं दर्शयति कृत्रिमाया इत्यादि । भोजायां भोजानाम्न्यां महाबाहुरिति वसुदेवविशेषणम् । आनकदुन्दुभिः वसुदेवे जाते स्वर्गे आनकानां वाद्यविशेषां दुन्दुभिर्ध्वनि र्जायते । तता वसुदेवात् परतः वसुदेवमारभ्य गण्डूषपर्यन्तं दशपुत्रा अस्य शूरस्य पञ्च च वराङ्गना दुहितृरूपा जाता इति शेषः । पृथुकीर्त्तिमारभ्य राजाधिदेवीपर्यन्तं पञ्च च दुहितरः । कुन्तिः कुन्तिर्नामनृपविशेषः । दुहितरं चक्रे कृत्रिमपुत्रीं चक्रे पृथामिति शेषः । अतः शूरजाताया अपि पृथाया कुन्तिराजेन पुत्रीकरणात् कुन्त्यपरनाम्न्याः पाण्डुना सह विवाह उपपद्यते । अन्यथा यदुवंशीय शूरकन्यया पृथया सह यदुभ्रातृपुरुवंशीयपाण्डोः सगोत्रत्वेन विवाहः प्रतिषिध्यते । व्यापारश्रवणादिति अत्र दानाद्यश्रवणात् दत्रिमपुत्रीत्वाद्यसम्भव इति भावः । कृत्रिमत्त्वं करणान्निष्पन्नत्वं 'कृत्रिमश्च स्वयं कृत' इति तल्लक्षणात् । वृद्धत्वं वन्ध्यभावत इति । वृद्धत्वकथनं अपत्यात्यन्तासम्भवत्वज्ञापनार्थम् । स्वयं गृहीत्वेति श्रवणादिति अत्र स्वयं पदस्वरसात् दानादिव्यतिरेकेण ग्रहणं सूचितम् । ननु गृहीत्वा स्वयं पोषिता

पोषणस्य सिद्धत्वात् । दत्तात्मिकायाः पुराणान्तरेषु मृग्यम् ॥ ७० ॥

अपविद्धायां महाभारत आदिपर्वणि शाकुन्तले दुष्यन्तशकुन्तलासंवादानुवादकमेव वाक्यम्—

जनयामास स मुनिर्मेनकायां शकुन्तलाम् ।
प्रस्थे हिमवतो रम्ये मालिनीमभितो नदीम् ॥
जातुमुत्सृज्य तं गर्भं मेनका मालिनीमनु ।
कृतकार्या ततस्तूर्णमगच्छच्छक्रसंसदम् ॥
तं वने विजने गर्भं सिंहव्याघ्रसमाकुले ।
दृष्ट्वा शयानं शकुनाः समन्तात्पर्यवारयन् ॥
नेमां हिंस्युर्वने बालां क्रव्यादा मांसगर्धिनः ।
पर्यरक्षंस्तदा तत्र शकुन्ता मेनकात्मजाम् ॥
उपस्प्रष्टुं गतश्चाहमपश्यं शयितामिमाम् ।
निर्जनेऽपि वने रम्ये शकुन्तैः परिवारिताम् ॥

---

इत्यन्वयोवाच्यः । तथा च स्वयं ग्रहणाप्रतीतेर्न कृत्रिमत्त्वं सिद्धमस्या इत्याशङ्क्यते न चेति सिद्धत्वादिति स्वयम्पदवैयर्थ्यमिति भावः ॥ ७० ॥

अपविद्धां पुत्रीं दर्शयति अपविद्धायां महाभारत इत्यादि । स मुनिः तपो भ्रष्टविश्वामित्रमुनिः । मेनकायां स्वनामख्यातायां स्वर्वेश्यायां उपस्प्रष्टुं आह्निकं जलकार्यं कर्त्तुमिति नीलकण्ठः । एनां शकुन्तलां दुहितृत्वे न्यवेशयं दुहितरं कल्पयामास । शकुन्तनेति नाम इति । शकुन्तैर्वारिता उपात्ता । ला आदाने' अस्मात् कप्रत्ययेन शकुन्तलेति नामनिर्वचनमिति नीलकण्ठः । अत्रोत्सृष्टाग्रहणादपविद्धाविधिस्पष्ट एवेति । 'उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत्सुत' इति योगीश्वरोक्तलक्षणादिति शेषः । ननु 'सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिरिति' योगिस्मरणात् कथं क्षत्रियविश्वामित्रजाता शकुन्तला । ब्राह्मणस्य कण्वमुनेः अपविद्धपुत्रीति चेद् भ्रान्तोऽसि । पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः' इत्यभिधाय 'सजातीयेष्वयं प्रोक्तस्तनयेषु मयाविधिरित्यनेन पिण्डदत्वेनांशहरत्वमेव सजातीयेषु तनयेषु विधीयते न तु विजातीयेषु पुत्रीकरणं निषिध्यते । अतएव नामसंकीर्त्तनाय-

आनयित्वा ततश्चैनां दुहितृत्वे न्यवेशयम् ।
शरीरकृत्प्राणदाता यस्य चान्नानि भुञ्जते ॥
क्रमेण ते त्रयोऽप्युक्ताः पितरो धर्मशासने ।
निर्जने तु वने यस्माच्छकुन्तैः परिवारिता ॥
शकुन्तलेति नामास्याः कृतं चाऽपि ततो मया ।
एवं दुहितरं विद्धि मम विप्र शकुन्तलाम् ॥

शकुन्तलोवाच—

एतदाचष्ट पृष्ठः सन् मम जन्म महर्षये ।
सुतां कण्वस्य मामेवं विद्धि त्वं मनुजाधिप ॥
कण्वं हि पितरं मन्ये पितरं स्वमजानती ॥ इति ।

---

विजातीयपुत्रीकरणमुपपद्यते । नन्वेवं 'पिता दद्यात् स्वयं कन्यां भ्राता वाऽनुमतेः पितु' रिति वचनात् कथं पितुः कण्वस्यासन्निधौ दुष्यन्तकर्त्तृकशाकुन्तलाविवाह उपपद्यत इति चेन्न ? स्वयं दत्तपुत्रवत् आपदि स्वयंदानविधानात् । तथा च महाभारते—

दुष्यन्त उवाच—

गान्धर्वेण च मां भीरु विवाहेन हि सुन्दरि ।
विवाहानां हि रम्भोरु गन्धर्वः श्रेष्ठ उच्यते ॥

शकुन्तला उवाच—

फलाहारी गतो राजन् पिता मे इत आश्रमात् ।
मुहूर्त्तं सम्प्रतीक्षस्व स मां तुभ्यं प्रदास्यति ॥

दुष्यन्त उवाच—

इच्छामि त्वां वरारोहे भजमानामनिन्दिते ।
तदर्थं मां स्थितं विद्धि तद्गतं हि मनो मम ॥
आत्मनो बन्धुरात्मैव गतिरात्मैव चात्मनः ।
आत्मनैवात्मनो दानं कर्त्तुमर्हसि धर्मतः ॥

शकुन्तला उवाच—

यदि धर्मपथस्त्वेषः यदि चात्माप्रभुर्मम ।
प्रदाने पौरवा श्रेष्ठ शृणु मे समयं प्रभो ॥ इत्यादि ।

अत्रोत्सृष्टाग्रहणादपविद्धाविधिः स्पष्ट एव। तदेवं तत्तद्विध्यविनाभूत-लिङ्गदर्शनैस्तत्तद्विधिसिद्धिः सुकरैवेत्यलं पल्लवितेन ॥ ७१ ॥

॥ अथ दत्तकाशौचनिर्णयः ॥

तच्च जनककुले परस्परं नास्त्येव।

गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥

इति मनुवचनात्।

अत्र च स्वधापिण्डशब्दावशौचादिसकलपितृकार्योपलक्षणम्। पिण्ड-दानादिनिमित्तीभूतगोत्ररिक्थयोर्निवृत्तिश्रवणात्। प्रेतपिण्डदानादेश्चाशौच-पूर्वकालत्वनियमात्। ततश्च पिण्डनिवृत्त्याऽऽशौचनिवृत्तिरर्थसिद्धैव।

असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान्।
प्रथमेऽहनि यो दद्यात् स दशाहं समापयेत् ॥
अग्राहिणां तु नैव स्यात् कर्तुः स्वस्ति तथाऽपि च।
यावदाशौचमुदकं पिण्डमेकं च दद्युः ॥

---

एतेना पविद्धविधिः स्पष्ट एवेति। अयं प्रपञ्चो भ्रान्तिमूलतया विजृम्भते। 'सजातीयेष्वयं प्रोक्तस्तनयेषु मयाविधि' रित्यादिविरोधात्। सजातीयत्वे दुष्यन्त-कर्तृकविवाहानाप्रचरितत्वापत्तेरित्यनेन मूलकारोपरि कस्यचित् कटाक्षोऽज्ञतया निरस्त एव ॥ ७१ ॥

दत्तकादीनामशौचं व्यवस्थापयति अथेति। जनककुले परस्परं नास्त्येवेति शुद्धदत्तस्येति शेषः। द्व्यामुष्यायणदत्तस्य जनककुले अशौचस्य वक्ष्यमाणत्वात्। अत्र मनुवचनं प्रमाणयति गोत्ररिक्थे इति। अशौचादिसकलपितृकर्मोपलक्षणम्। अशौचादि च सकलपितृकर्म च तयोरुपलक्षणं न तु कर्मधारयः। अशौचस्य पुत्रादि-गततया पितृकर्मत्वानुपपत्तेः। पिण्डदानादीति। आदिना श्राद्धवृषोत्सर्गादेर्ग्रहणम्। तथा च पिण्डदानादेः निमित्तभूतयोर्गोत्ररिक्थयोरित्यर्थः। तथा हि गोभिलः—

गोत्रं स्वरान्तं सर्वत्र गोत्रस्याक्षय्यकर्मणि।
गोत्रस्तु तर्पणे प्रोक्तः कर्त्ता एवं न मुह्यति ॥

इत्यादिवाक्यपर्यालोचनया पिण्डाशौचयोः समव्याप्तिसिद्धेः। तस्माद्दत्तकतज्जनकादीनां च परस्परं नाशौचादि।

यत्तु—

वैजिकादभिसम्बन्धादनुरुन्ध्यादघं त्र्यहम्। इति।

तदपि व्यपैति ददतः स्वधेत्यनेनापोदितम्। दत्तकातिरिक्तस्थले तस्य सावकाशत्वात्। किञ्चाशौचोदकदानादौ गोत्रसापिण्ड्ययोर्मिलितयोर्निमित्तत्वावगमादन्यतरापाये न तन्निमित्तमशौचादि। तथा च शङ्खलिखितौ—

सपिण्डता तु विज्ञेया गोत्रतः साप्तपौरुषी।
पिण्डश्चोदकदानं च शौचाशौचं तदानुगम्॥ इति।

---

रिक्थस्य निमित्तता सुतरां सिद्धैव। ततश्च—

अकृत्वा प्रेतकार्याणि प्रेतस्य धनहारकः।
वर्णानां यद्वधे प्रोक्तः तद्व्रतं नियतं चरेत्॥

इत्यादिशास्त्रे धनग्रहणपक्षे क्रियाया अकरणे प्रत्यवायश्रुतेः धनमेव क्रियानिमित्तम्। पिण्डदानादेः पूरकपिण्डदानादेः। अशौचपूर्वकत्वनियमात्। अशौचस्य निमित्तत्वावधारणात्। अशौचनिवृत्तिरर्थसिद्धैवेति। तथा च 'प्रथमेऽहनि यो दद्यात्' इति यावदाशौचमित्यादिवचनात्। पिण्डोदकदानं प्रति अशौचस्य कारणत्वमवधारितम्। अथ यदि दत्तकस्य जनककुले अशौचं भवेत्, पिण्डदानन्तु वचनबलान्निषिद्धमेव स्वीक्रियते तदा अशौचरूपकारणसत्त्वे पिण्डदानरूपकार्यानुत्पत्त्या व्यतिरेकव्यभिचारात् प्रमाणसिद्धाया कारणताया व्याघातः स्यात्। अतो अशौचनिवृत्तिरर्थसिद्धैवेति। अशौचस्य निमित्तत्वे प्रमाणं दर्शयति असगोत्र इत्यादि। समव्याप्तिसिद्धेः कार्यकारणाभावसिद्धेरित्यर्थः। एतेन तत्सत्त्वे तत्सत्त्वरूपान्वयनियमो दर्शितः। दत्तकातिरिक्तस्थले अन्यपूर्वस्त्रीजातपुत्रस्थले सावकाशत्वात् बीजिमरणे बीजजपुत्रस्य वैजिकात्सम्बन्धात् त्रिरात्राशौचसम्भवादित्यर्थः। ननु वचनबलात् पिण्डदाननिषेधेऽपि दत्तकस्य जनककुले अव्ययवान्वयसापिण्ड्यसद्भावात् अशौचं भवत्येव कारणतायाः व्याघातः अकिञ्चित्कर एव इत्यत आह किञ्चेति। न तन्निमित्तमशौचादि। तथाचाशौचादिकं प्रति गोत्रसापिण्डयोर्मिलितयोः कारणत्वे एकापाये कारणतावच्छेदकस्य व्यासज्य-

प्रतिग्रहीतृपित्रादीनां तु दत्तकादिमरणे त्रिरात्रमाशौचम् ।

तदाह बृहस्पतिः—

अन्याश्रितेषु दारेषु परपत्नीसुतेषु च ।
मृतेष्वाप्लुत्य शुध्यन्ति त्रिरात्रेण द्विजोत्तमाः ॥

इदञ्च त्रिरात्राशौचविधानं यत्प्रतियोगिकं भार्यात्वं पुत्रत्वं च तस्यैव ॥ ७२ ॥

त्रिपुरुषानन्तरवर्त्तिनां पितृसपिण्डानां तु पृथगाह मरीचिः—

सूतके मृतके चैव त्रिरात्रं परपूर्वयोः ।
एकाहस्तु सपिण्डानां त्रिरात्रं यत्र वै पितुः ॥ इति ।

यद्यपि दत्तकादीनामुत्पन्नानामेव स्वीकारात्परिग्रहीतुस्तदुत्पत्त्याशौचं न घटते तथापि तदपत्योत्पत्त्याशौचं घटत एवेति सूतकनिर्देशः । इदमपि समानजातीयानामेव पुत्राणाम् । तथा च ब्रह्मपुराणम्—

औरसं वर्जयित्वा तु सर्ववर्णेषु सर्वदा ।
क्षेत्रजादिषु पुत्रेषु जातेषु च मृतेषु च ॥

---

वृत्तिधर्मस्याप्यपायात् कारणता न सिद्ध्यतीति भावः । तदेव प्रमाणयति तथाचेति । गोत्रतो गोत्रैक्यतः तदानुगं तयोर्गोत्रसापिण्ड्ययोरनुगमाधीनम् । अनेनाशौचादिकं प्रतिमिलितयोरेव गोत्रसापिण्ड्ययोर्निमित्तता स्पष्टमवगम्यते । अन्याश्रितेषु सजातीयोत्कृष्टजातीयान्तराश्रितेष्वेवेत्यर्थः, न तु हीनवर्णाश्रितेषु । तद्गमने पतितत्वेन अशौचाभावादिति स्मार्त्तहारलताप्रभृतयः । परपत्नीसुतेषु दत्तकादिषु । त्रिरात्रानुवृत्तौ विष्णुः—

अनौरसेषु पुत्रेषु जातेषु च मृतेषु च ।
परपूर्वासु भार्यासु प्रसूतासु मृतासु च ॥

द्विजोत्तमा इति पदं बहुवचनात् वर्णचतुष्टयोपलक्षणम् । द्विज उत्तमो यस्मात् इति तद्गुणसंविज्ञानबहुव्रीहिणा वा वर्णचतुष्टयप्रतीतिः । अन्याश्रितदारपरपत्नीसुतमरणादौ तत्सपिण्डानामपि त्रिरात्राशौचप्रसक्तिमाशङ्क्य वक्ष्यमाणैकरात्रबोधकवचनात् तन्निराकरणाय व्यवस्थाप्यते इदञ्चेति यत्प्रतियोगिकं यन्निरूपितं तस्यैवेति एवकारेण सपिण्डानां त्रिरात्राशौचनिरासः ॥ ७२ ॥

अशौचं तु त्रिरात्रं स्यात्समानामिति निश्चयः । इति ।

सर्वदा सर्वकालमुपनयनानन्तरमपि ।

अन्याश्रितेषु दारेषु परपत्नीसुतेषु च ।
गोत्रिणः स्नानशुद्धाः स्युस्त्रिरात्रेणैव तत्त्ववित् ॥ इति ।

यद्यपि प्रतिगृहीतृमरणे दत्तकस्य दशाहाशौचं न घटते, सपिण्डसगोत्रत्वयोर्मिलितयोरभावात् । अशौचविशेषश्चाहत्य नोपलभ्यते । तथाऽपि—

---

त्रिपुरुषानन्तरवर्त्तिनां पितृसपिण्डानान्त्विवति । तुरप्यर्थे अवयवानामनेकार्थत्वात् । अस्य तु भिन्नक्रमेण पूर्वषष्ठ्यन्तेन सम्बन्धः । त्रिपुरुषानन्तरवर्त्तिनामपीत्यर्थः । तथा च वचनान्तरैकवाक्यत्वात् अन्यपूर्वाजातमात्रस्य मरणजनकातिरिक्तसपिण्डानां त्रिपुरुषान्तरवर्त्तिनामपि एकाहाशौचं त्रिरात्रम् । 'यत्र वै पितु' रित्युपदेशात् तद्भिन्नानां दत्तकादीनान्तु त्रिपुरुषान्तरवर्त्तिनामेवेति । सुतके इत्यादि । अस्यार्थः परपूर्वयोः परपूर्वभार्यापुत्रयोः सूतके, जनने मरणे च त्रिरात्रं तज्जनकस्येतिशेषः । सपिण्डानान्तु एकरात्रम् । 'त्रिरात्रं यत्र वै पितु' रिति अत्र यत्र पितुः त्रिरात्रमित्युपादानात् परपूर्वाजातस्य पुत्रस्य जननमरणयोरेव तत्सपिण्डनानेकरात्रं न तु परपूर्वाया मरणे । अतएव स्पष्टमुक्तं स्मार्त्तहारलताकृत्प्रभृतिभिः—

आदावेकस्य दत्तायां कुत्रचित् पुत्रयोर्द्वयोः ।
पितुर्यत्र त्रिरात्रं स्यादेकं तत्र सपिण्डिनाम् ॥
एका माता द्वयोर्यत्र पितरौ द्वौ च कुत्रचित् ।
तयोः स्यात सूतकादैक्यं मृतकाच्च परस्परम् ॥

प्रथमन्येनोढा तेनैव जनितपुत्रा पुत्रसहितैवान्यमाश्रिता पश्चात्तेनापि जनितपुत्रा तयोः पुत्रयोः प्रसवमरणयोः द्वितीयपुत्रपितुस्त्रिरात्राशौचम् । एवम्विधे च विषये यत्र परस्त्रीपुत्रजनकस्य त्रिरात्रम् । तत्र तत्सपिण्डानां एकरात्रमिति दत्तकादीनां आदिना क्रीतकृत्रिमस्वयंदत्तापविद्धानां गृहणम् । स्वीकारात् स्वीकारमारभ्य उत्पत्त्यशौचं उत्पन्नानां तेषां गृहणादूर्ध्वं उत्पत्त्या उत्पत्तिहेतुकं जन्मनिबन्धनमशौचमित्यर्थः । इदमपि दत्तकादीनां मरणे गृहीत्रादित्रिपुरुषान्तर्वर्त्तिसपिण्डानां त्रिरात्राशौचम् । समानजातीयानामेव विजातीमानामशौचसम्बन्धाभावादिति भावः ।

स्वोक्ते प्रमाणं दर्शयति तथा चेति । क्षेत्रजादिषु क्षेत्रप्रभृत्येकादशविधपुत्रेषु

गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन् ।
प्रेताहारैः समं तत्र दशरात्रेण शुध्यति ॥

इति मरीचिवचनेन शिष्यस्य गुरुप्रेतकार्यकारणनिमित्तदशाहाशौचमुक्तं भवति । अत्र गुरुशब्द आचार्यादिरूपः । गुरुत्वमत्राप्यस्ति । उपनयनादि-

---

औरसवर्जनस्वरसादिति भावः । यद्यपि सामान्येनोक्तं तथापि त्रिपुरुषमध्यवर्त्ति-सपिण्डानामिति वक्तव्यम् पितृमरणे दत्तकादीनां त्रिरात्राशौचमाह ब्रह्मपुराणम्—

दत्तकश्च स्वदत्तः कृत्रिमः क्रीत एव वा ।
अपविद्धश्च ये पुत्रा भरणीया सदैव हि ॥
भिन्नगोत्राः पृथक्पिण्डाः पृथग्वंशकराः स्मृता ।
जनने मरणे चैव त्र्यहाशौचस्य भागिनः ॥

इति कलौ दत्तकमात्रविषयमिति । प्रागुक्तादित्यादिपुराणात् अन्येषां प्रतिनिधि-पुत्रीकरणनिषेधादिति । ननु मातृपुत्रप्रभृतीनां पुत्रीकरणपक्षे गृहीतृपित्रादिस-पिण्डानां सम्पूर्णाशौचं स्यात् ग्रहणप्रागपि तत्सिद्धत्वादिति चेन्न । तथात्वे त्रिरात्राशौच-विधायकनानावचनसङ्कोचापत्तेः । अपि च द्व्यामुष्यायणं प्रति जनकस्य त्रिरात्राशौचं न स्यात् सपिण्डदत्तकवत् दानात् प्राक् सम्पूर्णाशौचसद्भावात् द्व्यामुष्यायणस्थले वाचनिकत्रिरात्राशौचस्वीकारे सपिण्डदत्तकस्थलेऽपि वचनसद्भावस्य तुल्यता । अतएव दत्तकतत्त्वनिर्णये हरिनाथोपाध्याय आह स्म तेन सपिण्डदत्तकस्यापि तद्वचन-विषयत्वात् त्रिरात्राशौचमिति । चन्द्रिकाकारोऽपि—

सगोत्रेषु कृता ये स्युर्दत्तक्रीतादयः सुताः ।
विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते ॥

इति वचनव्याख्यानावसरे आह स्म, तत्तु पुत्रान्तरवत् साप्तपौरुषसापिण्ड्य-प्रसक्तौ निषेधकम् । सापिण्ड्यप्रयुक्तदशाहाद्यशौचनिषेधकं वा न तु सामान्यतः सापिण्ड्यनिषेधकम् । उक्तवचनजातादिति । अत्र वाकारः समुच्चये वा स्यात् विकल्पोपमयोरेवार्थे च समुच्चय इति क्षेत्रजादेः पुत्रादीनामपि गृहीतृपितामहादीनाञ्च परस्परं त्रिरात्राशौचं कल्प्यम् । यत्तु —

क्षेत्रजाद्याः सुताश्चैव एकादशक्रमोदिता ।
जनने मरणे चैव त्र्यहाशौचस्य भागिनः ॥
तत्सुताद्या दशाहेन शुद्ध्यन्ति मृतसूतके ॥ इति ।

कर्त्तृत्वात्। ततश्च दत्तकस्य प्रतिग्रहीतृक्रियाकरण एव दशरात्राशौचं सिध्यति। अन्यथा त्रिरात्रमेव पूर्वोक्तवचनात्। एवं दत्तकस्य प्रतिग्रहीतुस्त्रिपुरुषानन्तर-वर्त्तिसपिण्डमरण एकाहः। एकाहस्तु सपिण्डानामिति पूर्वोक्तमरीचि-

---

बृहद्वशिष्ठवचनं तत् विषमशिष्टभयात् दत्तकरूपपितृमरणे यथासम्भवं तत्पुत्रभार्यादीनां जननमरणयोः सम्पूर्णाशौचविधायकम्। अतएव मूलकारेण तथापि तदपत्योत्पत्त्याशौचं घटते इत्यादिना दत्तकस्य पुत्रजनने त्रिरात्राशौचमभिप्रेत्य सूतकपदस्य सार्थक्यं दर्शयता एषोऽर्थः पुरस्कृत इति बहुसम्मतम्। हरिनाथो-पाध्यायस्तु बहुविचारेण दत्तकस्य पुत्रादीनां ग्रहीत्रादिमरणादौ सम्पूर्णाशौचं व्यवस्थापितवान्। एतत्पक्षपातिनस्तु रङ्गपुरस्थविक्रमपुरस्थाः बुधगणाः। देहा-शौचादिकं औरसपुत्रसमानं विशेषवचनाभावादिति दत्तकतत्त्वनिर्णये हरिनाथो-पाध्यायाः। वचनस्थसर्वदापदस्यार्थं विवृणोति सर्वदा सर्वकालमुपनयनानन्तरमपीति। तथा च दत्तकत्वेन विशेषवचनारम्भात् जातदन्तत्वादिना विशेषाशौचं नास्तीति सूचितमितिभावः।

गोत्रिण इति बहुवचनात् समानोदकाश्च गृह्यन्ते। अतएव स्वयं वक्ष्यति सोदकसगोत्रयोर्मरणे स्नानमात्रम्। सपिण्डसगोत्रयोः मिलितयोरभावात् सम्पूर्णाशौच-प्रयोजकसाप्तपौरुषिकसपिण्डसगोत्रयोर्मिलितयोरभावादित्यर्थः। अन्यथा सपिण्डदत्तके उभयोः सद्भावात् यथाश्रुतासङ्गतेः दत्तकस्य दत्तकत्वेनेति शेषः। अशौचविशेषः जात्युक्ताशौचविशेष आहत्य अनुसन्धीय। प्रेतहारैः प्रेतसपिण्डैः समं तुल्यम्। प्रति-ग्रहीतृक्रियाकरण एव प्रतिगृहीतृकर्त्तृकोपनयनरूपक्रियाकरण एवेत्यर्थः। ग्रहीतृकर्त्तृ-कोपनयनसंस्काररहितस्य दत्तकस्य श्राद्धादिरूपक्रियाकरणे शिष्यत्वेन विहितस्य दश-रात्राशौचस्य शिष्यत्वाभावेनाप्रसक्तेः। अपि च पिण्डोदकक्रिया हेतोर्दत्तकविधानात् सर्वदैव सम्पूर्णाशौचं स्यात् त्रिरात्रविधानमसङ्गतं भवेत्। न च दत्तकग्रहणानन्तरमौरसे जाते दत्तकस्य श्राद्धकर्त्तृकत्वाभावात् त्रिरात्राशौचविधानमर्थवदिति वाच्यम्। श्राद्ध-कर्त्तृत्वाभावेऽपि उदकदानवृषोत्सर्गादिक्रिया कर्त्तृत्वाक्षतेः आनर्थक्यस्य दुर्वारत्वात्। अन्यथा उपनयनकर्त्तृत्वाभावे। त्रिपुरुषान्तर्वर्त्तिसपिण्डमरणे त्रिपुरुषादूर्ध्वदशपुरुषा-भ्यन्तरवर्त्तिसपिण्डमरणे इत्यर्थः। तथा चायं संक्षेपः—शुद्धदत्तकस्य जनककुले अशौचं नास्ति व्द्यामुष्यायणस्य जनककुले त्रिरात्राशौचम्। उभयविधदत्तकस्य तत्पुत्रादेश्च सपिण्डत्वेऽपि ग्रहीतृकुले त्रिपुरुषपर्यन्तं त्रिरात्राशौचम्। तदूर्ध्वं दशमपुरुषपर्यन्तमेका-

वचनात् । सोदकसगोत्रयोर्मरणे स्नानमात्रम् । 'अन्याश्रितेषु दारेषु परपत्नीसुतेषु च' इति पूर्वोक्तप्रजापतिवाक्यात् ॥ ७३ ॥

अथ दत्तकपुत्रकर्त्तृकश्राद्धनिर्णयः

तथा च जातूकर्ण(र्ण्य):—

प्रत्यब्दं पार्वणेनैव विधिना क्षेत्रजौरसौ ।
कुर्यातामितरे कुर्युरेकोद्दिष्टं सुता दश ॥ इति ।

प्रत्यब्दमिति सामान्येनोपादानेन मघादिश्राद्धप्राप्तावपि क्षयाहश्राद्धमेवात्र विवक्षितम् ।

पितुर्गतस्य देवत्वमौरसस्य त्रिपौरुषम् ।
सर्वत्रानेकगोत्राणामेकोद्दिष्टं क्षयेऽहनि ॥

इति पराशरवाक्ये क्षयाहपदोपादानात् । न चात्राप्यनेकगोत्रपदं मातामहादिपरम् । तस्य पित्रौरसपदसमभिव्याहारेणौरसप्रतियोग्यनौरसपुत्रपरत्वस्यैवौचित्यात् । अन्यथा पितुः पुत्रेण क्षयेऽहनि त्रिपुरुषं कर्त्तव्यमित्येताव-

---

हाशौचम् । ततः समानोदकसगोत्रयोः स्नानमात्रम् । द्व्यामुष्यायणदत्तकस्य उभयकुल इति विशेषः । गृहीतृरूप आचार्यमरणे शिष्यस्य दत्तकस्य सम्पूर्णाशौचम् । अस्य तु वङ्गदेशे व्यवहारो नास्ति । हरिनाथोपाध्यायमतावलम्बिनान्तु मते दत्तकस्य पुत्रभार्यादीनां गृहीत्रादीनां मरणादौ सम्पूर्णाशौचम् ॥ ७३ ॥

प्रकरणान्तरमाह अथेति । प्रत्यब्दं प्रातिसाम्वतसरिकश्राद्धम् । पार्वणेन विधिना इति औरसक्षेत्रजाविति च । एतत्तु पार्वणविधिकश्राद्धं साग्निकौरसक्षेत्रजकर्त्तृकमभावस्या प्रेतपक्षान्यतरकालमृतमातापितृनिमित्तकनिरग्निकौरसक्षेत्रजकर्त्तृकमपि बोध्यम् । *तथा च*—

यत्र यत्र प्रदातव्यं सपिण्डीकरणात्परम् ।
पार्वणेन विधानेन देयमग्निमता सदा ॥ इति ।
अमावास्यायां क्षयो यस्य प्रेतपक्षेऽथवा पुनः ।
सपिण्डीकरणादूर्ध्वं तस्योक्तः पार्वणो विधिः ॥

तैवार्थसिद्धावौरसपदोपादानानर्थक्यापातात् । न च मातामहादीनामपि क्षयाह एकोद्दिष्टमेव भवतीति नियमोऽस्ति तथा च मरीचिः—

मातुः पितरमारभ्य त्रयो मातामहाः स्मृताः ।
तेषां तु पितृवच्छ्राद्धं कुर्युर्दुहितृसूनवः ॥ इति ।

अथ त्रयाणां मातामहानां श्राद्धविधानात्पार्वणमवगम्यते । न च पितृवदित्यनेन मातामहानामपि पार्वणैकोद्दिष्टयोर्विकल्पः । तस्य मातामहश्राद्धनित्यताविधानपरत्वात् । किञ्च—

कर्षूसमन्वितं मुक्त्वा तथाऽऽद्यं श्राद्धषोडशम् ।
प्रत्याब्दिकं तु शेषेषु पिण्डाः स्युः षडिति स्थितिः ॥

इत्यत्रापि प्रत्याब्दिकशब्दस्यापि प्रत्यब्दशब्दवन्मघादिश्राद्धपरत्वं कुतो न

---

इत्येतयोरेकवाक्यत्वात् । सामान्योपादानेन तिथ्यादिविशेषमनभिधाय प्रत्यब्दमात्रकर्त्तव्यतया विधानेन । मघादिश्राद्धप्राप्तावपि । आदिना महालयादिश्राद्धपरिग्रहः । एतच्छ्राद्धस्य नित्यतया प्रतिवर्षकर्त्तव्यत्वात् । गतस्य स्वर्गतस्य औरसस्येतिक्षेत्रजस्यापि बोध्यम् । पार्वणविधिना श्राद्धकर्त्तृत्वे उभयोः साम्यात् । देवत्वं श्राद्धदेवत्वं त्रैपुरुषं पितृपितामहप्रपितामहरूपपुरुषत्रयविश्रान्तम् । अनेकगोत्राणामिति द्विगोत्राणां द्व्यामुष्मायणानां बहुवचनात् शुद्धदन्तकादीनामपि ग्रहणम् । क्षयाहपदोपादानादिति । अत्र क्षयाहश्रुतेः मृताहनिमित्तकश्राद्धमेव प्रतीयत इतिभावः । अनेकगोत्रपदमिति । मातामहादिपरमिति । तथा च अनेकगोत्रपदस्य विभिन्नगोतार्थकतया मातामहादिबोधकत्वमितिभावः । तस्य अनेकगोत्रपदस्य । औरसप्रतियोग्यनौरसपुत्रपरत्वस्य औरसेतरगौणपुत्रबोधेच्छया उच्चरितत्त्वस्य । एतेन अनेकगोत्राणामिति कर्त्तरि षष्ठी कर्त्तव्यपदाध्याहारेणास्यान्वयः । अन्यथा निरुक्तव्याख्यास्वीकारे । पुत्रेणेत्यादि । तथा च औरसपदप्रयोगे गौणपुत्रैः कीदृक् श्राद्ध कर्त्तव्यमित्याकांक्षोदयात् तन्निरासाय अनेकगोत्रपदानां गौणपुत्रार्थतैव स्यात् । पुत्रेणेत्यभिधाने तु पुत्रत्वेन साधारणपुत्रोपस्थितौ अनेकगोत्राणामित्यस्य वैयर्थ्यापत्त्या मातामहाद्यर्थकत्वसौलभ्यादिति भावः । प्रतिबद्धयन्तरमाह न चेति । नहीत्यर्थः । त्रयो मातामहप्रमातामहवृद्धप्रमातामहाः । तस्य पितृवदित्यस्य । नित्यताविधानपरत्वात् । तथा च—

स्यात्। इष्टापत्तिरिति चेन्न। मघादिष्वपि दत्तकादीनामेकोद्दिष्टापत्तेः। न चैतत्कस्यापीष्टम्। प्रत्याब्दिकशब्देन श्राद्धमात्रसंग्रहे शेषपदाभिधेय-श्राद्धान्तराभावेन पर्युदासासंम्भवात्। तस्मादौरसेन क्षयाहे मातापित्रोः पार्वणमेव कार्यम्। इतरैर्दत्तकादिभिरेकोद्दिष्टमेवेत्येव व्यवस्था साधीयसी-त्यलं विस्तरेण ॥ ७४ ॥

---

पितरो यत्र पूज्यन्ते तत्र मातामहाः ध्रुवम्।
अविशेषेण कर्त्तव्यं विशेषान्नरकं व्रजेत् ॥ इति।

नन्वेवंसति मृताहे विकृतपार्वणे कृते पितॄणां पूज्यत्वे मातामहानामपि पूज्यता स्यादित्यत आह किञ्चेति। कर्त्तुः पिण्डविन्यासस्थानविशेषः।

तद्युक्तं साग्निकर्त्तव्यान्वष्टकाश्राद्धं आद्य प्रधानं मुखमाद्यप्रधाने चेति कोशात्। एतत्तु षोडशविशेषणं षोडशं षोडशापूरणीभूतं। तेन सपिण्डीकरणं लक्ष्यते। प्रत्याब्दिकं प्रतिवर्षमृताहकर्त्तव्यविकृतिपार्वणश्राद्धं षडिति। एतत्त्रितयं त्यक्त्वा। अन्यत्र षट्पिण्ड-विधानात् साम्वत्सिरिके विकृतपार्वणेऽपि न मातामहादिश्राद्धावकाश इति भावः। एकोद्दिष्टापत्तेरिति। तथा च 'प्रत्यब्दपदस्य यदि प्रतिवर्षकर्त्तव्यश्राद्धसामान्यपरता स्यात् तदा प्रत्यब्दपार्वणेनैव' इत्यादि जातकर्णवचनेन औरसक्षेत्रजयोः पार्वणविधा-नादेव इतरेषां एकोद्दिष्टप्राप्तेरिति भावः। शेषपदाभिधेय इति। शेषेषु पिण्डाः स्युः षडिति स्थितिरित्यत्रेति शेषः। पर्युदासासम्भवादिति। तथा च प्रत्याब्दिकपदस्य मृताहकर्त्तव्यत्वरूपविशेषमपहाय अब्दकर्त्तव्यश्राद्धमात्रसंग्रहे कृष्णपक्षविहितमहालया-पार्वणस्यापि नित्यतया प्रत्याब्दिकत्वाविशेषादिति भावः। इदमुपलक्षणम्। कर्त्तृसमन्वितपदवैयर्थ्यापत्तिरपि बोध्यम्। उपसंहरति तस्मादिति। औरसेनेति। साग्निना अमावास्याप्रेतपक्षमृतमातापितृकेण निरग्निना चेति विशेषणद्वयं पूरणीयम्। एतच्च क्षेत्रजस्याप्युपलक्षणम्। प्रागुक्तवचनात्। पार्वणमेवेति। पित्रादित्रिकदैवत-मात्रादित्रिकदैवतपार्वणविधिकमेवेत्यर्थः ॥ ७४ ॥

तस्मिन् दत्तके इति। चतुर्थभागीति। चतुर्थभागैकभागार्ह इत्यर्थः। वङ्गदेशे तु जीमूतवाहनसन्दर्भात् दत्तकस्य तृतीयभागार्हतैव। स्त्रीधनेऽपि एषैव व्यवस्था। तथा च जीमूतवाहनधृतं देवलवचनम्—

औरसे पुनरुत्पन्ने तेषु ज्यैष्ठं न विद्यते।
तेषां सवर्णा ये पुत्रास्ते तृतीयांशभागिनः ॥ इत्यादि।

## अथ दत्तकविभागः[1]

तत्र वशिष्ठः:—तस्मिंश्चेत्प्रतिगृहीत औरस उत्पद्येत चतुर्थभागभागी स्याद् दत्तक इति। तदभावे तु सर्वहरः।

इति श्रीधर्माधिकारिरामपण्डितात्मजश्रीनन्दपण्डितविरचिता
दत्तकमीमांसा समाप्ता।

---

तदभावे-औरसाभावे।

अत्र वङ्गदेशीयशास्त्रानुसारे पितृनिधनकालीनजीवनस्य पुत्रादिस्वामित्वकारणत्वे यद्यपि पत्यनुमतौ दत्तकग्रहणस्थले भर्तृमरणानन्तरमेवाधिकारितया पत्न्याः स्वामित्वसम्भावनायां दत्तकस्य पश्चाद्गृहीतस्य स्वामित्वं नोपपद्यते, तथाऽपि पत्नीतः पुत्रस्याभ्यर्हितत्वेन दत्तकग्रहणप्रागभावविशिष्टपत्यनुमतेः प्रतिबन्धकत्वमवश्यं वाच्यम्। जन्मस्वत्ववादिमते तु जन्मध्वंसस्य हेतुत्वान्नानुपपत्तिरिति। यत्र तु द्वित्र्यादिदत्तकग्रहणे अनुमतिरस्ति, तत्र प्रथमगृहीतस्य पुत्रादिसत्त्वे तेनैव पिण्डोदकाद्युपपत्तौ न दत्तकान्तरं ग्राह्यम्। दत्तकस्य पत्नीमात्रसत्त्वे दत्तकानुमत्यैव तत्पत्न्या दत्तको ग्राह्यः। अथ यद्यपि अनुमतिमदत्त्वैव प्रथमदत्तके मृते तत्पत्न्या दत्तकग्रहणाप्रसक्तौ पिण्डोदकाद्यर्थं दत्तकमात्रा स्वभर्त्रनुज्ञया अपरदत्तको ग्रहीतुं शक्यते, तथापि पूर्वदत्तकपत्नीसत्त्वपर्यन्तं द्वितीयदत्तकस्य धनभागित्वं नोपपद्यते, परन्तु मातृपर्यन्ताभावे भ्रातृत्वेनाधिकारः कल्प्यः। यत्र तु द्वित्र्यादिपत्नीसत्त्वे सर्वाभ्योऽनुमतिं दत्त्वा धनी म्रियते। अनन्तरं एकदा कालभेदे वा द्वित्र्यादयो गृहीतास्ते च यथा कथञ्चिच्छास्त्रसिद्धा अपि राजशासनविरुद्धाः। कालभेदस्थले तु प्रथमगृहीत एव राजसम्मतः। इत्यास्तामलमतिविस्तरेण।

इति श्रीमधुसूदनस्मृतिरत्नविरचिता दत्तकमीमांसाविवृतिः समाप्ता॥

---

१. अथ दत्तकविभागः। तत्र वशिष्ठः—'तस्मिंश्चेत्प्रतिग्रहीत औरस उत्पद्येत चतुर्थभागभागी स्याद्दत्तक इति। तदभावे तु सर्वहर इति।

उपरितने प्रतीकद्वये नन्दपण्डितानां दत्तकपुत्रस्य धनाधिकारविषयकाणि मतानि निर्दिष्टानि। अतः प्रतीकद्वयस्यैकत्रैव व्याख्यानं युक्तं मन्ये।

'गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा'॥

एतस्मान्मनुवचनाद्दत्तकपुत्रे जनकपितुर्गोत्रधनपिण्डाधिकाराणां व्यावृत्तिर्भवतीति प्रतीयते। तेन दत्तकः पुत्रः स्वजनककुलीयस्य कस्यापि धनग्रहणाधिकारी न भवतीति सिद्धम्। अथ च—

तस्मिञ्जाते सुते दत्ते न कृते च विधानके।
तत्स्वं तस्यैव वित्तस्य यः स्वामी पितुरञ्जसा॥

एतद्वृद्धगौतमवचनात्, तथा—

दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता।
पञ्चमी सप्तमी तद्वत् गोत्रं तत्पालकस्य च॥

एतद्बृहन्मनुवचनात्, तथा—

'न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः।' (मनुस्मृतिः ९।१८५)। इत्यादि-मनुवचनाच्च दत्तकपुत्रे प्रतिग्रहीतृगोत्रधनयोः सम्बन्ध उत्पद्यते। एतद्विषये शङ्काग्रहणस्यावसर एव नास्ति। यतो दत्तकपुत्रग्रहणसम्बन्धेन योऽयं महान् प्रयासोऽङ्गीकृतः, स आत्मनः पश्चात्स्वौर्ध्वदेहिकाधिकारी स्वधनग्रहणाधिकारी च कश्चित्स्यादेतदर्थमेव। दत्तकविधिश्च शास्त्र-सिद्धः। एतावतैव दत्तकपुत्रः प्रतिग्रहीतृपितुर्गोत्ररिक्थे गृह्णातीति स्पष्टं भवति।

आधुनिकन्यायालयैरपि राजनियमानुसारिदत्तकविधानादनन्तरं सोऽयं दत्तकपुत्रो जनक-पितृकुलात् पुनरावृत्तिरहितं निवृत्तो भवति, प्रतिग्रहीतृकुले च तथैव प्रविशति चेति निर्णयोऽदायि। जनककुले सपद्येकत्रकुटुम्बगत एको घटकावयवः स्यात्तर्हि तादृशकुटुम्बवर्तिन्येका व्यक्तिरिति कृत्वा तस्य यावन्तो धनाद्यधिकाराः प्राप्तुं योग्या आसन् ते सर्वेऽधिकारास्तस्य नष्टा भवन्ति। तथैव प्रतिग्रहीतृकुल औरसपुत्रवदेव तस्य व्यावहारिकाधिकाराः (हक्क) शास्त्री-याधिकाराश्च समुत्पद्यन्ते। अर्थात्स स्वप्रतिग्रहीतृपितुर्धनग्रहणाधिकारी भवति। नैतावदेव, किंतु पितामहप्रपितामहयोरपि धनं दत्तकपुत्रो लब्धुं शक्नुयात्। तथैव प्रतिग्रहीतृपितुर्भ्राता वा पितृव्यो वा विभक्तश्च सगोत्रसपिण्डो वा कश्चित्स्याच्चेत्तन्मरणानन्तरं तद्धनग्रहणाधिकारो दत्तकस्यौरसपुत्रवदेवास्ति (पद्माकुमारी वि० कोर्ट आफ वार्डस् ८ इं० अ० २२९)। प्रति-ग्रहीत्री या माता तस्या अयं दत्तकः पुत्रः एवेति कृत्वा तत्स्त्रीधनविषयेऽप्ययं दत्तकोऽधिकारी भवेत्। नैतावदेवापि त्वेकस्मिन् विवादनिर्णयदानप्रसङ्ग एवं निरणायि—यदि दत्तकविधानसमये प्रतिग्रहीत्रा एका भार्या, इयं दत्तकमातेत्यभिप्रायेण स्वसमीप उपवेशिता, ततः प्रथमभार्यामरणा-नन्तरं द्वितीयभार्यायाः सकाशादेक औरसपुत्रः संजातः, अग्रे द्वितीयभार्यामरणानन्तरं तेन तृतीयभार्या कृता, तदनन्तरं तृतीयभार्याऽपि यदा मृता तदा तृतीयभार्याया दत्तक औरसश्चेत्युभौ सापत्नपुत्रावित्यवगम्योभयोरपि तादृशस्त्रीधनस्य समानांशग्रहणाधिकारित्वं सुनिश्चितम-

कारि ( गंगाधर वि० हिरालाल ४३ कलकत्ता ९४४ )। तथैव प्रतीग्रहीत्र्या मातुः पितुर्वा तद्भ्रातुर्वाऽन्यस्य कस्यापि मातामहकुलीयस्य वा धने दत्तकपुत्रोऽयं बन्धुत्वसम्बन्धेनाधिकारी भवेत्। अथ च तेऽप्यस्य दत्तकस्य धनग्रहणाधिकारिणो भवेयुः ( दत्तात्रय वि० गंगाबाई ४६ मुंबई ५४१ )। नैतावदेव, तर्हि केनचिदेकेन पुरुषेण स्वभार्यामरणानन्तरं दत्तकः पुत्रो गृहीतश्चेत्स तस्या मृतभार्यायाः पुत्र इति विज्ञायते। अथ च मृतभार्यापितृकुलीयानां संबन्धिनां ( नातलग ) धनादि, तद्बन्धुरयं दत्तक इति हेतोर्दत्तकनिकटे दायाधिकारित्वेन रूपेणाऽऽगन्तुं शक्यते ( सुंदरम्मा वि० व्यंकटसुब्बा ९ मद्रास ९४१ )। केनचिदेकेन स्वविवाहभवनात्प्राग्दत्तकः पुत्रः स्वीकृतोऽनन्तरं च स्वविवाहः कृतः, तस्यां भार्यायां यदि तस्मादौरसपुत्रो नैवोत्पद्येत तर्हि साऽपुत्रा भार्या तस्य दत्तकपुत्रस्य पालकमातेति गृहीतं धर्तुं न कोऽपि प्रतिबन्धोऽस्ति। कस्यचिदेकस्यैकापेक्षयाऽधिका भार्याः स्युः, अथ च दत्तकविधिसमये स यां भार्यां स्वसन्निधौ गृह्णीत्तस्या एव तादृशपुत्रनिरूपितं भ्रातृत्वं मातृत्वप्रयुक्ताधिकाराश्च प्राप्नुवन्ति, ततः पालकपितृमरणानन्तरं स दत्तकपुत्रः पालकपितुर्धनग्रहणे पूर्णाधिकारी संजातस्तथाऽपि दत्तकपुत्रमरणानन्तरं तद्धनं सर्वं, तदितरमातृद्वये जीवत्यपि या दत्तकविधानकाले पालकमातेत्युद्देशेन पालकपित्रा स्वसंनिधावुपवेशिताऽभूत्तदधीनमेव जायते। इतरमातृद्वयस्यान्नवस्त्रव्यतिरिक्तं मृतदत्तकपुत्रधने कियानप्यधिकारो नास्ति ( अन्नपूर्णा वि० फोर्ब्स २६ इं० अ० २४६ )। यदि दत्तकविधानकाले काऽप्येकाऽपि भार्या स्वसंनिधौ नोपविशताऽभूत्तर्हि तस्य ज्येष्ठभार्या दत्तकमातेति विज्ञायेत, सैव च मृतदत्तकपुत्रधनं सर्वं गृह्णीयादेव।

जनककुले पितृधनविभागस्य जातत्वाद्येन स्वांशः स्वायत्तीकृतः स यदि कस्यचिद्दत्तकपुत्रः संपन्नस्तर्हि पूर्वमेव स्वायत्तीकृतधनगतं तत्स्वाम्यं 'दत्तकपुत्रत्वं गतः' इत्यस्मात्कारणान्नैव नश्यति ( महाबलेश्वर वि० सुब्रह्मण्य ४७ मुंबई ५४२ )। मद्रास– कलकत्ताप्रदेशे मान्यतयेत्थं गृहीतम्–यदि कस्मिंश्चिदेकस्मिन् कुटुम्बे ( कुले ) एक एव पुरुष उर्वरित इति हेतोस्तत्कुटुम्बीयाः सर्वे धनांशाः, अवशिष्टैकपुरुषस्वाम्यं प्राप्ताः, तदनन्तरं स पुरुषो यदि दत्तकत्वेनापरकुले दत्तस्तर्ह्यपि जनककुलीयसर्वधनांशगतं तत्स्वाम्यं न नष्टं भवति ( व्यंकटनरसिंह वि० रंगय्या २९ मद्रास ४३७, श्यामचरण वि० श्रीचरण ५६ कलकत्ता ११३५)। परन्तु मोहमयीयन्यायालयेनैवं गृहीतं धृतम्—यत्पूर्वोक्तायां परिस्थितौ सत्यां जनककुलीयधनांशगतमवशिष्टैकपुरुषस्वाम्यं नष्टं भुत्वा तादृशपुरुषस्य तत्कुटुम्बसंबन्धिनो विभक्ता दूरस्था ये सपिण्डसोदकादयस्तेषां निकटे तद्धनस्वाम्यं गच्छेदिति ( दत्तात्रय वि० गोविंद ४० मुंबई ४२९ )।

दत्तकत्वेन परगृहे प्रवेशे सति तस्य दत्तकस्य जनककुलेन सह विद्यमानः सर्वः सबन्धस्त्रुट्यतीत्युपर्युक्तम्। मोहमयीमहाप्रदेशमण्डले ( मुम्बई इलाका ) विवाहितोऽपि दत्तको भवितु-

मर्हति । एतादृशस्थले विवाहितस्य यदि काचित्संततिः स्याद्दत्तकीभवनात्प्राग्जाता । तर्हि सा जनककुल एवावतिष्ठते । तस्याः संततेर्जनककुलीयं गोत्रं न नश्यति । दत्तकत्वेन प्रवेशानन्तरं या संततिः स्यात्, अथवा दत्तकभार्यायां कुक्षिस्थो गर्भः स्यात् स च दत्तकत्वेन प्रवेशानन्तरं जन्म प्राप्नुयात् । साऽसौ संततिः, दत्तकभार्या चेत्येते सर्वे दत्तकेन सह प्रतिग्रहीतृकुले प्रविशन्ति (कलगोडा, वि० सोमप्पा- ३३ मुंबई ६६९ अदिवी वि० फकिराप्पा ४२ मुंबई ५४७) ।

इतः पर्यन्तं प्रतिग्रहीतृपितुः प्रतिनिधिरूपो दत्तकाख्य एक एव पुत्रः स्यात्तदा तत्पुत्रस्य स्थानाधिकारयोश्चर्चा पर्यवसन्ना । अधुना दत्तकग्रहणानन्तरं प्रतिग्रहीतुर्यद्यौरससंततिः स्यात्तर्हि 'दत्तकस्य कीदृशोऽधिकार इति विचारणीयं भवति । तत्रैवं वसिष्ठः—'तस्मिंश्चेत्प्रतिगृहीत औरस उत्पद्येत चतुर्थभागभागी स्याद्दत्तकः' इति । पश्चादुत्पन्नौरसपुत्रसद्भावे पूर्वग्रहीतदत्तकस्य स्वधनचतुर्थो भागो देय इति तदर्थः । परन्तु 'चतुर्थभाग' इति शब्दाद् भिन्न-भिन्नप्रदेशेषु भिन्नभिन्ना निर्णया अदायिषत । बंगालप्रान्ते दायविभागग्रन्थमनुसृत्य दत्तकपुत्रोऽयं ( $\frac{1}{3}$ ) एकतृतीयांशाधिकारी, औरसश्च ( $\frac{2}{3}$ ) तृतीयांशद्वयाधिकारीति निर्णीतम् । बनारसप्रान्त औरसः पुत्रः ( $\frac{3}{4}$ ) त्रींश्चतुर्थांशान् लभते, दत्तकस्त्वेकं चतुर्थांशम् ( $\frac{1}{4}$ ) । मोहमयीमद्राख्यप्रान्तयोरौरसः ( $\frac{4}{5}$ ) चतुरः पञ्चमांशान् गृह्णाति, दत्तकश्च ( $\frac{1}{5}$ ) एकं पञ्चमांशम् । गिरीयप्पा वि० निंगप्पा १७ मुंबई १००, अय्यवू० वि० नीलच्ची १ मद्रास हा० को० ४५) । सोऽयं विभागविचारस्त्रैवर्णिकसंबन्धेन जातः । शूद्रस्य दत्तकग्रहणानन्तरमौरसे जाते बनारसमद्रासबंगालैतत्प्रान्तेषु दत्तकौरसपुत्रयोरुभयोः समानो धनविभागो भवति ( पीरजू वि० सुब्बाराय ४८ इं० अ० २८०, असित वि० निरोध २०कलकत्ता वी०नी० ९०१) । मुंबई प्रान्ते तु शूद्रसमाजमध्येऽपि त्रैवर्णिकवच्छूद्रीयदत्तकपुत्रस्यापि ( $\frac{1}{5}$ ) एकः पञ्चमांशो वण्टको लभ्यते ( $\frac{4}{5}$ ) चतुरः पञ्चमांशान् पश्चादुत्पन्न औरसो लभते ( तुकाराम वि० रामचन्द्र ४९ मुंबई ६७२ ) । दत्तकग्रहणादनन्तरमेक एवौरसश्चेदियं व्यवस्था । परमेकापेक्षयाऽधिका औरसाः स्युश्चेदुपर्युक्तवत्तेषां विभागैर्भाव्यम् । उदाहरणम्—बंगालप्रान्तीयस्यैकस्य गृहस्थस्य दत्तकग्रहणादनन्तरं द्वावौरसपुत्रावुत्पन्नौ चेत् समग्रपितृधनस्य समान् सप्तविभागान् प्रकल्प्य तन्मध्ये ( $^{1}/_{7}$ ) एकः सप्तमांशो दत्तकेन ग्राह्यः । अवशिष्टानां षण्णां सप्तमांशानां मध्ये प्रत्येकमौरसेन ( $^{3}/_{7}$ ) ( $^{3}/_{7}$ ) त्रयस्त्रयः सप्तमांशा ग्राह्याः । एवंप्रकारिका द्रव्यविभक्तिर्जायते । मोहमयीमध्ये यद्ययं निरुक्तः प्रकारो घटित्वाऽऽगतश्चेत् । ( $\frac{1}{11}$ ) एक एकादशांशो दत्तकाय दद्या द्वाभ्यामौरसाभ्यां प्रत्येकं पञ्च पञ्च एकादशांशाः ( $\frac{5}{11}$ ), ( $\frac{5}{11}$ ) ग्राह्या भवेयुः । सोऽयं सर्वो धनव्यवस्थाविचारः १९३८ सनीयात हिन्दुस्त्रीणां धनग्रहणाधिकारविषयकाद्राजनियमप्रबन्धात् प्राक्कालिकत्वेन संजातः । तादृशनियमप्रबन्धस्य राजसंमतिलाभादनन्तरमिदानीमत्र विषये बहवो विशेषाः प्रकल्प्याः स्युः ।

तेषां सामान्यतः स्वरूपं यथा—तादृशनियमप्रबन्धस्य राजसंमतिप्राप्त्यनन्तरमधुना हिन्दुस्त्रीणां पुत्र-सद्भावेऽपि पत्युर्धनविषये पुत्रसमाः, यावत् पुत्राधिकारं पुत्राभावे भर्तृसमा यावद्भर्त्रधिकार-मधिकारा अदायिषत। ततश्च यद्येकेन केनचिदहमपुत्रोऽस्मीति मत्वा दत्तको गृहीतस्तर्हि प्रति-ग्रहीतृमरणानन्तरं सर्वं तद्धनं दत्तकपुत्रस्य न लब्धं भविष्यति। अपि त्वर्धं धनं दत्तकस्यार्धं च भार्यया लब्धं भविष्यतीत्यर्थः। यद्यनेका भार्याः स्युस्तदा तदर्धं द्रव्यं समं विभज्य सर्वाभिर्ग्राह्यम् सोऽयमधिकार इतरेषां स्वसंबन्धिनां धनग्रहणविषये नास्तीत्यतो यदि दत्तकस्य प्रतिग्रहीतृभ्रातुः सकाशाद्दायविभागो लभ्येत तर्हि तादृशधने विधवाया मातुर्न कियानप्यधिकारः।

सोऽयमीदृशोऽधिकारो राजन्यायालयप्रणीतनियमानुसारेण न केवलं पुरुषस्यैव विधवाया स्त्रिया दत्तोऽपि तु तदीयमृतपुत्रस्य विधवायाः स्त्रियाः, मृतपौत्रस्य विधवास्त्रियाश्च दत्तो-ऽस्ति। ततश्च तेषां धनग्रहणाधिकारा अपि विचारेऽवश्यं ग्राह्याः स्युः। तथैव दत्तकग्रहणा-नन्तरमौरस उत्पन्ने सति दत्तकस्य धनग्रहणाधिकारा न्यूनी भवन्ति। प्रतिग्रहीतुर्विधवा स्त्री जीवन्ती स्याच्चेत्तदधिकाराणां यावत्पुत्राधिकारत्वनियमात् दत्तकपुत्रस्याधिकाराः पूर्वापेक्षयाऽप्यधिकं न्यूनी भवेयुरिति स्पष्टमस्ति।

दत्तकपुत्रः समानश्चेत्तेन सह केचिन्नियमबन्धं कृत्वा प्रतिग्रहीत्रा दत्तकी भविष्यतः पुत्रस्य धनग्रहणसंबन्धो नोत्पत्स्यमानाधिकारविषये यथेष्टं न्यूनाधिक्यं कर्तुं शक्यम् ( काशीबाई वि० तात्या ४० मुंबई ६६८)। कस्मिंश्चिदेकस्मिन् विवादे प्रिवीकौन्सिलाख्यसर्वश्रेष्ठन्यायालयेनैव-मपि गृहीतं धृतम्—दत्तकी भविष्यन् पुत्रोऽज्ञानी चेज्जनककुलीयेन तत्पालकेन दत्तकस्य ग्राहकेण ग्राहिकया वा समं नियमबन्धं कृत्वा दत्तकस्य ग्राहिकाया ग्राहकपुरुषस्य भार्याया वा जीवनकालपर्यन्तं सर्वधनादेरुपभोगस्तया स्त्रिया ग्रहीतव्यः पश्चाच्च दत्तकेन तदुपभोक्तव्यम्, इत्येवं प्रतिग्रहीतृकुलीयधन उत्पत्स्यमाना दत्तकस्याधिकारा मर्यादिताः कर्तुं शक्यन्ते। एतद-पेक्षया, अज्ञानिनो दत्तकपुत्रस्य धनग्रहणविषयका अधिकारा जनककुलीयपालकस्य मर्यादिताः कर्तुमशक्याः ( कृष्णमूर्ति वि० कृष्णमूर्ति ५४ इं० अ० २४८ )।

धर्मशास्त्रमीमांसाविभागाध्यक्षेण प्रो० श्रीराजेन्द्रप्रसादपाण्डेयेन सम्पादिता
मधुसूदनीविवृतिसहिता नन्दपण्डितविरचिता दत्तकमीमांसा
समाप्ता।



# ग्रन्थोद्धृतश्लोकानुक्रमणिका ।

## प्राच्यविद्याधर्मविज्ञानसंकाय ( का० हि० वि० वि० ) के प्रकाशन

| | | |
|---|---|---|
| १. गीताव्याख्यानमाला भाग १–३ | .... | म० म० पं० गिरिधर शर्मा चतुर्वेदी |
| २. प्रौढमनोरमा बृहच्छब्दरत्नलघुशब्दरत्नसहिता भाग १ | .... | डॉ० सीताराम शास्त्री |
| ३. ” ” भाग २ | .... | ” ” ( यन्त्रस्थ ) |
| ४. प्रकरणपञ्चिका | .... | श्री पं० ए० सुब्रह्मण्य शास्त्री |
| ५. सामतन्त्रम् | .... | श्री पं० ए० एम० रामनाथ दीक्षित |
| ६. रसगङ्गाधरः ( सम्पूर्ण ) | .... | श्री पं० मधुसूदन शास्त्री |
| ७. सिद्धान्तशिरोमणिः ( सम्पूर्ण ) | .... | श्री पं० केदारदत्त जोशी |
| ८. ब्रह्मसूत्रविज्ञानामृतभाष्यम् | .... | श्री पं० केदारनाथ त्रिपाठी |
| ९. कालिदास-ग्रन्थावलिः | .... | डॉ० रेवा प्रसाद द्विवेदी |
| १०. काव्यप्रकाशः-साहित्य-चूड़ामणि-सुधासागरव्याख्यालङ्कृतः | .... | डॉ० रेवा प्रसाद द्विवेदी ( यन्त्रस्थ ) |
| ११. शुक्लयजुर्वेदप्रातिशाख्यम् ( हिन्दीव्याख्यासहितम् ) | .... | श्री पं० जगन्नाथ त्रिपाठी ” |
| १२. सिद्धान्तशिरोमणिः [गणिताध्यायः] वासनाभाष्य-विज्ञानभाष्य-हिन्दीव्याख्यासमन्वितः | | डॉ० राजमोहन उपाध्याय (यन्त्रस्थ) |

प्राप्तिस्थान—काशी हिन्दू विश्वविद्यालय प्रेस, वाराणसी–५

